


श्रीः

वेदान्तग्रन्थरत्नमाला. २.

श्रीमहाभारतान्तर्गत-

# श्रीमद्भगवद्गीता

## तृतीयषट्कम्.

श्रीरामानुजभाष्येण, तद्व्याख्यया श्रीकवितार्किकसिंह-
सर्वतन्त्रस्वतन्त्र श्रीमद्वेदान्तदेशिकविरचितया
तात्पर्यचन्द्रिकया, श्रीशङ्करभाष्येण, श्री-
मदानन्दतीर्थभाष्येण, जयतीर्थमुनि-
विरचितया तद्व्याख्यया च
अनुगतम्.



श्रीमदित्यादि श्रीशैलाद्दङ्कि लक्ष्मीनृसिंहकुमार-
कुमारताताचार्यकविभूषणैः प्रत्यवेक्षितम्.
अयोध्या - रामानुजसंयमिभिः प्रसादित-
प्रमाणाकरविशिष्टम्.
श्री.अ.वी. नरसिंहाचार्य, ति. चे. नरसिंहाचार्याभ्यां
परिशोधितम्.

---

इदञ्च
आर्. वेङ्कटेश्वरसभाध्यक्षैः स्विकायाम्
आनन्दमुद्राशालायां मुद्रितं
विजयताम्.
1911.




ANANDA PRESS, MADRAS.

VOL. III. 

श्रीः

# श्रीमद्भगवद्गीतायास्तृतीयषट्कश्लोकानामकारादिक्रमः.



# त्रयोदशोऽध्यायः.



रा॥**पूर्वस्मिन् षट्के परमप्राप्यस्य परस्य ब्रह्मणो भगवतो वासुदेवस्य प्राप्त्युपायभूतभक्तिरूपभगवदुपासनाङ्गभूतं प्राप्तुः प्रत्यगात्मनो याथात्म्यदर्शनं ज्ञानयोगकर्मयोगलक्षणनिष्ठाद्वयसाध्यमुक्तम्।मध्यमेच परमप्राप्यभूतभगवत्तत्त्वयाथात्म्यतन्माहात्म्यज्ञानपूर्वकैकान्तिकात्यन्तिकभक्तियोगनिष्ठा प्रतिपादिता। अतिशयितैश्वर्यापेक्षाणामात्मकैवल्यमात्रापेक्षाणां च भक्तियोगस्तत्तदपेक्षितसाधनमिति चोक्तम्। इदानीमुपरितनषट्के प्रकृतिपुरुषतत्संसर्गरूपप्रपञ्चेश्वरयाथात्म्यकर्मज्ञानभक्तिस्वरूपतदुपादानप्रकाराश्च षट्कद्वयोदिता वि-**

**ता**॥अथ तृतीयषट्कसंगतिं वक्तुं प्रथमद्वितीयषट्कार्थं संग्रहेणाह—**पूर्वस्मिन्निति**।अत्र पदानां भावः प्राक्प्रपञ्चितः। 'ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते। आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते' इति प्रथमषट्कार्थसंग्रहः। सिषाधयिषितपर्यन्ताविच्छिन्नसाधनानुष्ठानम् इह निष्ठा। 'मध्यमे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये। ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः' इति संग्रहानुसारेण **मध्यमषट्कप्रधानार्थमुक्त्वा प्रसङ्गोक्तं चाह—अतिशयितेति**।**इतिचेति** चकारोऽन्वाचयार्थः।इदंचान्ते संगृहीतं—'भक्तियोगस्तदर्थी चेत्समग्रैश्वर्यसाधनम्। आत्मार्थीचेत्त्रयोऽप्येते तत्कैवल्यस्य साधकाः' इति। 'प्रधानपुरुषव्यक्तसर्वेश्वरविवेचनम्। कर्मधीर्भक्तिरित्यादिः पूर्वशेषोऽन्तिमोदितः' इति सङ्ग्रहश्लोकव्याख्यानाभिप्रायेण तृतीयषट्कं पूर्वोक्तषट्कद्वयेन संगमयति—**इदानीमिति**। इदानीं सामान्यतः प्रतिपत्त्या बुभुत्सोदयेन विशोधनावसरे प्राप्त इत्यर्थः। **तत्संसर्गरूपप्रपञ्चेति** व्यक्तशब्दार्थविवरणम्। संसर्गोऽत्र समुदायः;यद्वा,'तस्मिन् गर्भं दधाम्यहम्। संभवस्सर्वभूतानां ततो भवति'इति संसर्गविशेषमूलत्वात्संसर्गरूपतोक्तिः। याथात्म्यशब्देन विवेचनशब्दाभिप्रेतकथनम्। विविच्यतेऽनेनेति व्यावर्तकधर्मोऽत्र विवेचनम्।**तदुपादानप्रकारा**इति आदिशब्दसंगृहीतोक्तिः।**षट्कद्वयोदिता वि-**

**प्र-पा** ॥ १. गी. सं २॥ ३. गी. सं २७॥
२. गी. सं. ३॥ ४. गी. सं. ४॥ ५ गी १४-३॥

शं॥**सप्तमे अध्याये द्वे प्रकृती सूचिते परमेश्वरस्य. त्रिगुणात्मिका अष्टधा भिन्ना अपरा संसारहेतुत्वात्. परा च अन्या जीवभूता क्षेत्रज्ञलक्षणा ईश्वरात्मिका; याभ्यां प्रकृतिभ्याम् ईश्वरः जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते। तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण तद्वतः ईश्वरस्य तत्त्वनिर्धारणाय क्षेत्राध्यायः आरभ्यते। अतीतानन्तराध्याये च 'अद्वेष्टा सर्वभूतानाम्' इत्यादिना यावत् अध्यायपरिसमाप्तिः तावत् तत्त्वज्ञानिनां संन्यासिनां निष्ठा यथा ते वर्तन्ते इत्येतत् उक्तम्।केन पुनः ते तत्त्वज्ञानेन युक्ताः यथोक्तधर्माचरणात् भगवतः प्रिया भवन्तीति? एवमर्थश्च अयम् अध्यायः आरभ्यते। प्रकृति-**

रा॥त्रयोदिता विशोध्यन्ते।तत्र तावत् त्रयोदशे-देहात्मनोस्स्वरूपं,देहयाथात्म्यशा
वियुक्तात्मप्राप्त्युपायो, विविक्तात्मस्वरूपसंशोधनं, तथाविधस्यात्मनश्चाचित्सम्बन्
स्ततो विवेकानुसन्धानप्रकारश्चोच्यते—

**श्रीभगवानुवाच—**

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥

ता॥**शोध्यन्त**इत्यनेन'पूर्वशेषोऽन्तिमोदितः'इत्येतदभिप्रेतसंगतिविशेषविवरणम्।**विशोध्यन्तइ**
नं वक्ष्यमाणस्य सर्वस्य सामान्यतः पुनरुक्तिपरिहारार्थम्।आभिप्रायिकानुक्तापेक्षितांशप्रतिपाद
क्तानां सर्वप्रकारेण निस्संशयीकरणं विशोधनम्। अथ 'देहस्वरूपमात्माप्तिहेतुरात्मविशोधन
हेतुर्विवेकश्च त्रयोदश उदीर्यते' इति संग्रहश्लोकमपि व्याकुर्वंस्त्रयोदशमवतारयति—**तत्रत**
**तत्र**-तृतीयषट्के वक्तव्ये,**तावत्**-प्रथममित्यर्थः। तेनाध्यायान्तरेभ्यो वक्ष्यमाणेभ्यः पञ्चभ्योऽ
संगतिविशेषसिद्धमित्यभिप्रेतम्। तथाहि—प्रथमषट्कं हि शास्त्रोपोद्घातशास्त्रावतरणहेतुभूत
तंकात्मदर्शनपरद्विकेन आत्मदर्शनस्यैव साधनप्रपञ्चनपरचतुष्केणच भिन्नम्। द्वितीयंच षट्
नाधिकारिफलादिभेदपरिकरितभक्तियोगस्वरूपपरेण तदुत्पत्तिविवृद्ध्यर्थपरेणच त्रिकभेदेन
तथा तृतीयं च षट्कं त्रिकद्वयात्मकम्। तत्र प्रथमत्रिकं प्रधानपुरुषव्यक्तसर्वेश्वररूपतत्त्वविवे
तत्र प्रसङ्गेन तु मात्रया कर्तव्यानुप्रवेशः। षोडशादित्रिकं कर्तव्यादिविवेचनपरम्। तत्रापि
सञ्ज्ञान्मात्रया तत्त्वानुप्रवेशश्शास्त्रवश्यत्वादिविवेकोऽपि हि कर्तव्यमिद्ध्यर्थमेव। एवं
विवक्षित इति षोडशारम्भे दर्शयिष्यति—'अतीतेनाध्यायत्रयेण' इत्यादिना।अत्र 'प्रधानपुरु
वेश्वरविवेचनम्' इति समासपदेन प्रथमत्रिकार्थस्संगृहीतः। १'कर्मधीर्भक्तिरित्यादिः' इ
व्यरूपद्वितीयत्रिकार्थस्संगृहीत इति भाष्यकाराभिप्रायः।एतेन'समाप्तंच पञ्चदशेऽध्याये शास्त्रं
स्त्रिभिः खिलाध्यायैः परिशिष्टा नानाधर्मा निरूपिताः'इति यादवप्रकाशकल्पनापि निरस्ता।अत्र
त्रयोदशचतुर्दशाभ्यां 'गतासूनगतासूंश्च' इत्यादिना क्रमेण देहात्मविवेकादिमुखेन प्रवृ
षट्कार्थशेषभूतदेहात्मयाथात्म्यसंसारतन्निवृत्तितन्निवर्तकादि परिशोध्यते। पञ्चदशेन तु मध्यम
प्रतिपादितद्विविधप्रकृतिशेषिभूतचतुर्विधाधिकारिभजनीयपरमपुरुषपरिशोधनं क्रियते। इमंच भेदं पञ्च
दशारम्भे सूचयिष्यति—'क्षेत्राध्याय' इत्यादिना।क्षेत्राध्यायप्रसक्तबन्धहेतुगुणसङ्गस्य बन्धहेतुताप्रकार
तन्निवृत्त्यादिपरतया 'परं भूयः' इत्यादेः अध्यायस्य पश्चाद्भावित्वं सिद्धम्। ततः क्षेत्राध्यायस्य तृतीयष-
ट्कादित्वं युक्तमिति तदेतदखिलमभिप्रेत्य—**तत्र तावत्त्रयोदश** इत्युक्तम्। **देहात्मनोस्स्वरूपं
देहयाथात्म्यशोधनमिति**-अध्यायशरीरपर्यालोचनेन संग्रहश्लोकेऽनुक्तस्यापि चकारसमुच्चितस्योक्तिः।
देहस्वरूपमिति तत्प्रतिसंबन्ध्यात्मस्वरूपस्याप्युपलक्षणार्थम्।'आत्मविशोधनम्'इति संग्रहश्च देहयाथात्म्य-
शोधनस्याप्युपलक्षणम्। **देहात्मनोस्स्वरूप**मिति धर्मनिर्देशो विवक्षितः। विवेकशब्देन च न वि-
विच्य प्रतिपादनमात्रं भेदमात्रं वा विवक्षितम्, 'आत्मविशोधनम्' इत्यनेनैव गतार्थत्वात्। 'ध्याने-
नात्मनि पश्यन्ति' इत्यादिना द्रष्टव्यत्वेन निर्दिष्टस्यात्मनः 'समं सर्वेषु' इत्यादिना स्वयं विविच्यानुसं-
धानप्रकारो हि वक्ष्यते। तदाह—**ततो विवेकानुसन्धानप्रकारश्चेति**। अथ 'गतासूनगतासूंश्च'

**प्र-पा** ॥ १. गी. सं. ४॥ २. गी. सं १७॥ ३. गी-भा-१६-अ.अवतारिका॥ ४. गी २-११॥ | ५. गी. भा १५-अ. अवतारिका॥ ६. गी. १३-२४ ७. गी-१३-२७॥

॥सन्निधानादेव मूढाः प्रकृत्याकारमेव वेदितारं पश्यन्ति; तथाच वक्ष्यति *'उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम्।विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः' इति॥१॥

क्षेत्रज्ञश्चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २

**देवमनुष्यादिसर्वक्षेत्रेषु वेदितृत्वैकाकारं क्षेत्रज्ञं च मां विद्धि-मदात्मकं विद्धि;'क्षेत्रज्ञं चापि'इति अपिशब्दात् क्षेत्रमपि मां विद्धीत्युक्तमिति गम्यते।यथा क्षेत्रं क्षेत्रज्ञविशेषणैकस्वभावतया तदपृथक्सिद्धेः तत्सामानाधिकरण्येनैव निर्देश्यं,तथा क्षेत्रं क्षेत्रज्ञं च मद्विशेषणतैकस्वभावतया मदपृथक्सिद्धेः मत्सामानाधिकरण्येनैव निर्देश्यौ विद्धि;पृथिव्यादिसङ्घातरूपस्य क्षेत्रस्य क्षेत्रज्ञस्यच भगवच्छरीरतैकस्वरूपतया भगवदात्मकत्वं श्रुतयो वद-**

॥तस्याशुद्धस्य देहव्यावर्तकपरिमाणादिविशिष्टत्वेन ग्रहणाशक्तेः। न तृतीयः, असिद्धेः। अतिरिक्ततया ग्रहणार्थमेव हि योगोपदेशः । तथाच योगिनामुपलम्भः । अतो यथा गृह्यमाणयोरेव क्षीरनीरद्रव्ययोर्न्यूनाधिकसमभावेन संसर्गविशेषेषु क्षीरत्वेन नीरत्वेनवोपलम्भः; तद्वदत्रापि गृह्यमाणयोरेव देहात्मनोः सन्निधिविशेषवशेन रजस्तमोवृद्धिहेतुकर्मवशेनच भेदाग्रहादैक्याध्यास इति निर्णीतदोषताद्दशोपलम्भेन विरोधो न शङ्कनीयः—इति। मोहहेतुभूतगुणमयप्रकृतिसन्निधानेन मूढतया यथावस्थितात्मादर्शने योगसंस्कृतमनोवेद्यत्वेच वक्ष्यमाणमुदाहरति—**वक्ष्यतिचे**ति ॥ १ ॥

अथैवमन्योन्यव्यावर्तकाकारवत्तया निर्दिष्टयोः क्षेत्रक्षेत्रज्ञयोर्द्वयोरपि परमात्मव्यावृत्तिसिद्ध्यर्थमुभयोस्तच्छेषत्वमुपदिश्य एवं यथावस्थितक्षेत्रक्षेत्रज्ञज्ञानमेव मे मतमित्यभिप्रायेण प्रशंसति—'क्षेत्रज्ञंचा-' इति श्लोकेन । शरीरातिरिक्तस्य बद्धावस्थस्यात्र क्षेत्रज्ञशब्देनोपादानम् । सच स्वक्षेत्रापेक्षया शरीरी,मदपेक्षया शरीरमिति समानाधिकरणनिर्देशतात्पर्यमित्याह—**देवमनुष्यादी**ति। 'क्षेत्रज्ञम्' इत्येकवचनेन जात्यैक्यमभिप्रेतमिति दर्शयितुं—**सर्वक्षेत्रेषु वेदितृत्वैकाकारमि**त्युक्तम् । फलितमाह—**मदात्मकं विद्धी**ति । अनुक्तसमुच्चयार्थोऽपिशब्दः, अन्यथा निरर्थकत्वप्रसङ्गादित्यभिप्रायेणाह—**क्षेत्रज्ञंचापीत्यपिशब्दा**दिति । कण्ठोक्तं समुच्चयागतमाभिप्रायिकंच संकलय्याह—**यथाक्षेत्रमि**ति। ...स्य तच्छरीरेण सामानाधिकरण्ये यो हेतुः, सएवात्रापि विद्यत इति मुख्यमेव सामानाधिकरण्यमिति ...नायापृथक्सिद्धिकथनम्। ननु,क्षेत्रज्ञविशेषणत्वं प्रत्यक्षसिद्धत्वात्स्वीक्रियते; क्षेत्रक्षेत्रज्ञयोः परमात्मानं ... विशेषणत्वं न प्रतीयते; प्रत्युत स्वतन्त्रतयैव क्षेत्रज्ञो घटपटादयश्च प्रतीयन्ते; अतो न सामानाधिकरण्यं मुख्यमिति शङ्कायां विशेष्यस्याप्रत्यक्षत्वादश्रुतवेदान्तानां विशेषणत्वाग्रहणमित्यभिप्रायेणाह—**पृथिव्यादिसङ्घातरूपस्ये**ति । पृथिव्यादेः परमात्मानं प्रति शरीरत्ववचनादेव तत्संघातरूपस्य देवमनुष्यादिपिण्डस्यापि शरीरत्वमुक्तमेव;शरीरधातूनां च पृथक्परमात्मशरीरत्वं व्यपदिश्यत इति, ततोऽपि समुदायस्य शरीरत्वमुक्तं भवतीत्यभिप्रायेण—**पृथिव्यादिसङ्घातरूपस्ये**त्युक्तम् । जीवं प्रति क्षेत्र... नावस्थाभेदनिबन्धनमनयोर्द्रव्ययोः परमात्मशरीरत्वमिति ज्ञापनाय — **भगवच्छरीरतैकस्वरूपतये**त्युक्तम्। यथा पृथिव्यादेः लोके शरीरत्वेनाप्रसिद्धस्यापि परमात्मशरीरत्वं श्रुतिवशात्स्वीकार्यम्,

॥ *गी. १५-१० ॥

...ज्ञानेन विषयीकरोति विभागशः, तं वेदितारं प्राहुः कथयन्ति 'क्षेत्रज्ञः'इति । 'इति' ...ः शब्दपदार्थकः एव पूर्ववत्—क्षेत्रज्ञः इत्येवम् ।)के तद्विदः? तौ क्षेत्रक्षे... ...न्ति विजानन्ति ते तद्विदः ॥ १ ॥

रा॥न्ति *"यःपृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी नवेद यस्य पृथिवी शरीरं यःपृथिवीमन्तरो यमयति स त आत्मान्तर्याम्यमृतः' इत्यारभ्य †'यआत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा नवेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः' इत्याद्याः। इदमेवान्तर्यामितया सर्वक्षेत्रज्ञानामात्मत्वेनावस्थानं भगवतस्तत्सामानाधिकरण्येन व्यपदेशहेतुः।‡'अहमात्मागुडाकेशसर्वभूताशयस्थितः' §'नतदस्ति विना यत्स्यान्मया भूतं चराचरम्"॥ 'विष्टभ्याहमिदं कृत्स्नमेकांशेनस्थितो जगत्' इति पुरस्तादुपरिष्टाच्चाभिधाय मध्ये सामानाधिकरण्येन व्यपदिशति% 'आदित्यानामहं विष्णुः' इत्यादिना। यदिदं क्षेत्रक्षेत्रज्ञयोर्विवेकविषयं तयोर्मदात्मकत्वविषयंच ज्ञानमुक्तं, तदेवोपादेयं ज्ञानमिति मम मतं केचिदाहुः—'क्षेत्रज्ञं चापि मां विद्धि' इति सामानाधिकरण्येनैकत्वमवगम्यते। ततश्चेश्वरस्यैव सतोऽज्ञानात्क्षेत्रज्ञत्वमिव भवतीत्यभ्युपगन्तव्यम्। तन्निवृत्त्यर्थश्चायमेकत्वोपदेशः

---

ता॥तथा स्वक्षेत्रं प्रति शरीरिणोऽपि जीवस्येति भावः। एवं स्वरूपभेदेऽन्तर्यामित्वे च सिद्धे श्रुतिषु सामानाधिकरण्यव्यपदेशस्तन्निबन्धनः; तदुपबृंहणेचास्यां स्मृतौ स्मृत्यन्तरेच। अस्मिंश्च विभूत्यध्यायेऽन्तर्यामित्वं पुरस्तादुपरिष्टाच्चाभिधाय मध्ये सामानाधिकरण्यनिर्देशादात्मत्वेनावस्थानमेव सामानाधिकरण्ये हेतुरिति श्रुत्युपबृंहणं कृतं भवति। तत्समानतयाऽस्मिन्नपि सामानाधिकरण्ये स एवार्थ इत्यभिप्रायेणाह —इदं चेति। उत्तरार्धं व्याख्याति—यदिदमिति। प्रस्तुतविविक्ताकारविशिष्टयोरेव हि क्षेत्रक्षेत्रज्ञयोरिह परामर्शः, तत्राऽयःपिण्डादिवदलीकाकारज्ञानस्य पश्वादिसाधारणत्वात्तस्य चात्र प्रशंसानुपपत्तेरित्यभिप्रायेण विवेकविषयत्वोपादानम्। नहि ज्ञानस्य ज्ञानत्वमात्रं विधेयं, पुनरुक्त्यादिप्रसङ्गात्; नचान्येषां ज्ञानत्वनिषेधे तात्पर्यं, व्याघातात्; नच ज्ञानमित्यनूद्य मतत्वमात्रमत्र विधीयते, ज्ञानशब्दावृत्तिनैरर्थक्यात्। अतोऽत्र ज्ञानस्यैव ज्ञानमिति विधानं परिग्राह्यत्वार्थप्रशंसापरमित्यभिप्रायेणाह—तदेवोपादेयं ज्ञानमिति। मम मतमिति-सर्वभूतसुहृदो मम सर्वशास्त्रार्थोपयोगितया सर्वहितत्वेनेदमेवोपादेयतया मतमिति भावः। एवमस्य श्लोकस्य श्रुतिस्मृत्यन्तरपूर्वापरसंगतमर्थमभिधाय कुदृष्टिदृष्टिं दूषयितुमनुभाषते—केचिदित्यादिना। कचिदिति निरूपकाभासत्वमभिप्रेतम्। बहुवचनेन जगद्व्यामोहनमा तद्ग्रन्थकारकुमतिपरंपराद्योतनम्। सामानाधिकरण्येनैकत्वमवगम्यत इति 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम्' इतिहि तल्लक्षणमिति भावः। सर्वज्ञत्वाज्ञत्वादिविरुद्धधर्मवतोरेकत्वं कथमवगन्तुं शक्यमित्यत्राह—ततश्चेति। श्रुतस्य हानायोगात्तदर्थापत्त्येत्यर्थः। एवकारो विरोधशङ्काद्योतनम्। संसारस्यौपाधिकत्वेन सर्वाभ्युपगतत्वात्स्वतः क्षेत्रज्ञत्वाभावेऽपि दोषवशात्तत्संभव इत्यभिप्रायेण —अज्ञानादित्युक्तम्। ननु दोषवशादपि विरुद्धं न संभवति; नहि दोषेण तेजसस्तिमिरत्वापादनं संभवति; नच क्षितिजलादिसमवधाने शिलाशकलस्याङ्कुरारम्भकत्वमित्यत्राह—क्षेत्रज्ञत्वमिवेति। विरुद्धाकारसद्भावो ह्यसंभावितः; तदारोपस्तु रज्जुसर्पादिवदुपपन्न इति भावः। अभ्युपगन्तव्यमिति—गत्यन्तरादर्शनादिति भावः। यदि परमार्थतस्संसारित्वं नास्ति; कथं संसारनिराकरणायोपदेशादि क्रियते? नहि परमार्थतो व्याध्यभावे तन्निरासाय चिकित्सोपपद्येतेत्यत्राह— तन्निवृत्त्यर्थइति। क्षेत्रज्ञत्वभ्रमनिवृत्त्यर्थं इति यावत्। नह्ययमैक्योपदेशो दृष्टिविध्यादिष्विवान्यशेषतया भाति; अ[illegible]नार्थइति भवद्भिरप्यभ्युपेतमित्यभिप्रायेण—अयमित्युक्तम्। चन्द्रभेदभ्रमनिवर्तक

इं शरीरं ' देवोऽहं, मनुष्योऽहं, स्थूलोऽहं, कृशोऽहम् ' इत्यात्मना भो-
सामानाधिकरण्येन प्रतीयमानं भोक्तुरात्मनोऽर्थान्तरभूतस्य भोगक्षेत्रमि-
याथात्म्यविद्भिरभिधीयते । एतत् अवयवशस्सङ्घातरूपेण च ' इदमहं वे-
यो वेत्ति, तं वेद्यभूतादस्माद्वेदितृत्वेनार्थान्तरभूतं, क्षेत्रज्ञ इति तद्विदः-आत्म-

---

क्त्वेनैवोपक्षिप्तक्रमेण सप्तमारम्भप्रकृतिद्वयनिर्देशक्रमेणचापृष्टोऽप्यवसरे प्राप्ते स्वयमेव परिशोध-
नुवाच—'इदंशरीरम्' इति। भ्रान्तिरूपलोकोपलम्भप्रकारनिर्देशपर इदंशब्द इत्यभिप्रायेण
द्युक्तिः । 'देवोऽहं मनुष्योऽहम्' इत्यनन्तजातिभेदोपलक्षणम्; 'स्थूलोऽहं कृशोऽ-
णभेदोपलक्षणम् । एवं जातिगुणोदाहरणं 'गच्छामि' इत्यादिक्रियाविशेषोपलक्षणार्थम्।
त्वं हि प्रायशो देहात्मभ्रममूलमित्यभिप्रायेण—आत्मना भोक्त्रेत्युक्तम् । क्षेत्रमित्य-
नेनैव भोग्यत्वं प्रतीतम् । ततश्च केदाराद्देवदत्त इव प्रतिसम्बन्धित्वेनार्थाक्षिप्तो भोक्ता
ार्थान्तरभूतस्सिद्ध इत्याह—भोक्तुरात्मनोऽर्थान्तरभूतस्येति । भोगस्योत्पत्तिस्था-
चोयुक्तिरित्याह—भोगक्षेत्रमिति। क्षतत्राणक्षयकरणाद्यप्रसिद्धक्लिष्टार्थग्रहणात्क्षेत्रवत्क-
नैस्थानत्वग्रहणमेवोचितमिति भावः। 'अभिधीयते' इत्यनेनाकाङ्क्षितोचितकर्त्रध्याहारः—
म्यविद्भिरिति । यद्वा 'तद्विदः' इति पदमत्रापि विपरिणामेन प्रकृतविषयतया 'तद्वि-
व्यम्। विपरिणतेच तस्मिन् तच्छब्दः प्रकृतक्षेत्रपर इत्यभिप्रायः। 'एतद्यो वेत्ति' इत्य-
रेकस्स्फुटीक्रियत इत्याह—एतदवयवशस्सङ्घातरूपेणचेदमहंवेद्मीति। अयमभिप्रा-
पू' इति प्रत्यक्त्वपराक्त्वाभ्यामेव तावद्भेदः प्रतीयते, गृहादिवदेव। नच 'देवोऽहं मनु-
सामानाधिकरण्यव्यपदेशहेतुभूतदेहात्मबुद्ध्या सा प्रतीतिः भ्रान्तिरिति युक्तम्, तथैव
त् । बलवता हि दुर्बलं बाध्येत । उपपत्तिशास्त्रेच प्राक्प्रपञ्चिते, बलं व्यतिरेकबुद्धेः,
मयमपि प्रतिकूलमिति। प्रागुक्तां प्रत्येकसमुदायादिविकल्पानुपपत्तिमभिप्रेत्य—अवयव-
णचेत्युक्तम् । अवयवश इति—'मम मूर्धा, मम हस्तः' इत्यादिरूपेणावयवेभ्यो-
न्नतया प्रतीयते ; नतु ' अहं मूर्धा ' इत्यादिरूपेणेति भावः। सङ्घातरूपेणचेति—
थापि हि सङ्घातेऽपि भेदधीरिति भावः। 'एतद्यो वेत्ति' इत्यनेनाभिप्रेतम् उपलम्भसिद्धं
इमं वेद्यभूतादिति । 'तद्विदः' इत्यत्र सामान्यज्ञानमात्रस्य निर्णयानुपयुक्तत्वात्—आ-
शरी

---

त मिका सर्वकार्यकरणविषयाकारेण परिणता पुरुषस्य भोगापवर्गार्थकर्तव्य-
योधाकारेण संहन्यते । सोऽयं संघातः इदं शरीरम् । तदेतत् भगवान्

---

नन्दात्रे नमः। ॐ पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषान् पिण्डीकृत्य विविच्य दर्शयत्य-
॥ १ ॥ २ ॥ ३॥

---

त्वेनाध्यायप्रतिपाद्यं दर्शयति—पूर्वोक्तेति। पूर्वमाषष्ठसमाप्तेर्यत् ज्ञानं ज्ञानसाधनमुक्तम्,
भिः षड्भिर्ज्ञेयं ब्रह्मस्वरूपमुक्तम्, यदपि 'भूमिरापः' इत्यादिना क्षेत्रमुक्तम्, यच्च 'तत्वे-
ना पुरुषभेद उक्तः, तत्सर्वमनेनाध्यायेन दर्शयति भगवान् । किमर्थं? पिण्डीकृत्य
। गौणोऽत्र क्त्वाप्रत्ययः । पिण्डीकरणार्थमित्यर्थः ... मिश्र ... प्रतिपत्ति-

रा।।याथात्म्यविदः, प्राहुः। यद्यपि देहव्यतिरिक्तघटाद्यर्थानुसन्धानवेलायां 'दे
नुष्योऽहं, घटादिकं जानामि' इति देहसामानाधिकरण्येन ज्ञातारमात्मानमः
तथापि देहानुभववेलायां देहमपि घटादिकमिव 'इदमहं वेद्मि' इति वेद्यतय
नुभवतीति वेदितुरात्मनो वेद्यतया शरीरमपि घटादिवदर्थान्तरभूतम् ; तथा
व वेद्यभूताच्छरीरादपि वेदिता क्षेत्रज्ञोऽर्थान्तरभूतः । सामानाधिकरण्येन :
वस्तुतश्शरीरस्य गोत्वादिवदात्मविशेषणतैकस्वभावतया तदपृथक्सिद्धेरुपपद्
वेदितुरसाधारणाकारस्य चक्षुरादिकरणाविषयत्वाद्योगसंस्कृतमनोविषयत्वा

---

ता।।त्मयाथात्म्यविद इत्युक्तम् । ननु ज्ञाता तावदात्मेति सिद्धम्; सच जानामीति प्रतीति
प्रतीतिर्ज्ञातृत्वमिव देहात्मकत्वमपि 'देवोऽहम्' इत्यादिरूपेण युगपद्भाति;प्रत्यक्षसिद्धस्य
शास्त्रेण वा देहातिरिक्तत्वसाधने धर्मिग्राहकप्रमाणविरोध इति शङ्काभिप्रायेणाह—यद्यपीति
तुर्देहसमानाधिकरणतयैव प्रतीतिस्स्यात्, तदैवं शक्येतापि; नच तदस्ति,देहस्यैव प्रधानतः
शायां व्यधिकरणतयैव प्रतीतिसिद्धेः ; नच धर्मिग्राहकसिद्धस्सर्वोऽप्याकारो नारोपित इ
बुद्बुदमुक्ताफलचषकमुकुरादिसमानपरिमाणान्येव ग्रहनक्षत्रहिमकरमार्तण्डमण्डलानि स
युक्त्या शास्त्रेणच अतिपृथुपरिमाणतया स्थाप्यन्ते ; तद्वदत्रापीत्यभिप्रायेणाह—तथापी
र्मिग्राहकविरोधरहितश्रुत्युपपत्तिसमानार्थव्यतिरेकप्रत्ययसिद्धं देहात्मनोः परस्परभेदं सा
इति वेदितुरित्यादिना । इतिर्हेतौ । ननु यद्यतो भिद्यते, न तत्तत्समानाधिक
तीयते ; यथा घटेन पटः ; समानाधिकरणश्च मृद्घटादिवद्देहो ज्ञात्रा प्रतीयत इति कि
माशङ्क्याह—सामानाधिकरण्येनेति । अयमभिप्रायः—न तावत्सामानाधिकरण्यम
जातिगुणादिष्वभावात् ; नच तानि न सन्तीति सौगती गतिः, अबाधितप्रत्ययबलेन द
श्चामेकार्थग्रहणादिभिश्च धर्मधर्मिभेदसमर्थनात् ,नचात्र भेदाभेदः, व्याघातादिप्रसङ्गात्
जातिगुणक्रियादिष्वपृथक्सिद्धेरेव संबन्धविशेषात्सामानाधिकरण्यं,तद्वदत्रापीति सर्वानुवृत्त
न्यथैवान्यथापि वोपपन्नं भेदसाधने सामानाधिकरण्यम्—इति। विशेषणतैकस्वभावतये
विवरणम् । ननु जातिगुणादिवदिह धर्मधर्मिभावस्सामानाधिकरण्यदशायां न प्रतीयते; य
गच्छति'इत्यादिषु गोत्वशुक्लत्वादिविशिष्ट इति बुद्धिः,न तथात्र धीः;'देवोऽहं, मनुष्योऽ
'देवत्वविशिष्टोऽहं,मनुष्यत्वविशिष्टोऽहम्'इति प्रतीतिः;ननु'देवशरीरविशिष्टोऽहं, मनुष्य
ऽहम्'इति। अतो घट इत्यत्र घटत्वविशिष्टपिण्डमात्रप्रतीतिवत्'देवोऽहं,मनुष्योऽहम्'इत्य
जातिविशिष्टपिण्डमात्रप्रतीतेर्देहस्य किंचित्प्रति विशेषणत्वादर्शनान्नापृथक्सिद्धिनिबन्धनं दे
धिकरण्यमित्यत्राह—तत्र वेदितुरिति । ज्ञानत्वनित्यत्वसूक्ष्मत्वादिरत्रासाधारणाकारः ।
—किं बाह्यकरणैर्देहमात्रप्रतीतिरिह विवक्षिता ? उत मनोमात्रेण ? अथवा परिशुद्धेन
चक्षुरादीनामात्मग्रहणशक्त्यभावेन योग्यानुपलम्भाभावात् । न द्वितीयः, मनस आत्मग्र

---

सं।।उवाच—'इदम्' इति।सर्वनाम्ना उक्तं विशिनष्टि 'शरीरम्' इति। हे कौ
णात्, क्षयात्, क्षरणात्, क्षेत्रवच्च अस्मिन् कर्मफलनिष्पत्तेः क्षेत्रम् इति ।
शब्दप्रकाशकः । क्षेत्र[illegible] [illegible]म् अभिधीयते कथ्यते ।)एतत् शरीरं क्षेत्रं
[illegible] त् विषयीकरोति ', स्वाभाविकेन औपदेशि

रा॥अनेन चाप्ततमभगवदुपदेशेन 'रज्जुरेषा न सर्पः'इत्याप्तोपदेशेन सर्पत्वभ्रमनिवृत्तिवत्क्षेत्रज्ञत्वभ्रमो निवर्तते इति। ते प्रष्टव्याः-अयमुपदेष्टा भगवान् वासुदेवः परमेश्वरः किमात्मयाथात्म्यसाक्षात्कारेण निवृत्ताज्ञानः? उत न? इति।निवृत्ताज्ञानश्चेत् निर्विशेषचिन्मात्रैकस्वरूपे आत्मन्यतद्रूपाध्यासासम्भावनया कौन्तेयादिभेददर्शनं तान् प्रत्युपदेशादिव्यापाराश्च न संभवन्ति। अथात्मसाक्षात्काराभावादनिवृत्ताज्ञानः, न तर्ह्यज्ञत्वादेवात्मज्ञानोप-

---

ता॥क्योपदेशत्वादिति भावः। अबाधितात्प्रत्यक्षतो भेदे दृढं प्रतीयमाने कथं तदुपजीवकेन संभवदभिप्रायान्तरेण परोक्षेणोपदेशेन बाध इत्यत्राह —अनेनचेति। सामान्यवेषेणोपजीवकत्वं न बाधकत्वविरोधि; अन्यथा भेदानुमानेन ज्वालैक्यबाधायोगात्; अतएव परोक्षत्वमपि न दौर्बल्यप्रयोजकम्। निर्दोषत्वमेवहि प्राबल्यनिदानम्। वाक्यस्य च दोषा वक्तुर्भ्रमविप्रलम्भप्रमादाशक्तयः।अत्रच वक्तुर्वासुदेवस्याप्ततमत्वेन विप्रलम्भगन्धाभावः; भगवत्त्वेन भ्रमप्रमादाशक्तीनामसंभवः; अतस्तदुपदेशेन क्षेत्रज्ञत्वभ्रमस्य प्रत्यक्षस्यापि बाध उपपद्यत इति भावः। एवमनुभाषितं दूषयितुमुपक्रमते—ते प्रष्टव्याइति। सर्वज्ञस्येश्वरस्यैव सतोऽज्ञानात्क्षेत्रज्ञत्वभ्रमो भवति; सएवचेश्वरः क्षेत्रज्ञायोपदिशतीति व्याकुलभाषिणः किमभिप्रेतमित्याशयपरिशोधनेन दूषणं वक्तव्यमिति भावः। अयमिति—'नैत्वेवाहं[1] जातु नासं न त्वं नेमे जनाधिपाः' इत्युपक्रमे भेदेनैव स्वात्मानमुपदिशन् परस्ताच्च क्षराक्षरपुरुषवैलक्षण्यमेव स्वात्मनोऽभिधास्यन्निष्कृष्टव्यवहारेषु जीवानां परागर्थभूत इति भावः। उपदेष्टेति—यद्यसावप्यज्ञः, तदार्जुनवदस्यापि शिष्यत्वमेवोचितं, नतूपदेष्टृत्वमिति भावः। भगवानिति—पराज्ञाननिवृत्त्यर्थमेव ह्ययमुपदिशति, स्वस्य तत्त्वज्ञत्वादित्यभिप्रायः। वासुदेव इत्यत्रान्तर्यामित्वादिविवक्षायां 'सर्वत्रासौ[2] समस्तंच वसत्यत्र' इति भेद एव व्यक्त इति भावः। वसुदेवतनयत्वाविवक्षायां तु स एव ह्यवतीर्णः। 'सर्वलोकमहेश्वरम्'[3]'बिभर्त्यव्यय ईश्वरः'[4]'यस्मात्क्षरमतीतोऽहम्'[5]इत्यादिषु स्वात्मानम् ईश्वरत्वेनैव मन्यमानो जीवेभ्यस्सर्वप्रकारवैलक्षण्यमुपदिशतीत्यभिप्रायेण परमेश्वरशब्दः। ईश्वरस्य भ्रमहेतुभूतमज्ञानं न कदाचिदप्यस्तीति तैर्वक्तुं न शक्यं, तथासतीशितव्यप्रतिभासाभावादीश्वरत्वस्यैवासिद्धिप्रसङ्गात्, अज्ञानमन्तरेणच मिथ्याभूतभेदप्रतिभासायोगात्,परबुद्धिविषयत्वोल्लेखरूपस्यतु मिथ्यार्थप्रतिभासस्य परसद्भावसापेक्षत्वात्, तस्यच तैरनभ्युपगमात्; अत ईश्वरस्यापि पूर्वमज्ञानमस्ति; तच्च पश्चाज्ज्ञाननिवर्त्यमित्यभ्युपगन्तव्यम्। तच्चोपदेशदशायां भवदभिमतहेतुविशेषेण निवृत्तं नवेत्यभिप्रायेण विकल्पयति—किमित्यादिना। प्रथमं शिरो दूषयितुमनुवदति—निवृत्ताज्ञानश्चेति।निर्विशेषेत्यादि—कारणाभावात्कार्याभाव इति भावः। अभ्युपगताधिष्ठानविशेषस्वभावादेवाध्यासो न संभवति: किंपुनर्दोषस्यापि निवृत्तावित्यभिप्रायेण निर्विशेषचिन्मात्रत्वोपादानम्। तथाहि-सविशेषे वस्तुनि कस्मिंश्चिदसाधारणाकारे तिरोहिते तद्विरुद्धाकारान्तराध्यासः; ज्ञाताच कश्चिदर्थमन्यथा मन्येत; नतु ज्ञप्तिमात्रम्। कौन्तेयादीत्यादिशब्देन जिघांसितधार्तराष्ट्रादिग्रहणम्। उपदेशादीत्यादिशब्देन सारथ्यादेरपि संग्रहः। द्वितीयं शिरोऽनुभाषते—अथेति। निवर्तकसाक्षात्काररहितत्वादिति भावः। नतर्हीति—नहीन्द्रियलिङ्गशब्दादिवदज्ञत्वेऽपि प्

---

प्र-पा ॥ १. गी. २ १२ ॥ २ वि-पु. १-२-१२॥ ३. गी. ५-२९ ॥ ४ गी. १५-१७॥ ५. गी. १५-१८ ॥

---

शं॥उच्यते—क्षेत्रज्ञं यथोक्तलक्षणं चापि मां परमेश्वरम् असंसारिणं विद्धि जा[नीहि।] सर्वक्षेत्रेषु यः क्षेत्रज्ञः ब्रह्मादिस्तम्बपर्यन्तानेकक्षेत्रोपाधिप्रविभक्तः, तं निरस्तसर्वोपाधिभेदं सदसदादिशब्दप्रत्ययागोचरं विद्धि इति अभिप्रायः।

रा॥देशसंभवः;*'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः'इति ह्युक्तम्।अत एवमादिवादा अनाकलितश्रुतिस्मृतीतिहासपुराणन्यायस्ववाग्विरोधैरज्ञानिभिर्जगन्मोहनाय प्रवर्तिता

ता॥ज्ञानजनकत्वं संभवति,उपदेशवाक्यप्रयोगस्य ज्ञानपूर्वकत्वावश्यंभावात्. अप्रमितोपदेशेऽनाप्तत्वप्रसङ्गादिति भावः। तत्त्वसाक्षात्कारवतएवाध्यात्मोपदेष्टृत्वे तस्यैवोक्तिं दर्शयति—उपदेक्ष्यन्तीति। एवं शङ्करपक्षोक्तं दोषं भास्करादिपक्षेऽप्यतिदिशति—अत इति। शंकरमते भेदश्रुतयस्सगुणश्रुतयोऽन्तर्यामिश्रुतयः प्रकृतिपुरुषनित्यत्वश्रुतयस्तथाविधाश्च स्मृत्यादयो विरुद्धा एव; अभेदश्रुत्यादयश्च मुख्यार्थपरित्यागेन निर्विशेषलक्षकतया तैरेवाभ्युपगमात् मुख्यार्थप्रतिपादकाकारेण विरुद्धाः। विषयव्यवस्थादिभिर्विरोधपरिहारे संभवति बाध्यबाधकभावाद्यभ्युपगमान्न्यायविरोधः। स्ववचनविरोधस्तु ब्रह्म निर्विशेषम्,एवंत्वादित्यत्र हेतुसाध्यधर्मान्वयावश्यंभावात्'अनुभूतिरवेद्या'इत्यत्रानुभूतिशब्दबोध्यत्वादेरवश्याभ्युपगन्तव्यत्वात्। एवं 'ब्रह्म न शब्दप्रतिपाद्यम्' इत्यादिष्वपि भाव्यम्। भास्करपक्षेतु भेदगोचरश्रुत्यादिभिस्तत्प्रतिपक्षमभेदमसहमानैर्विरोधो वक्तव्यः। अचितोऽपि ब्रह्मस्वरूपैक्याभ्युपगमात् निर्विकारत्वप्रतिपादकैर्विरोधः। ब्रह्मणएवोपहितस्य जीवत्वान्निर्दोषश्रुतिविरोधः। अभेदश्रुतयोऽपि प्रायशो न मुख्याः। जीवेश्वरसामानाधिकरण्ये 'घटाकाशो महाकाशः' इतिवन्निर्दिश्यमानवेषेणैक्यासिद्धेः। एवमेवाचिदीश्वरयोरपि न सामानाधिकरण्यस्वारस्यम्। सर्वज्ञत्वादिगुणगणविशिष्टस्य ब्रह्मणस्सर्वतादात्म्ये सर्वदुःखप्रतिसन्धानप्रसङ्गान्निरवद्यश्रुत्यादि विरोधप्रशमनाभावेन न्यायविरोधः। यादवप्रकाशपक्षेतु स्वतएव भिन्नाभिन्नसर्वजीवत्वाभ्युपगमोऽतिशयितः। सर्वानुवृत्तसन्मात्रस्य ब्रह्मत्वाभ्युपगमात् अदृश्यत्वादिश्रुतिविरोधश्च। सत्ताया घटादिधर्मत्वेन प्रतीयमानत्वात् ब्रह्मणो जातिरूपत्वप्रसङ्ग इत्यादयो दोषा द्रष्टव्याः। अनयोस्स्ववचनविरोधस्तु सप्तभङ्गीवादिनामिव भेदाभेदाभ्युपगमात्तन्मूल-

प्र-पा॥ * गी. ४-३४॥

शं॥श्वरयाथात्म्यव्यतिरेकेण न ज्ञानगोचरम् अन्यत् अवशिष्टम् अस्ति, तस्मात् क्षेत्रक्षेत्रज्ञयोः ज्ञेयभूतयोः यत् ज्ञानं क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन विषयीक्रियेते, तत् ज्ञानं सम्यक् ज्ञानम् इति मतम् अभिप्रायः मम ईश्वरस्य विष्णोः॥

ननु सर्वक्षेत्रेषु एक एव ईश्वरः न अन्यः तद्व्यतिरिक्तः भोक्ता। ततः ईश्वरस्य संसारित्वं प्राप्तम्. ईश्वरव्यतिरेकेण वा संसारिणः अन्यस्य अभावात् संसाराभावप्रसङ्गः। तच्च उभयम् अनिष्टं, बन्धमोक्षतद्धेतुशास्त्रानर्थक्यप्रसङ्गात्, प्रत्यक्षादिप्रमाणविरोधाच्च। प्रत्यक्षेण तावत् सुखदुःखतद्धेतुलक्षणः संसारः उपलभ्यते; जगद्वैचित्र्योपलब्धेश्च धर्माधर्मनिमित्तः संसारः अनुमीयते। सर्वम् एतत् अनुपपन्नम् आत्मेश्वरैकत्वे॥

न; ज्ञानाज्ञानयोः अन्यत्वोपपत्तेः—'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता'। तथा तयोः विद्याविद्ययोः फलभेदः विरुद्धः निर्दिष्टः 'श्रेयश्च प्रेयश्च' विद्याविषयं श्रेयः, प्रेयस्तु अविद्याकार्यम् इति। तथा च व्यासः—'द्वाविमावथ' इत्यादि, 'इमौ द्वावेव पन्थानौ' इत्यादिच्च। इह च द्वे निष्ठे उक्ते। अविद्या च हातव्या इति श्रुतिस्मृतिन्यायेभ्यः अवगम्यते। श्रुतयः तावत्—'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः' 'तमेवं विद्वानमृत इह भवति'। 'न बिभेति कुतश्चन'। अविदुषस्तु—'अथ तस्य

रा॥इत्यनादरणीयाः।अत्रेदं तत्त्वम्-अचिद्वस्तुनश्चिद्वस्तुनः परस्य ब्रह्मणो भोग्यत्वेन,भोक्तृत्वेन, चेशितृत्वेन च स्वरूपविवेकमाहुः काश्चन श्रुतयः-*'अस्मान्मायी सृजते विश्वमेतत्त-

ता॥निर्दोषत्वसदोषत्वसामानाधिकरण्याच्च व्यक्तः—जगन्मोहनाय प्रवर्तिताइति न तेषामभिप्रायेणोच्यते,'अज्ञानिभिः' इत्युक्तत्वात्;अपितु तेषामज्ञानां वादो दैवाज्जगन्मोहनाय जात इत्युच्यते। ननु युष्मत्पक्षेऽपि श्रुतिविरोधादिदूषणं समानम् । तथाहि यदि जगद्ब्रह्मणोरत्यन्तभेदएवाभ्युपगतः, तदा 'तन्नामरूपाभ्यां व्याक्रियत' इति कारणस्यैव ब्रह्मणः कार्यनामरूपभाक्त्वश्रुतिविरोधः ; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधः ; नहि घटज्ञानेन ततोऽत्यन्तभिन्नस्य पटस्य ज्ञातत्वं संभवति ; अत्यन्तभिन्नयोर्जगद्ब्रह्मणोस्सामानाधिकरण्यच न संभवति, घटपटवदेव, लक्षणया निर्वाहश्चेत्परपक्षे कः प्रद्वेषः ? ब्रह्मोपादानत्वञ्च जगतो न सिध्यति, मृद्घटादिवज्जगद्ब्रह्मणोरेकद्रव्यत्वानभ्युपगमात् ; अन्यथा सत्कार्यवादविरोधात्; यदिभिन्नैरेव प्रकृतिपुरुषेश्वरैर्जगदारम्भः, ते किमेकीभूताः कार्यमारभन्ते ? उत पृथगवस्थिता एव ? पूर्वत्र परस्परस्वभावसंकरः परपक्षवत्प्रसक्तः; उत्तरत्रापि किंपृथक्कार्यकराणि ? उत न ?; पृथक्कार्यकरत्वे सर्वस्य ब्रह्मकारणत्वमभ्युपगतं पलायते ; एककार्यकरत्वे कार्यावस्थायां स्वभावसंकरस्तदवस्थः;यदिच ब्रह्म स्वरूपतो निर्विकारं, तदा तस्य कार्यात्मकत्ववादिनीभिश्श्रुतिभिर्विरोधः;अथ सविकारत्वाभ्युपगमः, तदा परपक्षप्रसक्तनिर्विकारश्रुतिविरोधस्तदवस्थः;यदिच सर्वदा सर्वज्ञत्वादिगुणगणविशिष्टमेव ब्रह्म,तदा निर्गुणश्रुतिभिः ज्ञानमात्रश्रुतिभिश्च व्याघातः;सर्वदा भेदश्च यद्यभ्युपगतः, तदा भेदनिषेधकश्रुतिविरोधः;न्यायविरोधश्च,विधिनिषेधयोरर्थस्वभावलब्धेन पौर्वापर्येणापच्छेदवद्बाध्यबाधकभावस्यानभ्युपगमात्; स्ववचनविरोधश्च, सर्वात्मकं ब्रह्म सर्वविलक्षणञ्चेत्यभ्युपगमात्। अतो दोषसाम्ये कस्य मतं तत्त्वमिति चोद्यमभिप्रायानभिज्ञैः परैः श्वावराहकलहन्यायेन प्रवर्तितं परिहृत्य समीचीनशारीरकन्यायानुगृहीतसर्ववेदान्तसारार्थप्रतिपादनपरतामस्य शास्त्रस्य स्थापयितुमाह—अत्रेदं तत्त्वमिति । अत्र श्रुतिस्मृतीतिहासाद्यविरुद्धार्थगवेषणायामित्यर्थः ; श्रुत्यादिष्विति वा। इदं यथाप्रमाणं वक्ष्यमाणम्; नतु शङ्कराद्युक्तमित्यर्थः । तत्त्वं प्रामाणिकमित्यर्थः । शङ्कितान् दोषान् परिहरिष्यन् स्वपक्षं तावत्प्रमाणतस्स्थापयति—अचिद्वस्तुन इत्यादिना सत्यमभवदित्यन्तेन । भोग्यत्वादिकं यथाक्रमम् । भोग्यत्वेन भोक्तृत्वेनचेशितृत्वेनचेति—भेदकधर्मान्तराणाम् उपादास्यमानश्रुतिसिद्धानाम् उपलक्षणम् । अनुक्तसमुच्चयार्थेन चकारेणवा तत्सङ्ग्रहः । स्वरूपविवेकं—स्वरूपाणां भिन्नत्वमित्यर्थः । विवेकशब्दो भ्रमनिराकरणद्योतनार्थः । नहि भेदवादिनीनां श्रुतीनां श्रुतित्वे सर्पमृतिरित्यभिप्रायेण—काश्चन श्रुतय इत्युक्तम् । बहुवचनेन भूयसांन्यायोऽप्यविरुद्ध इति ज्ञापितम् । भेदश्रुत्यविरोधेन सामानाधिकरण्यश्रुत्यर्थं स्थापयितुं प्रथमं भेदश्रुत्युपादानम् । अस्मादित्यनेन साक्षाद्विकाराश्रयत्वमचि-

प्र-पा ॥ * श्वे. ४-९ ॥ | १. बृ. ३-४-७ ॥

शां॥भयं भवति' 'अविद्यायामन्तरे वर्तमानाः' 'ब्रह्म वेद ब्रह्मैव भवति' 'अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' ; आत्मवित् यः 'स इदं सर्वं भवति' ; 'यदा चर्मवत्' इत्याद्याः सहस्रशः । स्मृतयश्च—'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' 'इहैव तैर्जितस्सर्गो येषां साम्ये स्थितं मनः' 'समं पश्यन् हि सर्वत्र' इत्याद्याः। न्यायतश्च—'सर्पान् कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति। अज्ञानतस्तत्र पतन्ति केचित् ज्ञाने फलं पश्य यथा विशिष्टम्'।तथा च—देहादिषु आत्मबुद्धिः अविद्वान् रागद्वेषादिप्रयुक्तः धर्माधर्मानुष्ठानकृत् 'जायते म्रियते च' इति अवगम्यते, देहादिव्यति-

रा॥स्मिंश्चान्यो मायया सन्निरुद्धः'*'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'†'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः';'अमृताक्षरं हरः'इति भोक्ता निर्दिश्यते; प्रधानम् आत्मनो भोग्यत्वेन हरतीति हरः।‡'सकारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः'§'प्रधानक्षेत्रज्ञपतिर्गुणेशः'¶'पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतं'

ता॥द्व्यस्येति सिद्धम्। 'अन्यो मायया सन्निरुद्धः'इत्यनेनोपहितस्य ब्रह्मण एव जीवत्वमित्यादिप्रलापा निर्मूलिताः। नह्यत्र मायया सन्निरोधादन्यत्वमुच्यते; अपितु अन्यस्यैव सतो मायया सन्निरोधः। सन्निरुद्धः-स्वाभाविकसर्वज्ञत्वनिरतिशयानन्दाद्याविर्भावरहित इत्यर्थः। पराभिमतो मायाशब्दार्थश्श्रुत्यैव प्रतिक्षिप्तइति दर्शयितुमाह —मायान्त्विति। 'क्षरम्'इत्यादौ हरशब्दस्योत्तरपदान्वयेन कुदृष्ट्युन्नीतयोजनान्तरप्रतिक्षेपार्थमाह—अमृताक्षरं हर इति भोक्ता निर्दिश्यत इति। रुद्रे रूढस्य कथं भोक्तृमात्रसाधारण्यमित्यत्राह—प्रधानमिति। हरतीति हरः इत्येतावन्निर्वचनम्; शेषमर्थसिद्धकथनम्। अयमभिप्रायः—यदि हरशब्दो 'देव एकः' इत्यनेनान्वीयते, तदा 'अमृताक्षरम्' इत्यस्य विधेयत्वं न स्यात्;अथ 'अमृताक्षरम्'इत्यसमस्तं लुप्तविभक्तिकम् उद्देश्योपादेयपरमुच्येत, तदा विभक्तिलोपक्लेशो व्युत्क्रमेणोद्देश्योपादेयनिर्देशश्च स्यात्। नचात्र '²क्षरंत्वविद्या ह्यमृतं तु विद्या' इतिवदमृतशब्दएवोद्देश्यपरः, क्षराक्षरशब्दयोरेव मिथःप्रतिरूपत्वात्। ऋक्षु च पादभेदेनार्थव्यवस्था संभवन्ती न परित्याज्या। एवं '¹क्षरं त्वविद्याह्यमृतंतु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः' इति वाक्यान्तरशैली चानुसृता स्यात्, अन्यथा व्यवहितान्वयश्च। नच 'देव एकः' इत्यत्र विशेषाकाङ्क्षास्ति। तावताच माहात्म्यमतिशयेन व्यज्यते। '²क्षरात्मानौ' इति पुल्लिङ्गान्तानुवादश्च तल्लिङ्गनिर्दिष्टविषयतायां स्वरसः। शब्दान्तरेणानुवादस्तु पक्षद्वयेऽपि समः। अस्मत्पक्षेतु हरशब्दस्यात्मजातिविषयत्वज्ञापनार्थतया सप्रयोजनश्च। 'अमृताक्षरम्' इति सविशेषणनिर्देशोऽपि तत्स्वभावविशेषज्ञापनेन सार्थः। एवं हरशब्दस्यात्र प्रधानसहपठितपुरुषतत्त्वविषयत्वे अवश्यंभाविनि लक्षणादेश्चासंभवे श्रुत्यन्तरस्वप्रकरणादिविरुद्धरूढिपरित्यागेन यौगिकार्थपरत्वमैन्द्यादिन्यायेनाङ्गीकार्यम्-इति क्षेत्रज्ञेश्वरयोस्सर्वज्ञत्वकिंचिज्ज्ञत्वनियन्तृ-

प्र-पा॥ * श्वे. ४-१०॥ †; २. श्वे. १-१०॥ ‡ श्वे. ६-९॥ § श्वे. ६-१३॥ ¶ तै-ना. १०॥ १. श्वे. ५-१॥

शं॥रिक्तात्मदर्शिनः रागद्वेषादिप्रहाणात् तदपेक्षधर्माधर्मप्रवृत्त्युपशमात् मुच्यन्ते;इति न केनचित् प्रत्याख्यातुं शक्यं न्यायतः। तत्र एवं सति, क्षेत्रज्ञस्य ईश्वरस्यैव सतः अविद्याकृतोपाधिभेदतः संसारित्वमिव भवति, यथा देहाद्यात्मत्वम् आत्मनः। सर्वजन्तूनां हि प्रसिद्धः देहादिषु अनात्मसु आत्मभावः निश्चितः अविद्याकृतः, यथा स्थाणौ पुरुषनिश्चयः। न च एतावता पुरुषधर्मः स्थाणोः भवति, स्थाणुधर्मो वा पुरुषस्य। तथा न चैतन्यं देहस्य, देहधर्मो वा चैतन्यस्य सुखदुःखमोहात्मकत्वादिः आत्मनः न युक्तः; अविद्याकृतत्वाविशेषात्, जरामृत्युवत्॥

न, अतुल्यत्वात्; इति चेत्—स्थाणुपुरुषौ ज्ञेयावेव सन्तौ ज्ञात्रा हि अन्योन्यस्मिन् अध्यस्तौ अविद्यया; देहात्मनोस्तु ज्ञेयज्ञात्रोरेव इतरेतराध्यासः, इति न समः दृष्टान्तः। अतः देहधर्मः ज्ञेयोऽपि ज्ञातुरात्मनः भवतीति चेत्—न, अचैतन्यादिप्रसङ्गात्। यदि हि ज्ञेयस्य देहादेः क्षेत्रस्य धर्माः सुखदुःखमोहेच्छाद्वेषादयः ज्ञातुः आत्मनः भवन्ति, तदा; 'ज्ञेयस्य क्षेत्रस्य धर्माः केचित् आत्मनः भवन्ति' अविद्याध्यारोपिताः, ज-

रा॥'ज्ञाज्ञौ द्वावजावीशनीशौ' 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्''भोक्ता भोग्यं प्रेरितारं च मत्वा''पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति''तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति''अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोऽन्यः'('गौरनाद्यन्तवती साजनित्री भूतभाविनी' 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः')इत्याद्याः।अत्रापि'अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां' 'सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्। कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्।प्रकृतिं स्वामवष्टभ्य विसृजामि पुनःपुनः।भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्''मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।हेतुनानेन कौन्तेय जगद्धि परिवर्तते''प्रकृतिं पुरुषश्चैव विद्ध्यनादी उभावपि''मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्। संभवस्स-

ता॥त्वनियाम्यत्वरूपं भेदं द्वयोरप्यजत्वंच द्विशब्देनैव संख्यया वदन्तीं श्रुतिं दर्शयति—**ज्ञाज्ञाविति**। सुषुप्तिमरणमूर्च्छाप्रलयेषु क्षेत्रज्ञस्यात्यन्ताज्ञत्वम्; जागरस्वप्नयोरपि ज्ञानं कतिपयविषयम्, अज्ञानं त्वनन्तगोचरम्। ईश्वरात्पृथग्भूतानामेव जीवानां नित्यत्वं बहुत्वं जीवेश्वरयोश्चैतन्याश्रयत्वमीश्वरस्य चाद्वितीयत्वं सकलफलप्रदत्वं च 'नित्यो नित्यानाम्' इति श्रुत्या सिद्धम्। स्वशब्दादेव भेदस्य वेद्यत्ववादिनीं भेदज्ञानपूर्वकपरमात्मप्रीतिविषयत्वेन मोक्षंच प्रतिपादयन्तीं श्रुतिमाह—**पृथगिति**। जीवेश्वरयोरेकशरीरानुप्रविष्टयोरेव कर्मफलभोक्तृत्वाभोक्तृत्वरूपवैधर्म्यपरं वाक्यमाह—**तयोरन्य** इति। तयोरन्यः-तयोरेक इत्यर्थः। **स्वाद्वत्ती**ति—पुण्यफलोदाहरणमुपलक्षणार्थम्। अभिचाकशीति अभितोऽधिकं प्रकाशते। तादृशजीवनियन्तृत्वलक्षणोऽतिशय एव तदानीमपि सिध्यति; नतु ज्ञानसङ्कोचादीत्युक्तं भवति। सत्त्वरजस्तमोमय्याः प्रकृतेः पुरुषस्यच अजत्वं, प्रकृतेः पुरुषकर्मानुरूपपरिणामविशेषभाक्त्वेनाध्यासप्रसङ्गराहित्यं, बद्धमुक्तव्यवस्थां, मुक्तदशायामपि प्रकृतेर्विश्लेषमात्रंच ज्ञापयति—**अजा**मिति। उक्तश्रुत्युपबृंहणायास्मिन्नेव प्रतिपादितं नित्यं प्रकृतिपुरुषेश्वरभेदं दर्शयति—**अत्राप्यहङ्कार इतीति**। मे प्रकृतिरिति व्यधिकरणनिर्देशादीश्वरात्प्रकृतिपुरुषयोर्भेदस्सिद्धः। 'इतस्त्वन्याम्' इत्यनेन प्रधानात्पुरुषस्य भेदः। सृष्टिप्रलययोरध्यासतन्निवृत्तिरूपत्वव्युदासाय परमात्मशरीरभूतप्रकृत्यविभागविभागरूपत्वमाह—**सर्वभूतानी**ति। अत्रापि 'मामिकाम्' इत्यादिभिर्भेदः स्फुटः। प्रधानपुरुषयोश्चराचराद्यवस्थापत्तेः परमात्मभ्रममूलत्वव्युदासाय तदधिष्ठानमूलतामाह—**मयेति**। जीवानामध्यासाधीनसिद्धित्वव्युदासाय प्रकृतिपुरुषयोरविशेषेणानादित्वं दर्शयति—**प्रकृतिं पुरुषश्चे**ति। प्रकृतेरेव साक्षात्परिणामाश्रयत्वं, सृष्ट्यौपयिकप्रकृतिपुरुषसंसर्गविशेषस्य परमात्मसङ्कल्पाधीनत्वं, ततएव जगत्सृष्टिम्, एवंप्रकारेण त्रयाणामन्योन्यभेदंचोदाहरति—**मम योनिरि**ति। जगदपेक्षया योनित्वं,

**प्र-पा** ॥ १. श्वे. १-९ ॥ २. श्वे. १३; कठः. २-५-१३ ॥ ३. श्वे. १-५॥ ४. श्वे. १-६ ॥ ५. मु. ३-१-१॥ ६. श्वे. ४-५; तै-ना. १२-५॥ ७. मन्त्रिकोपनिषदि ॥ ८. श्वे. ४-७॥ ९. गी. ७-४-५ ॥ १०. गी. ९-७॥ ११. गी. ९-१० ॥ १२. गी. १३-१९ ॥ १३. गी. १४-३॥ ()कुण्डलितग्रन्थः केषुचित्कोशेषु न दृश्यते॥

शं॥रामरणादयस्तु न भवन्ति' इति विशेषहेतुः वक्तव्यः। 'न भवन्ति' इति अस्ति अनुमानम्, अविद्याध्यारोपितत्वात् जरामरणादिवत् इति, हेयत्वात्, उपादेयत्वाच्च

या॥र्वभूतानां ततो भवति भारत'इति।जगद्योनिभूतं महद्ब्रह्म मदीयं प्रकृत्याख्यं भूतसूक्ष्मम-चिद्वस्तु यत्,तस्मिन् चेतनाख्यं गर्भं संयोजयामि; ततो मत्सङ्कल्पकृताच्चिदचित्संसर्गादेव देवादिस्थावरान्तानामचिन्मिश्राणां सर्वभूतानां सम्भवो भवतीत्यर्थः। (श्रुतावपि भूतसूक्ष्मं ब्रह्मेति निर्दिष्टं* 'तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते'इति। एवं भोक्तृभोग्यरूपेणावस्थित-योः सर्वावस्थावस्थितयोश्चिदचितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थितिं परमपुरुषस्य चात्मत्वमाहुः काश्चन श्रुतयः T'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथवीन वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति'इत्यारभ्य ‡'यआत्मनि तिष्ठन्नात्मनो-ऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्य मृतः' इति,तथा '§यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेद' इ-त्यारभ्य§'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद' 'यो मृत्युमन्तरे सञ्च-रन् यस्य मृत्युश्शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः'।अत्र मृत्युशब्देन तमश्शब्दवाच्यं सूक्ष्मावस्थमचिद्वस्त्वभिधीयते,अस्यामेवोप-

ता॥जगत्स्रष्टुरधिष्ठातृतया सम्बन्धः; तदाह—**जगद्योनी**ति। मुख्यब्रह्मणो ममेति व्यधिकरणनिर्देशा-द्योनित्वसामर्थ्याच्च ब्रह्मशब्दोपचरितमाह—**प्रकृत्याख्य**मिति। चिन्मिश्रभूतोत्पत्तिहेतुतया प्रकृत्या-धेयतयाच सिद्धं गर्भशब्दार्थमाह—**चेतनाख्य**मिति। 'दधामि' इत्याधानं विवक्षितमित्याह—**संयोजयामी**ति। विस्तरोऽस्य स्थाने भविष्यति। एवं बहुषु प्रदेशेषु प्रकृतिपुरुषजगत्सृष्ट्यादिप्रति-पादनदशायां जीवाध्यासजगन्मिथ्यात्वादिसूचकं न किंचिदृश्यत इत्यभिप्रायः। एवं चिदचिदीश्व-राणां स्वरूपभेदः काणादप्रभृतिभिरभ्युपगत इति ततो विशेषं घटकश्रुतिसिद्धं शरीरात्मभावं सामा-नाधिकरण्यमुख्यत्वसिद्ध्यर्थमाह—**एव**मिति। **भोक्त्रि**ति—एकीभावावस्थायामपि शरीरत्वं 'यस्य तमश्शरीरम्' §'यस्य मृत्युश्शरीरम्' इत्यादिभिस्सिद्धमिति ज्ञापनाय—**सर्वावस्थावस्थितयो**रित्यु-क्तम्। प्रत्यक्षाद्यप्राप्तस्य जगद्ब्रह्मणोश्शरीरात्मभावस्य तत्त्वोपदेशतत्परानेकश्रुतिसिद्धत्वान्न तत्परित्याग-श्शङ्क्यः। तदनुगुणतयाच शरीरलक्षणमनुसन्धेयमिति भावः। अन्तर्यामिब्राह्मणे सर्वावस्थप्रकृतिपु-रुषयोरविशेषेण परमात्मशरीरत्वं दर्शयति—**यः पृथिव्या**मिति। इममेवार्थमीषदावापोद्वापभेदेन प्रतिपादयन्त्या सुबालोपनिषदान्तर्यामिब्राह्मणोक्तमपहतपाप्मत्वादिगुणयोगमद्वितीयत्वं नारायणत्वं च विशदयति—**यः पृथिवी**मिति। अत्र मृत्युशब्दस्य स्थानप्रमाणेन अतिसूक्ष्मदशापन्नमूलप्रकृ-तिविषयत्वमाह— **अत्रे**ति। अत्र अक्षरपर्यायादनन्तरे पर्याये इत्यर्थः। तेजःप्रतिद्वन्द्वित-मोव्युदासाय—**सूक्ष्मावस्थमचिद्वस्त्वि**त्युक्तम्। **अस्यामेवे**त्यनेन शीघ्रप्रत्यभिज्ञानं सूचितम्।

**प्र-पा** ॥ ( ) कुण्डलितग्रन्थः क्वचिन्न दृश्यते. ‡ बृ. ५-७-२२ ॥ मा-पा
* मु. १-१-९ ॥ T बृ. ५-७-३ ॥ § सुबा. ७ ॥ १. बृ. ५-७-१३ ॥

शां॥इत्यादि। तत्र एवं सति, कर्तृत्वभोक्तृत्वलक्षणः संसारः ज्ञेयस्थः ज्ञातरि अविद्यया अध्यारोपितः इति न अनेन ज्ञातुः किञ्चित् दुष्यति, यथा बालैः अध्यारोपितेन आका-शस्य तलमलिनत्वादिना ॥

एवं च सति,सर्वक्षेत्रेष्वपि सतः भगवतः क्षेत्रज्ञस्य ईश्वरस्य संसारित्वगन्धमात्र-मपि नाशङ्क्यम्। न हि कचिदपि लोके अविद्याध्यस्तेन धर्मेण कस्यचित् उपकारः अपकारो वा दृष्टः ॥

रा॥निषदि*'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते' इतिवचनात्; †'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' इतिच। एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थकारणावस्थजगद्रूपेणावस्थित इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः

ता॥आत्मलक्षणपूर्वकमात्मत्वं दर्शयत्तैत्तिरीयकवाक्यमाह—अन्तःप्रविष्ट इति। नृपनभोव्यावर्तकाभ्यामन्तःप्रवेशनियमनाभ्यां शरीरित्वसिद्धिः। उक्तभेदश्रुतिघटकश्रुत्यनुसारेण सामानाधिकरण्यश्रुतीनामर्थं मुख्यमेवाह—एवं सर्वावस्थेति। अतो भयावस्थपरमपुरुषप्रकारद्रव्यैक्यं सामानाधिकरण्यश्रुतीनां विवक्षितमित्यर्थः। इममर्थं ज्ञापयितुमिति-न पुनश्श्रुत्यन्तरस्वप्रकरणस्ववचनप्रत्यक्षादिविरुद्धं ज्ञापयितु-

प्र पा॥ * सुबा. २॥ | † यजुषि. आरण्यके. ३. प्र. ११. अ॥

शं॥यत्तु उक्तं 'न समः दृष्टान्त' इति, तत् असत्। कथम्?—अविद्याध्यासमात्रं हि दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यं विवक्षितम्। तत् न व्यभिचरति। यत्तु 'ज्ञातरि व्यभिचरति' इति मन्यसे तस्यापि अनैकान्तिकत्वं दर्शितं जरादिभिः॥

अविद्यावत्त्वात् क्षेत्रज्ञस्य संसारित्वम् इति चेत्—न; अविद्यायाः तामसत्वात्। तामसो हि प्रत्ययः—आवरणात्मकत्वात्, अविद्या विपरीतग्राहकः, संशयोपस्थापकः, अग्रहणात्मको वा; विवेकप्रकाशभावे तदभावात्, तामसे च आवरणात्मके तिमिरादिदोषे सति अग्रहणादेः अविद्यात्रयस्य उपलब्धेः॥

अत्र आह—एवं तर्हि ज्ञातृधर्मः अविद्या। न; करणे चक्षुषि तैमिरिकत्वादिदोषोपलब्धेः। यत्तु मन्यसे ज्ञातृधर्मः अविद्या, तदेव च अविद्याधर्मवत्त्वं क्षेत्रज्ञस्य संसारित्वम्। तत्र यदुक्तम् 'ईश्वरः एव क्षेत्रज्ञः, न संसारी' इत्येतत् अयुक्तमिति, तत् न; करणे चक्षुषि विपरीतग्राहकादिदोषस्य दर्शनात्। न विपरीतादिग्रहणं तन्निमित्तं वा तैमिरिकत्वादिदोषः ग्रहीतुः, चक्षुषः संस्कारेण तिमिरे अपनीते ग्रहीतुः अदर्शनात् न ग्रहीतृधर्मः यथा; तथा सर्वत्रैव अग्रहणविपरीतसंशयप्रत्ययाः तन्निमित्ताः करणस्यैव कस्यचित् भवितुम् अर्हन्ति, न ज्ञातुः क्षेत्रज्ञस्य। संवेद्यत्वाच्च तेषां प्रदीपप्रकाशवत् न ज्ञातृधर्मत्वम्, संवेद्यत्वादेव स्वात्मव्यतिरिक्तसंवेद्यत्वम्, सर्वकरणवियोगे च कैवल्ये सर्ववादिभिः अविद्यादिदोषवत्त्वानभ्युपगमात्। आत्मनः यदि क्षेत्रज्ञस्य अग्न्युष्णवत् स्वः धर्मः, ततः न कदाचिदपि तेषां वियोगः स्यात्। अविक्रियस्य च व्योमवत् सर्वगतस्य अमूर्तस्य आत्मनः केनचित् संयोगवियोगानुपपत्तेः, सिद्धं क्षेत्रज्ञस्य नित्यमेव ईश्वरत्वम्; 'अनादित्वान्निर्गुणत्वात्' इति ईश्वरवचनाच्च॥

ननु एवं संसारसंसारित्वाभावे शास्त्रानर्थक्यादिदोषः स्यादिति चेत्—न सर्वैः अभ्युपगमात्। सर्वैः हि आत्मवादिभिः अभ्युपगतः दोषः न एकेन परिहर्तव्यः भवति। कथम् अभ्युपगमः इति?—मुक्तात्मनां हि संसारसंसारित्वव्यवहाराभावः सर्वैरेव आत्मवादिभिः अभ्युपगम्यते। न च तेषां शास्त्रानर्थक्यादिदोषप्राप्तिः अभ्युपगता। तथा नः क्षेत्रज्ञानाम् ईश्वरैकत्वे सति, शास्त्रानर्थक्यं भवतु; अविद्याविषये च अर्थवत्त्वम्।—यथा द्वैतवादिनां सर्वेषां बन्धावस्थायामेव शास्त्राद्यर्थवत्त्वं, न मुक्तावस्थायाम्, एवम्॥

रा॥कार्यावस्थं कारणावस्थञ्च जगत् स एवेत्याहुः *'सदेव सोम्येदमग्रआसीदेकमेवाद्वितीयं' †'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' इत्यारभ्य ‡'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः' § ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो'

ता॥मित्यर्थः।छान्दोग्यवदेव सामानाधिकरण्यं, तस्य च चेतनांशेऽप्यनुप्रवेशपूर्वकत्वं तैत्तिरीयके दर्शयति

प्र-पा॥ * छा ६-२-१ ॥ † छा. ६-२-३ ॥ ‡ छा. ६-८-६ ॥ § छा. ६-८-७ ॥

शं॥ननु आत्मनः बन्धमुक्तावस्थे परमार्थत एव वस्तुभूते मते द्वैतवादिनां सर्वेषाम्। अतः हेयोपादेयतत्साधनसद्भावे शास्त्राद्यर्थवत्त्वं स्यात्। अद्वैतिनां पुनः, द्वैतस्य अपरमार्थत्वात्, अविद्याकृतत्वात् बन्धावस्थायाश्च आत्मनः अपरमार्थत्वे निर्विषयत्वात्, शास्त्राद्यानर्थक्यम् इति चेत्—न; आत्मनः अवस्थाभेदवत्त्वानुपपत्तेः। यदि तावत् आत्मनः बन्धमुक्तावस्थे, युगपत् स्यातां, क्रमेण वा। युगपत् तावत् विरोधात् न सम्भवतः स्थितिगती इव एकस्मिन्। क्रमभावित्वे च, निर्निमित्तत्वं, सनिमित्तत्वं वा। निर्निमित्तत्वे अनिर्मोक्षप्रसङ्गः। सनिमित्तत्वेच, स्वतः अभावात्, अपरमार्थत्वप्रसङ्गः। तथा च सति अभ्युपगमहानिः। किञ्च—बन्धमुक्तावस्थयोः पौर्वापर्यनिरूपणायां बन्धावस्था पूर्वं प्रकल्प्या, अनादिमती अन्तवती च तच्च प्रमाणविरुद्धम्। तथा मोक्षावस्था सादिमती अनन्ता च प्रमाणविरुद्धैव अभ्युपगम्यते। न च अवस्थावतः अवस्थान्तरं गच्छतः नित्यत्वम् उपपादयितुं शक्यम्। अथ अनित्यत्वदोषपरिहाराय बन्धमुक्तावस्थाभेदो न परिकल्प्यते, अतः द्वैतिनामपि शास्त्रानर्थक्यदोषः अपरिहार्य एव; इति समानत्वात् न अद्वैतवादिना परिहर्तव्यः दोषः॥

न च शास्त्रानर्थक्यं, यथाप्रसिद्धाविद्वत्पुरुषविषयत्वात् शास्त्रस्य। अविदुषां हि फलहेत्वोः अनात्मनोः आत्मदर्शनम्, न विदुषां, फलहेतुभ्याम् आत्मनः अन्यत्वदर्शने सति तयोः अहमिति आत्मदर्शनानुपपत्तेः। न हि अत्यन्तमूढः उन्मत्तादिरपि जलाग्न्योः छायाप्रकाशयोर्वा एकात्मतां पश्यति; किमुत विवेकी। तस्मात् न विधिप्रतिषेधशास्त्रं तावत् फलहेतुभ्याम् आत्मनः अन्यत्वदर्शिनः भवति। न हि 'देवदत्त त्वम् इदं कुरु' इति कस्मिंश्चित् कर्मणि नियुक्ते, विष्णुमित्रः 'अहं नियुक्तः' इति तत्रस्थः नियोगं शृण्वन्नपि प्रतिपद्यते। नियोगविषयविवेकाग्रहणात् तु उपपद्यते प्रतिपत्तिः। तथा फलहेत्वोरपि॥

ननु प्राकृतसम्बन्धापेक्षया युक्तैव प्रतिपत्तिः शास्त्रार्थविषया; फलहेतुभ्याम् अन्यात्मविषयदर्शनेऽपि सति—इष्टफलहेतौ प्रवर्तितः अस्मि, अनिष्टफलहेतौ निवर्तितः अस्मीति; यथा पितृपुत्रादीनाम् इतरेतरात्मान्यत्वदर्शने सत्यपि अन्योन्यनियोगप्रतिषेधार्थप्रतिपत्तिः॥

न; व्यतिरिक्तात्मदर्शनप्रतिपत्तेः प्रागेव फलहेत्वोः आत्माभिमानस्य सिद्धत्वात् प्रतिपन्ननियोगप्रतिषेधार्थो हि फलहेतुभ्याम् आत्मनः अन्यत्वं प्रतिपद्यते, न पूर्वम्। तस्मात् विधिप्रतिषेधशास्त्रम् अविद्वद्विषयम् इति सिद्धम्॥

रा॥इति।तथा*'सोऽकामयत बहु स्यां प्रजायेयेति।स तपोऽतप्यत।स तपस्तप्त्वा इदं सर्व-

ता॥—तथेति। स तपोऽतप्यत—आलोचनमकरोदित्यर्थः. 'तपसा चीयते ब्रह्म' इति प्रकरणे 'यस्य ज्ञानमयं तपः' इति व्याख्यानात् । न केवलं प्रकरणान्तरगतैर्घटकवाक्यैर्भेदाभेदश्रुत्यविरोधः, अपितु

प्र-पा ॥ * तैत्ति-उप आनन्द-६-अनु सोऽकामयत ...इदंसर्वमसृजत ।यदिदं किंच तत्सृष्ट्वा अभवत् । निरुक्तंचानिरुक्तंच । निलयनञ्चानिलयनंच । विज्ञानंचाविज्ञानंच । सत्यंचानृतंच सत्यमभवत् । यदिदं किंच । तत्सत्यमित्याचक्षते॥' सः - आनन्दमय आत्मा, देवमनुष्यादिरूपेण-बहुस्याम्, तदर्थमाकाशादिरूपेण —प्रजायेयेति - व्यष्टिसमष्टिरूपचेतनाचेतनविषयसंकल्पमकृतेत्यर्थः । सतपोऽतप्यत-सः-परमात्मा, स्रष्टव्यालोचनरूपं तपः कृतवानित्यर्थः ; 'तप आलोचने' इतिहि धातुः; सतपस्तप्त्वेति-ननु सर्वदा सर्वव्याप्तस्य ब्रह्मणः कोऽसौ सृष्टिकालानुप्रवेशः इति चेत्—उच्यते-गोजठरगतवत्सवत् सर्वव्याप्तस्य ब्रह्मणः प्रत्येकं सर्ववस्तुषु पुष्कलप्रतीत्यर्हस्थितिविशेष एवानुप्रवेशः ; अनेन 'सत्यं ज्ञानमनन्तं ब्रह्म। योवेद निहितं गुहायाम्'इतिमन्त्रोक्तमनन्तस्य ब्रह्मणः हृदयगुहानिहितत्वमुपपादितं भवति ; तदनुप्रविश्येति—सच्छब्देन निर्विकारतया सततैकरूपश्चेतन उच्यते , त्यच्छब्देन-पूर्वपूर्वावस्थात्यागविकारस्पृष्टमचेतनमुच्यते, ब्रह्मैव चेतनाचेतननामरूपभाक् भवतीत्यर्थ ; ननु ब्रह्मण एव सर्वोपादानतया सर्वभावविकारास्पदत्वं स्यादित्याशङ्क्याह—निरुक्तंचेत्यादि। जातिगुणक्रियावत्तया जातिगुणाभिधायिशब्दवाच्यमचेतनं - निरुक्तम् ; जातिगुणादिशून्यं चेतनजातम् अनिरुक्तम्;'एता भूतमात्राः प्रज्ञामात्रास्वर्पिताः' इत्युक्तरीत्याऽचेतनवर्गाधारभूतं चेतनजातं-निलयनम् ; आश्रितमचेतनजातन्तु-अनिलयनम् ; विज्ञानञ्च-अविज्ञानञ्च-अजडस्वरूपञ्चेतनम्, जडस्वरूपमचेतनञ्च, सत्यञ्चेतिनिर्विकारतया सत्यत्वं चेतनस्य, इतरस्याचेतनस्य त्वतथात्वम्; ततश्च निरुक्तत्वानिरुक्तत्वादियुक्तसत्यानृतशब्दितचेतनाचेतननामरूपभाग्भवदपि ब्रह्म सत्यमेवाभवत् - अजहन्निर्विकारत्वलक्षणस्वस्वभावमेवाभवदित्यर्थः ; यदिदमिति-यस्माच्चेतनाचेतनात्मकवर्गानुप्रविष्टतया सत्यशब्दितस्य ब्रह्मण आत्मत्वम् , अत एव सर्वमपि चेतनाचेतनात्मकं जगत् ; शास्त्रदृष्टिमन्तः पुरुषाः पराशरपराङ्कुशादयः सत्यमित्याचक्षत इत्यर्थः ॥

शं॥ननु 'स्वर्गकामो यजेत' 'न कलञ्जं भक्षयेत्' इत्यादौ आत्मव्यतिरेकदर्शिनाम् अप्रवृत्तौ केवलदेहाद्यात्मदृष्टीनां च, अतः कर्तुः अभावात् शास्त्रनर्थक्यमिति चेत्—न ; यथाप्रसिद्धत एव प्रवृत्तिनिवृत्त्युपपत्तेः । ईश्वरक्षेत्रज्ञैकत्वदर्शी ब्रह्मवित् तावत् न प्रवर्तते । तथा नैरात्म्यवाद्यपि 'नास्ति परलोकः' इति न प्रवर्तते । यथाप्रसिद्धस्तु विधिप्रतिषेधशास्त्रश्रवणान्यथानुपपत्त्या अनुमितात्मास्तित्वः आत्मविशेषानभिज्ञः कर्मफलसञ्जाततृष्णः श्रद्दधानतया च प्रवर्तते इति सर्वेषां नः प्रत्यक्षम् । अतः न शास्त्रानर्थक्यम् ॥

विवेकिनाम् अप्रवृत्तिदर्शनात् तदनुगामिनाम् अप्रवृत्तौ शास्त्रानर्थक्यम् इति चेत्—न; कस्यचिदेव विवेकोपपत्तेः। अनेकेषु हि प्राणिषु कश्चिदेव विवेकी स्यात्,यथैव इदानीम् । न च विवेकिनम् अनुवर्तन्ते मूढाः, रागादिदोषतन्त्रत्वात् प्रवृत्तेः, अभिचरणादौ च प्रवृत्तिदर्शनात् , स्वाभाव्याच्च प्रवृत्तेः; 'स्वभावस्तु प्रवर्तते' इति हि उक्तम् ॥

तस्मात् अविद्यामात्रः संसारः यथादृष्टविषयः एव। न क्षेत्रज्ञस्य केवलस्य अविद्या-

रा॥मसृजत'इत्यारभ्य* 'सत्यञ्चानृतंच सत्यमभवत्'†इति।अत्रापि श्रुत्यन्तरसिद्धश्चिदचि- तोः परमपुरुषस्य च स्वरूपविवेकः स्मारितः ‡'हन्ताहमिमास्तिस्रो देवता अनेन जीवेना-

ता॥स्वप्रकरणस्थैरपत्याह--अत्रापीति। समानाधिकरणनिर्देशवतोः छान्दोग्यतैत्तिरीयकप्रकरणयोरित्यर्थः। जीवेनात्मना-जीवेन मयेत्यर्थः। '¹सिंहेनभूत्वा बहवो मयात्ताः'इतिवत्।'तिस्रो देवता अनेन जीवेनात्म- नानुप्रविश्य इत्यत्रचिदनुप्रवेशो व्यक्तः ; जीवेतु सामानाधिकरण्यमात्रम्; तदनुप्रवेशकृतमिति तैत्तिरीयके

प्र-पा॥ *तैत्ति. उप. आनन्द. ६ अनु ॥

† इत्याद्याः पा ॥

‡ छा-उप. ६ ३-२ ॥ सेयन्देवतैक्षत हन्ताहमिमाः ...व्याकरवाणीति।—अत्र 'संज्ञामूर्तिकॢप्त्यधिकरणे भगवता भाष्यकृता'सेयंदेवता' इत्यादिवाक्यस्यायमर्थः-सेयं सच्छब्दिता परा देवता, इमाः-तेजोबन्नरूपाः तिस्रो देवताः, अनेन जीवेन जीवसमष्टिविशिष्टेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि-देवादिविचित्रसृष्टिन्तन्नामधेयानिच करवाणि इति। 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इत्यत्र 'हन्ताहमिमास्तिस्रो देवताः' इति तेजोन्नानि देवताशब्देन विशेष्यन्ते'इति भाषितत्वात् अत्र'देवताः'इति अभिमानिदेवतापरत्वं वक्तव्यम्,ततश्च'इमास्तिस्रोदेवताः'इत्यस्यायमर्थः - स्वस्वाभिमानिदेवताधिष्ठितानि तेजोबन्नानीति तेजोबन्नाभिमानिदेवतानां परमात्मव्यतिरिक्तत्वे प्रमाणाभावात्,परमात्मनस्सर्वाभिमानिदेवतात्वसम्भवाच्च परमात्मरूपदेवताधिष्ठिताः-इति; परमात्मव्यतिरिक्तदेवताभ्युपगमेऽपि देवताशब्दस्य तदधिष्ठितत्वमेवार्थः ॥

१. विष्णुधर्मे १८-१७॥ क्षत्रबन्धुवृत्तान्ते 'सिंहेन भूत्वा बहवो मयात्ताः व्याघ्रेण भूत्वा बहवो मयात्ताः । तथान्यरूपैर्बहवो मयात्ताः संम्भक्षितोऽहं बहुभिस्तथैव ॥

शा॥तत्कार्यं च। न च मिथ्याज्ञानं परमार्थवस्तु दूषयितुं समर्थम्। न हि ऊषरदेशं स्नेहेन पङ्कीकर्तुं शक्नोति मरीच्युदकम्। तथा अविद्या क्षेत्रज्ञस्य न किंचित् कर्तुं शक्नोति। अतः उक्तम् इदं 'क्षेत्रज्ञं चापि मां विद्धि' 'अज्ञानेनावृतं ज्ञानम्' इति च॥

अथ किम् इदं संसारिणामिव 'अहम् एवं' 'मम इदम्' इति पण्डितानामपि ?

शृणु ; इदं तत् पाण्डित्यं, यत् क्षेत्रे एव आत्मदर्शनम्। यदि पुनः क्षेत्रज्ञम् अविक्रियं पश्येयुः, ततः न भोगं कर्म वा काङ्क्षेयुः 'मम स्यात्' इति। विक्रियैव हि भोगकर्मणी। अथ एवं सति, फलार्थित्वात् अविद्वान् प्रवर्तते। विदुषः पुनः अविक्रियात्मदर्शिनः फलार्थित्वाभावात् प्रवृत्त्यनुपपत्तौ कार्यकरणसङ्घातव्यापारोपरमे निवृत्तिः उपचर्यते॥

इदं च अन्यत् पाण्डित्यं केषांचित् अस्तु—क्षेत्रज्ञः ईश्वर एव। क्षेत्रं च अन्यत् क्षेत्रज्ञस्यैव विषयः। अहं तु संसारी सुखी दुःखी। संसारोपरमश्च मम कर्तव्यः क्षेत्रक्षेत्रज्ञविज्ञानेन, ध्यानेन च ईश्वरं क्षेत्रज्ञं साक्षात्कृत्वा तत्स्वरूपावस्थानेनेति। यश्च एवं बुध्यते, यश्च बोधयति, नासौ क्षेत्रज्ञः इति॥

एवं मन्वानः यः सः पण्डितापशदः, संसारमोक्षयोः शास्त्रस्य च अर्थवत्त्वं करोमीति ; आत्महा च; स्वयं मूढः अन्यांश्च व्यामोहयति शास्त्रार्थसम्प्रदायरहितत्वात् श्रुतहानिम् अश्रुतकल्पनां च कुर्वन्। तस्मात्, असम्प्रदायवित् सर्वशास्त्रविदपि मूर्खवदेव उपेक्षणीयः॥

यत् उक्तम् 'ईश्वरस्य क्षेत्रज्ञैकत्वे संसारित्वं प्राप्नोति ; क्षेत्रज्ञानां च ईश्वरैकत्वे संसारिणः अभावात् संसाराभावप्रसङ्गः' इति, एतौ दोषौ प्रत्युक्तौ 'विद्याविद्ययोः

रा॥त्मनानुप्रविश्य नामरूपे व्याकरवाणि' *'तत्सृष्ट्वा तदेवानुप्राविशत्।तदनुप्रविश्य।सच्च त्यच्चाभवत् ..विज्ञानञ्चाविज्ञानञ्च।सत्यञ्चानृतञ्च सत्यमभवत्'इतिच। †एवम्भूतमेव नामरूपव्याकरणं ‡' तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत ' इत्यत्राप्युक्तम्।

ता॥व्यक्तमित्यभिप्रायेणाह—तत्सृष्ट्वेति । एवं जीवशरीरकपरमात्मानुप्रवेशान्नामरूपव्याकरणं नाम्नांच परमपुरुषपर्यन्तत्वं तत एव सामानाधिकरण्यमुख्यत्वंच सिद्धम् । एतदैकरस्यात्सर्वशाखाप्रत्ययन्यायेन चिदचिदनुप्रवेशोक्तिरहितप्रकरणान्तरेष्वपि नामरूपव्याकरणवचनमेवंप्रकारप्रवेशाभिप्रायपूर्वकमेवेत्याह —एवंभूतमेवेति । इत आरभ्य प्रागुक्तचोद्यानां क्रमेण परिहारः । तथाहि कारणविज्ञानेन कार्यस्य ज्ञातत्वं नाम कार्यशब्दनिर्दिष्टस्य द्रव्यस्य कारणविज्ञानेन विषयीकृतत्वम् । पूर्वमासीनं देवदत्तं दृष्ट्वा तमेव गच्छन्तमप्यवलोक्य 'असौ पूर्वमेव दृष्टः' इति हि वदति ; अतः

प्र·पा॥*तैत्ति. उप. आनन्द. ६-अनु॥ ६९५. पुटे व्याख्यातम्॥ †'अनेन जीवेन त्मनानुप्रविश्य' इति जीवस्य ब्रह्मात्मकत्वं. 'तदनुप्रविश्य सच्च त्यच्चाभवत् विज्ञाज्ञानं च इत्यनेनैकार्थ्यादात्मशरीरभावनिबन्धनमिति विज्ञायते' इत्याधिकंक्वचिद्दृश्यते ॥

‡ बृ उप. ३ ४-७ ॥ तद्धेदमिति-हशब्दो वृत्तार्थस्मरणे, तदिदं मिथुनादिलक्षणजगत् , तर्हि-तदा सृष्टेःप्राक्, अव्याकृतमासीत् अव्यक्तमासीत् , अव्यक्तशरीरकं ब्रह्मासीदित्यर्थः, नामरूपाभ्यां न व्याकृतामिति व्युत्पत्त्याऽव्याकृतशब्दस्याव्यक्तवाचकत्वम्; अव्यक्तत्वंच नामरूपविशिष्टतयानभिव्यक्तत्वम्; तत् -अव्याकृतशरीरकं ब्रह्म; 'नामरूपाभ्याम्' इतीत्थंभावे तृतीया; नामरूपवत्तया व्याक्रियत-व्याकृतमासीत्; व्याङ्भ्यामुपसर्गाभ्या विविच्य समन्तात् कृतमासीदित्यर्थः॥

शं॥वैलक्षण्याभ्युपगमात् ' इति । कथम् ?—अविद्यापरिकल्पितदोषेण तद्विषयं वस्तु पारमार्थिकं न दुष्यतीति । तथा दृष्टान्तः दर्शितः—मरीच्यम्भसा ऊषरदेशो न आर्द्रीक्रियते इति । संसारिणः अभावात् संसाराभावप्रसङ्गदोषोऽपि संसारसंसारिणोः अविद्याकल्पितत्वोपपत्त्या प्रत्युक्तः॥

ननु अविद्यावत्त्वमेव क्षेत्रज्ञस्य संसारित्वदोषः । तत्कृतं च सुखित्वदुःखित्वादि प्रत्यक्षम् उपलभ्यते इति चेत्—न; ज्ञेयस्य क्षेत्रधर्मत्वात्, ज्ञातुः क्षेत्रज्ञस्य तत्कृतदोषानुपपत्तेः । यावत् किञ्चित् क्षेत्रज्ञस्य दोषजातम् अविद्यमानम् आसञ्जयसि , तस्य ज्ञेयत्वोपपत्तेः क्षेत्रधर्मत्वमेव, न क्षेत्रज्ञधर्मत्वम्। न च तेन क्षेत्रज्ञः दुष्यति , ज्ञेयेन ज्ञातुः संसर्गानुपपत्तेः । यदि हि संसर्गः स्यात् , ज्ञेयत्वमेव नोपपद्येत । यदि आत्मनः धर्मः अविद्यावत्त्वदुःखित्वादिः, कथं भोः प्रत्यक्षम् उपलभ्येत , कथं वा क्षेत्रज्ञधर्मः । 'ज्ञेयं च तत् सर्वं क्षेत्रं, ज्ञातैव क्षेत्रज्ञः ' इति अवधारिते . ' अविद्यादुःखित्वादेः क्षेत्रज्ञविशेषणत्वं , क्षेत्रज्ञधर्मत्वं , तस्य च प्रत्यक्षोपलभ्यत्वम् ' इति विरुद्धम् उच्यते अविद्यामात्रावष्टम्भात् केवलम् ॥

अत्र आह—सा अविद्या कस्य ? इति । यस्य दृश्यते तस्य एव । कस्य दृश्यते इति ?

अत्र उच्यते—'अविद्या कस्य दृश्यते ? ' इति प्रश्नः निरर्थकः । कथं?—दृश्यते चेत् अविद्या, तद्वन्तमपि पश्यसि । न च तद्वति उपलभ्यमाने 'सा कस्य?' इति प्रश्नो युक्तः । न हि गोमति उपलभ्यमाने 'गावः कस्य ?' इति प्रश्नः अर्थवान् भवति ॥

रा॥अतः कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एवेति, कारणात् कार्यस्यानन्यत्वेन कारणविज्ञानेन कार्यस्य ज्ञाततयैकविज्ञानेन सर्वविज्ञानञ्च समीहितमुपपन्नतरम्। *'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति 'तिस्रो देवताः' इति सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात् सर्वे वाचकाश्शब्दाः अचिज्जीवविशिष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनश्शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम्। अतः स्थूलसूक्ष्मचिदचित्प्रकारं ब्रह्मैव कार्यं कारणं चेति ब्रह्मोपादानं जगत्। सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्मैव कारणमिति जगतो ब्रह्मोपादानत्वेऽपि सङ्घातस्योपादानत्वेन चिदचितोर्ब्रह्मणश्च स्वभावासङ्करोऽप्युपपन्नतरः। यथा शुक्लकृष्णरक्ततन्तुसङ्घातोपादानत्वेऽपि चित्रपटस्य तत्तत्तन्तुप्रदेश एव शौक्ल्यादिसम्बन्ध इति कार्यावस्थायामपि न सर्वत्र वर्णसङ्करः; तथा चिदचिदीश्वरसंघातोपादानत्वेऽपि जगतः कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वाद्यसङ्करः। तन्तूनां पृथक्स्थितियोग्यानामेव पुरुषेच्छया कदाचित्संहतानां कारणत्वं कार्यत्वं च; इह तु चिदचितोस्सर्वावस्थयोः परमपुरुषशरीरत्वेन तत्प्रकारतयैव पदार्थत्वात् तत्प्रकारः परमपुरुष एव कारणं कार्यञ्च; स एव स-

---

ता॥कार्यावस्थायाः पूर्वमज्ञातत्वेऽपि नास्य व्यवहारस्यामुख्यत्वमित्यभिप्रायेणाह—**अतः कार्यावस्थेति**। परपक्षेत्वेतदनुपपन्नतरमिति चाभिप्रेतम्। तथाहि—एकनिर्विशेषविज्ञानेन सर्वस्य ज्ञातत्वमित्यत्र ज्ञातव्यसर्वशब्दार्थाभावात्, सत्यमिथ्यार्थैक्यप्रसङ्गादिभिश्च सर्वस्य ज्ञातत्वमित्येतन्न घटते; सर्वस्य मिथ्यात्वेन ज्ञातत्वमिति योजनायामध्याहारादिदोषः; अविद्याविशिष्टैकब्रह्मविज्ञानेन तत्कार्यप्रपञ्चविज्ञानमिति विवक्षायामदूरविप्रकर्षेणास्मत्पक्ष एवानुप्रवेशः; सर्वप्रमाणसंक्षोभस्त्वधिकः; एवमेव पक्षान्तरयोरपि; सूक्ष्मचिच्छक्तिवैशिष्ट्यस्य दुष्परिहरत्वाद्विशिष्टैक्यविज्ञाने तत्कार्यविज्ञानमित्येव निर्वाह्यम्; तथाच निर्विकारनिर्दोषश्रुत्यविरुद्धोऽस्मत्पक्ष एवोपपन्नतरः—इति। परपक्षे सामानाधिकरण्यस्य लाक्षणिकत्वं तैरेवाभ्युपगतमिति न किंचिदत्र वक्तव्यमिति कृत्वा स्वपक्षे तन्मुख्यत्वमुपपादयति—**अहमिमा इति**। प्रकरणान्तराधीतानामपि तत्त्वानां संकुचिताभिधानप्रकरणेऽपि शाखान्तरनयेन समाहारमभिप्रेत्याह—**तिस्रो देवता इति सर्वमचिद्वस्तु निर्दिश्येति**। जगद्ब्रह्मणोस्स्वरूपतोऽत्यन्तभेदेऽपि विशिष्टवेषेण कार्यकारणयोरेकद्रव्यत्वसिद्धेर्जगतो ब्रह्मोपादानत्वं युज्यत इत्याह—**अतः स्थूलेति**। सामानाधिकरण्यव्यपदेशस्य मुख्यत्वादित्यर्थः। सत्कार्यवादाविरोधश्च सिद्ध इत्यभिप्रायः। उपादानावस्थायामैक्यापत्त्या प्रसक्तं स्वभावसंकरं परिहरति—**सूक्ष्मेति**। बालस्य युवत्वापत्तौ बालशरीरस्य तदभिमानिचेतनस्य च यथा स्वभावसंकरो नास्ति, तद्वदत्रापीत्यभिप्रायेण—**सङ्घातस्योपादानत्वेन**त्युक्तम्। एककारणारम्भात्कार्यदशायां प्रसक्तसंकरं निरस्यति—**यथा शुक्लेति**। ननु शुक्लकृष्णरक्ततन्तूपात्तस्य पटस्य न केनचिच्छुक्लेन कृष्णेन रक्तेन वा तन्तुविशेषेण विशेषतस्सामानाधिकरण्यं दृश्यते; 'तन्तवः पटाः' इति तु कथंचिदुच्येत; अतोऽत्रापि प्रकृतिपुरुषेश्वररूपसङ्घातोपात्तस्य जगत ईश्वरेण विशेषतस्सामानाधिकरण्यं न स्यादित्यत्राह—**तन्तूनामिति**। अयमभिप्रायः—न सर्वप्रकारसाधर्म्यमभिप्रेत्य तन्तुपटदृष्टान्तः; अपितु स्वरूपतोऽत्यन्तभिन्नानां संभूय कार्यदशायामपि स्वभावासंकरमात्रमभिप्रेत्य; सामानाधिकरण्यं तु यत्र शब्दानामेकविशेष्यपर्यवसानहेतुभूतप्रकारप्रकारिभावोऽस्ति, तत्र स्यात्, नान्यत्रेति विशेषः।

---

प्र-पा॥ *छा. उप. ६ ३-२॥

रा॥र्वदा सर्वशब्दवाच्य इति विशेषः। स्वभावभेदस्तदसङ्करश्च तत्रचात्रच तुल्यः। एवञ्च सति परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावाभावादविकृतत्वमुपपन्नतरम्। स्थूलावस्थस्य नामरूपविभागविभक्तस्य चिदचिद्वस्तुन आत्मतयावस्थानात्कार्यत्वमप्युपपन्नम्। अवस्थान्तरापत्तिरेवहि कार्यता। निर्गुणवादाश्च परस्यब्रह्मणो हेयगुणसंबन्धाभावादुपपद्यन्ते। *'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः' इति हेयगुणान् प्रतिषिध्य *'सत्यकामस्सत्यसङ्कल्पः' इतिकल्याणगुणगणान्विदधतीयंश्रुतिरेवान्यत्र सामान्येनावगतं गुणनिषेधं हेयगुणविषयं व्यवस्थापयति। 'ज्ञानस्वरूपंब्रह्म' इति वादश्च सर्वज्ञस्य सर्वशक्तेर्निखिलहेयप्रत्यनीककल्याणगुणाकरस्य ब्रह्मणस्स्वरूपं ज्ञानैकनिरूपणीयं स्वप्रकाशतया ज्ञा-

ता॥कस्तर्हि विशेष इत्यत्रोपजीव्याशमाह—**स्वभावे**ति। उपादानत्वेन कार्यभावेऽपि निर्विकारश्रुत्यविरोधमाह—**एवंच सती**ति। एवंविशिष्टस्योपादानत्वात्सर्वदैवासंकीर्णस्वभावत्वाच्चेत्यर्थः। निर्विकारश्रुतिस्तु स्वरूपविषया; उपादानत्वकार्यत्वश्रुतिर्विशिष्टविषयेति नानयोः परस्परविरोधः। स्वरूपपरिणामपक्षे तु निर्विकारश्रुतेर्न कश्चिद्विषय इति भावः। नहि वयं स्वरूपैकदेशेऽपि विकारं ब्रूम इत्यभिप्रायेण—**उपपन्नतर**मित्युक्तम्। अविकृतस्य कार्यत्वप्रकारमाह—**स्थूलावस्थस्ये**ति। **आत्मतयावस्थानादि**ति—तदातनतत्तन्नियमनधारणावस्थाविशेष एव हि कार्यत्वम्; कार्यशब्दोऽत्र नामरूपव्याकरणस्य अन्तर्यामिपर्यन्तत्वश्रुतेस्तत्पर्यन्त इति तस्य मुख्यत्वमिति भावः। तथापि प्राप्ताप्राप्तविवेकेन विशेषणस्यैव कार्यत्वमिति चोद्यं परिहरति—**अवस्थे**ति। विशेषणानामवस्थान्तरापत्तौ तदवस्थतत्तन्नियमनविशिष्टत्वलक्षणावस्थान्तरापत्तिर्विशेष्येऽप्यस्तीति भावः। उत्सर्गापवादन्यायेन सगुणश्रुत्यविरोधाय निर्गुणवादानां विषयं व्यवस्थापयति—**निर्गुणवादाश्चे**ति। एवं व्यवस्थापितं विषयभेदमेकस्मिन्नेव वाक्ये श्रुतिरेव दर्शयतीत्याह—**अपहते**ति। अवधारणेन न्यायनैरपेक्ष्यं सूचितम्। आर्थगुणनिषेधं परिहरति—**ज्ञानस्वरूप**मिति। **सर्वज्ञस्य सर्वशक्ते**रित्यादिकं श्रुत्यन्तरसिद्धाविरोधार्थम्। **ज्ञानैकनिरूपणीय**मिति—स्वरूपनिरूपणधर्मशब्दा हि धर्ममुखेन धर्मिणमपि प्रतिपादयन्तीति भावः। सूत्रितंच 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' 'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्' इति। अनुक्तसमुच्चयार्थेन सौत्रचकारेण द्योतितं वृत्त्यन्तरमभिप्रेत्याह—**स्वप्रकाशतया ज्ञानस्वरूपंचे**ति। धर्मभूतज्ञानवज्ज्ञानशब्दप्रवृ-

प्र-प॥ * छा. ८-७-१॥

१. ब्रह्मसू. २-३-२९॥ 'तुशब्दः-चोद्यं व्यावर्तयति। तद्गुणसारत्वात्-विज्ञानगुणसारत्वात्, आत्मनः-'यो विज्ञाने तिष्ठन्' इत्यादिषु विज्ञानमिति व्यपदेशः; विज्ञानमेवास्य सारभूतो गुणः; यथा प्राज्ञस्य ब्रह्मणो विपश्चितेति विपश्चितोऽपि 'सत्यं ज्ञानम्' इति व्यपदेशः॥

२. शारी. २-३-३०॥ यावदात्मभावित्वात्-आत्मस्वरूपानुबन्धित्वात् ज्ञानस्य तेन व्यपदेशो न दोषः; स्वरूपानुबन्धिधर्मत्वेन गोत्वादीना खण्डादेः गौरित्यादिव्यपदेशोहि दृश्यते; चकारात्-ज्ञानवदात्मनोऽपि स्वप्रकाशत्वेन विज्ञानमिति व्यपदेशो नदोष इति समुच्चिनोति॥

शं॥ननु विषमो दृष्टान्तः—गवां तद्वतश्च प्रत्यक्षत्वात् तत्सम्बन्धोऽपि प्रत्यक्ष इति प्रश्नो निरर्थकः। न तथा अविद्या तद्वांश्च प्रत्यक्षौ, यतः प्रश्नः निरर्थकः स्यात्॥

अप्रत्यक्षेण अविद्यावता अविद्यासम्बन्धे ज्ञाते, किं तव स्यात्? अविद्यायाः अ-

रा॥नस्वरूपश्चेत्यभ्युपगमादुपपन्नतरः।*'यस्सर्वज्ञस्सर्ववित्'†'परास्य शक्तिर्विविधैवश्रूयते स्वाभाविकीज्ञानबलक्रियाच'‡'विज्ञातारमरे केन विजानीयात्'इत्यादिका ज्ञातृत्वमावेदयन्ति,§'सत्यं ज्ञानम्'इत्यादिकाश्च ज्ञानैकनिरूपणीयतया स्वप्रकाशतया च ज्ञानस्वरूपताम्; ¶'सोऽकामयत। बहु स्याम्' 'तदैक्षत बहु स्याम्' ‖'तन्नामरूपाभ्यां व्याक्रियत' इति ब्रह्मैव स्वसङ्कल्पाद्विचित्रस्थिरत्रसरूपतया नानाप्रकारमवस्थितमिति तत्प्रत्यनीकाब्रह्मात्मकवस्तुनानात्वमतत्त्वमिति प्रतिषिध्यते। ÷'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' +'नेह नानास्ति किञ्चन' ×'यत्र हि द्वैतमिव भवति। तदितर इतरं पश्यति।

---

ता॥त्तिनिमित्तयोगोऽप्यस्तीति भावः।निर्विशेषवादिनो ज्ञातृत्वं परित्यजन्ति;वैशेषिकादयस्तु ज्ञानत्वम्; उभयेषामपि श्रुतिविरोधमभिप्रेत्य स्वपक्षे तदानुगुण्यमाह—यस्सर्वज्ञइति। भेदनिषेधकवाक्यानां भेदविधायकवाक्याविरुद्धं विषयमाह—सोऽकामयतेति। ब्रह्मगुणविभूतिरूपभेदस्य विहितत्वात्तन्नि-

---

प्र-पा॥ * मु. १-१-९॥

† श्वे.६-८॥ ‡ बृ. ४-४-१४॥ § तै-आन-१-१॥ ¶ तै-आन. ६॥ ‖छा. ६-२-३॥ ÷ बृ. ३-४-७॥

+ कठोप. २-४-१०.॥ 'मृत्योस्स...पश्यति। मनसैवेदमाप्तव्यं नेह नानास्ति किंचन'॥इह-परमात्मनि, भेदमिव, यः-पश्यति, सः,मृत्योः-संसारात्, मृत्युं संसारं, प्राप्नोतीत्यर्थः॥ १०॥ ननु अस्माकं सर्वात्मभूतपरमात्मतत्त्वं कुतो नोपलभ्यत इत्यत्राह - मनसैवेदमाप्तव्यम् - इदं परमात्मस्वरूपं विशुद्धमनोग्राह्यमित्यर्थः; उक्तमेवार्थं दृढीकरणाय पुनरभ्यस्यति-नेह नानास्ति किंचनेति। स्पष्टोऽर्थः॥

× बृ-उप. ४-४-१४. 'यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरं शृणोति तदितर इतरमभिवदति तदितर इतरम्मनुते तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं जिघ्रेत् तत्केन कं पश्येत् तत्केन कं शृणुयात् तत्केन कमभिवदेत् तत्केन कं मन्वीत तत्केन कं विजानीयात्, येनेदं सर्वं विजानाति तं केन विजानीयात् विज्ञातारमरे केन विजानीयात्' इति॥ एवं मुक्तौ देहात्मभ्रमनिवृत्तिमुक्त्वा स्वनिष्ठताभ्रमनिवृत्तिं प्रतिपादयति—यत्र हीति। यत्र-यस्यामवस्थायाम्, द्वैतमिव भवति-स्वनिष्ठतया परमात्मनः पृथगिव भवति, स्वतन्त्र इव भवतीति यावत्; स्वतन्त्रस्याप्रामाणिकत्वद्योतनार्थमिवशब्दः; तदितर इति—तत्-तदा, इतरः-भिन्नात्मकः, इतरं-भिन्नात्मकं, जिघ्रति - अत्रेतरेणेत्यध्याहार्यम्; इतरत्र 'तत्केन कं जिघ्रेत्' इति दर्शनात्; इतरेण स्वतन्त्रेण करणेन जिघ्रतीत्यर्थः; तदितर इतरं पश्यतीति—यत्र-यदा, सर्वं वस्तु एकात्मकमेवाभूत्, तदा केन-भिन्नात्मकेन करणेन, कं-भिन्नात्मकं, जिघ्रेदित्यर्थः; इतरशब्दस्सर्वत्र स्वतन्त्रवस्तुपरः; एवं सर्वत्र द्रष्टव्यम्; अत्र सदैकात्मकस्य जगतः कालभेदेन भिन्नात्मकत्वासम्भवात् 'आत्मैवाभूत्'—एकात्मकत्वेन जातमभूदित्येवार्थः; यस्यात्मभेद -

---

शं॥नर्थहेतुत्वात् परिहर्तव्या स्यात्। यस्य अविद्या, सः तां परिहरिष्यति। ननु ममैव अविद्या। जानासि तर्हि अविद्यां तद्वन्तं च आत्मानम्। जानामि, न प्रत्यक्षेण।

अनुमानेन चेत् जानासि, कथं सम्बन्धग्रहणम्? न हि तव ज्ञातुः ज्ञेयभूतया अविद्यया तत्काले सम्बन्धः ग्रहीतुं शक्यते, अविद्याविषयित्वेनैव ज्ञातुः उपयुक्तत्वात्। न च ज्ञातुः अविद्यायाश्च सम्बन्धं यः ग्रहीता, ज्ञानं वा अन्यत् तद्विषयं सम्भवति; अनवस्थाप्राप्तेः। यदि ज्ञात्रापि ज्ञेयसम्बन्धो ज्ञायेत, अन्यः ज्ञाता कल्प्येत। तस्यापि अन्यः, तस्यापि अन्यः इति अनवस्था अपरिहार्या। यदि पुनः अविद्या ज्ञेया,

रा॥ यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिना; न पुनः *'बहु स्यां प्रजायेय' इत्यादिश्रुतिसिद्धं स्वसङ्कल्पकृतं ब्रह्मणो नानानामरूपभाक्त्वेन नानाप्रकारत्वमपि निषिध्यते। †'यत्र त्वस्य सर्वमात्मैवाभूत' इति निषेधवाक्यारम्भे च तत्स्थापितं ‡'सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेद' §'तस्यह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः' इत्यादिना। एवं चिदचिदीश्वराणां स्वरूपभेदं स्वभावभेदं च वदन्तीनां कार्यकारणभावं कार्यकारणयोरनन्यत्वं वदन्तीनां च सर्वासां श्रुतीनामविरोधः, (चिदचितोः परमात्मनश्च सर्वदा शरीरात्मभावं शरीरभूतयोः कारणदशायां नामरूपविभागानर्हसूक्ष्मदशापत्तिं कार्यदशायां च तदर्हस्थूलदशापत्तिं वदन्तीभिः) श्रुतिभिरेव

ता॥षेधो न शक्य इति भावः।पराभिमतं श्रुतिविरोधेन प्रतिक्षिपति—न पुनरिति। 'यत्र त्वस्य' इत्यादेरब्रह्मात्मकनानात्वनिषेधे तात्पर्यं श्रुत्यैव ह्युक्तमित्याह—निषेधवाक्यारम्भ इति। अन्यथोपक्रमविरोध इति भावः। तत्स्थापितमिति—'बहु स्याम्' इत्यादिश्रुत्यन्तरसिद्धं वक्ष्यमाणनिषेधानास्कन्दितत्वेनासंजातविरोधदशायां स्थापितमित्यर्थः। अथ स्वपक्षे सर्वप्रकाराविरोधं परपक्षेषु च सर्वप्रकारविरोधं श्रुतहानाश्रुतकल्पनादिरूपं सङ्ग्रहेण वदन्नुपसंहरति—एवमिति। श्रुतिभिरेवेति—न्यायेऽपि

प्र-पा॥ प्रतीतिः कियत्यप्यस्ति, तस्य कर्तृकर्मकरणेषु भिन्नात्मकत्वप्रतीतिरनुवर्तते; यस्मात्मभेदप्रतीतिर्यदा सर्वथानास्ति,तदा विरुद्धधर्मवत्तया प्रतीतेष्वपि कर्तृकर्मकरणेषु भिन्नात्मकतया प्रतीतिस्सर्वथा नास्ति—इति पर्यवसितोऽर्थः; शिष्टं स्पष्टम्; येनेदमिति—येन परमात्मना प्रसन्नेनानुगृहीतः सर्वज्ञो भवति, तं - परमात्मानं, केन-हेतुना, विजानीयात्; विज्ञातारमिति — अत्र विज्ञातृशब्देन प्रक्रमोदितजगत्कारणत्वाक्षिप्तसार्वज्ञाश्रयः परमात्मैवोच्यते; तादृशं विज्ञातारं-सर्वज्ञं परमात्मानं प्रक्रमोदितध्यानं विना केन-केवलयज्ञदानाद्युपायेन विजानीयात् इत्यर्थः। अस्यार्थो वाक्यान्वयाधिकरणश्रीभाष्यश्रुतप्रकाशिकादिषु विस्तरेण द्रष्टव्यः॥

*१. तै आन. ६, अनु;-छा. ६-२-३॥

†बृ-उप. ४-४-१४॥ ‡बृ. ४-४-६॥

§ सुबा. २. खं. 'तस्यैतस्य' इतिपाठः। बृ-उप. ४-४-१०; ६-५-११॥'अस्यमहतः' इति.पा॥ भाष्यकृता बृहदारण्यकेऽपि 'तस्य ह्वा एतस्य महतः' इत्येव पाठः स्वीकृत इति वाक्यान्वयाधिकरणश्रीसूक्तितोऽवगम्यते। तस्य ह्वा एतस्य...ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राणि अनुव्याख्यानानि व्याख्यानानि अस्यैवैतानि सर्वाणि निश्वसितानि'॥ महतो भूतस्य-परमात्मनो, निश्वसितम्-अनायासेनोद्गतम्, एतत्-वक्ष्यमाणमित्यर्थः; किन्तत् इत्यत्राह यदृग्वेद इति। विद्याः-चतुष्षष्टिविद्याः, श्लोकाः-स्मृतिरूपाः, अनुव्याख्यानानि-भाष्यायव्याख्यानानि, व्याख्यानानि-भाष्यरूपाणि, एतानि सर्वाणि भगवतो निश्वसितानि अयत्नेनोद्गतानीत्यर्थः। यद्यपि सूत्रादयो व्यासादुद्गता इति पुराणादिप्रसिद्धिः,तथापि तेषामग्भगवदंशत्वात् भगवतो निश्वसितत्वोक्तिरुपपद्यत इति द्रष्टव्यम्;सुबा-'तस्यैतस्य महतो भूतस्य...यजुर्वेदस्सामवेदोऽथर्ववेदःशिक्षाकल्पो व्याकरणं निरुक्तं छन्दोविचितं ज्योतिषामयनं न्यायो मीमांसा धर्मशास्त्राणि व्याख्यानान्युपव्याख्यानानि सर्वाणि च भूतानि'॥ ( ) कुण्डलितं क्वचिद्दृश्यत इति केचित्॥

शं॥अन्यद्धि ज्ञेयं, ज्ञेयमेव। तथा ज्ञातापि ज्ञातैव, न ज्ञेयः भवति। यदा च एवम्, अविद्यादुःखित्वाद्यैः न ज्ञातुः क्षेत्रज्ञस्य किञ्चित् दुष्यति॥

ननु अयमेव दोषः, यत् दोषवत्क्षेत्रविज्ञातृत्वम्; इति चेत्—न, विज्ञानस्वरूपस्य अविक्रियस्यैव विज्ञातृत्वोपचारात्; यथा उष्णतामात्रेण अग्नेः तप्तिक्रियोपचारः, तद्वत्।

रा॥ज्ञायत इति ब्रह्माज्ञानवादस्यौपाधिकब्रह्मभेदवादस्यान्यस्याप्यपन्यायमूलस्य सकलश्रुतिविरुद्धस्य न कथञ्चिदप्यवकाशो दृश्यत इत्यलमतिविस्तरेण ॥ २ ॥

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३

तत्क्षेत्रं यच्च-यद्द्रव्यं, यादृक्च-येषामाश्रयभूतं, यद्विकारि-ये चास्य विकाराः, यतश्च-यतो हेतोरिदमुत्पन्नं-यस्मै प्रयोजनायोत्पन्नमित्यर्थः, यत्-यत्स्वरूपं चेदं, स च यः-स च क्षेत्रज्ञो यः-यत्स्वरूपः, यत्प्रभावश्च-ये चास्य प्रभावाः, तत्सर्वं, समासेन-सङ्क्षेपेण मत्तः शृणु ॥ ३ ॥

ता॥नात्यन्तापेक्षा ; स्फुटतरत्वादस्यार्थस्येति भावः।अन्यस्यापीति—यादवप्रकाशनैयायिकाद्यभिमतयोजनासंग्रहः । अपन्यायमूलस्य सकलश्रुतिविरुद्धस्येत्युभयं ब्रह्माज्ञानवादिषु सर्वेषु नेतव्यम् ॥

शृण्वत एवार्जुनस्य पुनः 'शृणु' इत्यवधानार्थमुच्यते—'तत्क्षेत्रम्' इति । 'महाभूतानि' इत्युपक्रम्य 'संघातः' इत्यन्तवक्ष्यमाणपरामर्शादाद्यन्तौ यच्छब्दौ जडद्रव्यतत्संघातविषयावित्यपुनरुक्तिरित्यभिप्रायेणाह—यद्द्रव्यमिति । वक्ष्यमाणेन्द्रियाद्याश्रयत्वानुसारेण यादृक्छब्दार्थमाह—येषामाश्रयभूतमिति । ये विकारा अस्य कार्यतया सन्ति, तद्यद्विकारि ; तत्र यच्छब्दनिर्दिष्टे तात्पर्यमिति प्रकाशनाय—येचास्य विकाराइत्युक्तम् । 'यतः' इति नोपादानादिपरं, प्रथमं तदुक्तेरित्यभिप्रायेणाह— यतो हेतोरिति । चेतनावृतिः' इति वक्ष्यमाणं हेतुविशेषमाह—यस्मै प्रयोजनायेति । क्षेत्रकर्तुरीश्वरस्य धीस्थतया प्रयोजनमपि हेतुः ; प्रयुज्यतेच 'अध्ययनेन वसति' इति । यत्स्वरूपमिति-संघातपरम्।सन्निवेशविशेषो हि शरीरत्वादि; अतः प्रथमयच्छब्दो जडाजडद्रव्यविशेषनिर्धारणार्थः; द्वितीयस्तु जडत्वनिश्चये जडद्रव्येष्वनेकेष्वन्यतमात्मकत्वसंघातात्मकत्वनिश्चयार्थ इति भावः।'माम्'इति परमात्मनोऽपि प्रसङ्गात्तत्परामर्शभ्रमव्युदासायाह—सच क्षेत्रज्ञ इति । 'यो यत्प्रभावः' इत्युभाभ्यां स्वरूपप्रकारयोर्निर्देशः प्रभावा आश्चर्यभूताः प्रकृष्टास्स्वभावविशेषाः ॥ ३ ॥

प्र-पा॥१. गी-१३-५॥ २. गी-१३-६॥

शं॥यथा च अत्र भगवता क्रियाकारकफलात्मत्वाभावः आत्मनि स्वत एव दर्शितः अविद्याध्यारोपितः एव क्रियाकारकादि आत्मनि उपचर्यते ; तथा तत्रतत्र 'य एनं वेत्ति हन्तारं' 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः' 'नादत्ते कस्यचित्पापम्'इत्यादिप्रकरणेषु भगवता दर्शितम् ; तथैव च व्याख्यातम् अस्माभिः । उत्तरेषु च प्रकरणेषु दर्शयिष्यामः ॥

हन्त, तर्हि आत्मनि क्रियाकारकफलात्मतायाः स्वतः अभावे, अविद्यया च अध्यारोपितत्वे , 'कर्माणि अविद्वत्कर्तव्यान्येव , न विदुषाम्' इति प्राप्तम् । सत्यम्, एवं प्राप्तम् , एतदेव 'नहि देहभृता शक्यम्' इत्यत्र दर्शयिष्यामः । सर्वशास्त्रार्थोपसंहारप्रकरणे च 'समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा' इत्यत्र विशेषतः दर्शयिष्यामः । अलम् इह बहुप्रपञ्चेन, इति उपसंह्रियते ॥ २ ॥

'इदं शरीरम्'इत्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकः अयम् उपन्यस्यते 'तत्क्षेत्रं यच्च' इत्यादि , व्याचिख्यासितस्य हि अर्थस्य संग्रहोपन्यासः न्याय्यः इति—

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४

रा॥नदिदं क्षेत्रक्षेत्रज्ञयाथात्म्यम् ऋषिभिः पराशरादिभिः बहुधा बहुप्रकारं गीतम्—*'अहं त्वं च तथान्ये च भूतैरुह्याम पार्थिव। गुणप्रवाहपतितो भूतवर्गोऽपि यात्ययम्॥ कर्मवश्या गुणा ह्येते सत्त्वाद्याः पृथिवीपते । अविद्यासञ्चितं कर्म तच्चाशेषेषु जन्तुषु ॥ आत्मा शुद्धोऽक्षरश्शान्तो निर्गुणः प्रकृतेः परः'; तथा † 'पिण्डः पृथग्यतः पुंसः शिरः-

ता॥स्वेनोपदिश्यमानस्यार्थस्येतिहासपुराणमीमांसानुगृहीतानेकश्रुतिसिद्धत्वमाह—'ऋषिभिः' इति श्लोकेन । विशदोपबृंहणवाक्यानुसारेण अविशदवेदवाक्यार्थनिश्चयाय प्रथममृषिभिर्गीतत्वोक्तिः । राजसतामसोपबृंहणव्यवच्छेदाय ऋषिशब्दोक्तान्विशिनष्टि —पराशरादिभिरिति । बहुप्रकारमिति-अर्थस्यैकत्वेऽपि वचनव्यक्तौ रथचक्रनद्यादिकल्पनाप्रकारभेदः। यद्वा संक्षेपविस्तरादिरूपेणेत्यर्थः।अविविक्तदेहात्मस्वरूपस्य राज्ञो वाह्यवाहकत्वोक्तिप्रतिक्षेपार्थं वाक्यम्—अहंत्वंचेति। अध्यात्मगन्धिवाक्यश्रवणमूलस्य कस्त्वमिति प्रश्नस्योत्तरं—पिण्डइति। "'शिरःपाण्यादिलक्षणः' इत्यनेन कृत्स्नैकदेशचे-

प्र-पा॥ *वि पु.२-१३-६९-७१॥ जडभरतोपाख्याने-'आत्माशुद्धोऽक्षरः'इत्यस्य'प्रवृद्ध्यपचयौ नास्य चैकस्याखिलजन्तुषु'इतीदमुत्तरार्धम्। अत्र विष्णुचित्तीयं 'यदहं त्वया नोह्ये केन तर्हीत्यत आह-अहन्त्वं चेति। भूतैः-देहत्वेन परिणतैः ; भूतसंघातस्य च गमनादिव्यापारभेदो गुणकृत इत्याह—गुणप्रवाहेति। गुणपरिणामरूपतीव्रस्रोतोवेगपरतन्त्रो याति-तृणमिव वायूदकादिभिः; दुर्बलमिव दुष्टाश्वाः, अन्तःकरणपर्यन्तं संघातं तत्स्था गुणा गमनासनेच्छाद्वेषादिरूपेण बहुधा प्रवर्तयन्ति । अत्र 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि' इत्याद्यनुसन्धेयम्॥ ६९ ॥ गुण श्च प्राचीनकर्मायत्तप्रवृत्तय इत्याह—कर्मवश्या इति। कर्मचाविद्यामूलमित्याह—अविद्येति। अनात्मसु देवादिदेहेषु आत्मबुद्धिरविद्या ; तच्चाविद्यामूलं कर्म ब्रह्मादिसर्वजन्तुसाधारणमित्याह—तच्चा शेषेषुजन्तुष्विति। एवमात्मनो दृश्यत्वं वाहकत्वञ्च नास्तीत्युक्तम् ॥ ७० ॥ अथ पवित्रत्वादिविशेषणं नास्तीत्याह-—आत्मेति । शुद्धः कर्मरहितः, पूयशोणितायस्पृष्टश्च, अक्षरः-अविनाशी, शान्तः अशनायाद्यूर्मिषट्करहितः, निर्गुणः सत्त्वाद्यगुण';अत्र हेतुः-प्रकृतेः पर इति।अतः प्रवृद्ध्यपचयौ नास्य,हेत्वन्तरमाह—एकस्येति। एकस्य-असंघातरूपस्य, गगनपरमाण्वादेः, 'अहंत्वंच तथान्येच' इतिवत् यथामयि, तथा सर्वेषु आत्मसु साधारणमेतत् रूपमित्याह—अखिलजन्तुष्विति । उक्तमखिलजन्तुषु द्रष्टव्यमिति; यद्वा अखिलजन्तुषु एकस्येति सम्बन्धः ; जन्तुशब्दो देहविशिष्टात्मवाची । जन्तुषु आत्मांश एक एवेत्यर्थः; देहानां संघातत्वात् प्रत्येकमनेकत्वम्' इति ॥

† वि-पु. २-१३-८९ ॥ अत्रापि विष्णुचित्तीयं — 'पिण्ड इति ॥ एवं जिह्वाद्याधारशिरःपादपाण्यादिसमुदायो देहोऽपि नात्मा-जागरे 'मम देहः' इति पृथग्भानात्, स्वप्नसुषुप्त्योरात्मनिभासमानेऽपि देहस्यान्यथाभानात्, अभानाच्च स्वर्गकामादि श्रुतिसिद्धशरीरविलक्षणात्मप्रसिद्धिविरोधाच्च ; यद्वा पिण्डः पुंसः पृथक्-शिरःपाण्यादिरूपेणानेकः इति, यतः अहमर्थश्चैक इति योजनान्तरम् ; तस्माद्देहेन्द्रियादीनामनात्मत्वात् तेषु कुत्र अहंशब्दं करोमि इत्याह—तत इति ॥८९॥

शां॥यत् निर्दिष्टम् 'इदं शरीरम्' इति, तत् तच्छब्देन परामृशति। यच्च निर्दिष्टं क्षेत्रं, तत् यादृक् यादृशं स्वकीयैः धर्मैः । 'च' शब्दः समुच्चयार्थः । यद्विकारि-यः विकारः यस्य तत् यद्विकारि , यतः यस्मात् च यत्, 'कार्यम् उत्पद्यते' इति वाक्यशेषः। स च, यः क्षेत्रज्ञः निर्दिष्टः सः यत्प्रभावः ये प्रभावाः उपाधिकृताः शक्तयः यस्य सः यत्प्रभा-

**रा॥पाण्यादिलक्षणः।ततोऽहमिति कुत्रैतां संज्ञां राजन्करोम्यहम्,' तथा च*'किं त्वमेतच्छिरः किन्नु उरस्तव तथोदरम् । किमु पादादिकं त्वं वै तवैतत्किं महीपते ॥ समस्तावयवेभ्यस्त्वं पृथग्भूप व्यवस्थितः । कोऽहमित्येव निपुणो भूत्वा चिन्तय पार्थिव' इति।एवं विविक्तयोर्द्वयोर्वासुदेवात्मकत्वं चाहुः†'इन्द्रियाणि मनो बुद्धिस्सत्त्वं तेजो बलं**

ता॥तनत्वविकल्पो द्योतितः। प्रतिपादितार्थस्य श्रोतर्यप्रि स्वप्रत्ययेन दृढीकरणार्थं वाक्यं –**किंत्वमिति।** एवम् 'इदं शरीरम्' इति श्लोकेनोक्तस्य संवादकमुपात्तम् ।ननु 'द्वासुपर्णा' इति मन्त्रे 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति कर्मफलभोक्ता जीव उच्यते, 'अनश्नन्नन्यो अभिचाकशीति' इति परमात्मेति शारीरके 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' 'स्थित्यदनाभ्यांच' इत्यादिषु प्रपञ्चितम् । ब्राह्मणे तु 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्' इति जन्तुवाचिना सत्त्वशब्देन जीवमभिधाय '१अनश्नन्नन्यो अभिचाकशीति' 'अनश्नन्नन्यो अभिपश्यतीति क्षेत्रज्ञः तावेतौ सत्त्वक्षेत्रज्ञौ तदेतत्सत्त्व येन स्वप्नं पश्यति अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः' इति क्षेत्रज्ञशब्देन परमात्मानमेवाभिधत्ते।तावेवात्र क्षेत्रज्ञोपद्रष्टृशब्दौ प्रत्यभिज्ञायेते 'तं प्राहुः क्षेत्रज्ञः' इति'उपद्रष्टानुमन्ता'इति च। मनुश्च-'योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते। यः करोतितु कर्माणि परमात्मोच्यते बुधैः' इति क्षेत्रज्ञशब्देन परमात्मानमाह। अतः कथमत्र क्षेत्रज्ञो जीव इत्युच्यत इति शङ्कामर्थात्परिहरन् 'क्षेत्रज्ञं चापि मां विद्धि' इत्यस्य संवादकं तस्य स्वोक्तार्थानुगुण्यं सूचयन्नवतारयति -**एवं विविक्तयोरिति ।**

**प्र पा॥***वि-पु. २-१३-१०२:१०३॥अथ 'पिण्डः पृथक्' इत्यादिना सङ्क्षेपेणोक्तमर्थमुपपादयन् देहात्मविवेकं प्रकरणार्थमुपसंहरति — त्वं किमेतत् इति । अन्धतमसेऽक्षिनिमीलनेच निरवयवत्वेनात्मनः प्रत्यक्तया 'अहम्' इति भासमानत्वात्, इदम्बुद्धिबोध्यमदृश्यापरभागञ्च शिरआदि नात्मा; नच तस्यात्मनोऽवयवः ॥ १०२ ॥ समस्तावयवेभ्यः इति—तस्मात्तेभ्यः पृथगात्मा व्यवस्थित इत्यर्थः ;यथोक्तं यामुनार्यैः 'अहम्बुद्ध्या परागर्थात् प्रत्यगर्थो हिभिद्यते' इति [अत्र 'त्वं किमेतच्छिरः किन्नु ग्रीवा तव तथोदरम्' इति पाठः स्वीकृतः] ॥ १०३ ॥ †भार-आनु-सहस्रनामध्याय १४९-११३; बृहन्नारदीयेच ३६-१७ ॥

१. मु. ३-१-१ ॥ २. शारी. १-२-११॥
३. शारी. १-३-६ ॥
४ ॥
५ ॥ ६. मनु-१२-१२॥

**शं॥वक्ष्ये। तत् क्षेत्रक्षेत्रज्ञयाथात्म्यं यथाविशेषितं समासेन संक्षेपेण मे मम वाक्यतः शृणु तत् श्रुत्वा अवधारय इत्यर्थः ॥ ३ ॥**

**आ॥यद्विकारि येन विकारेण युक्तं यतश्च यत् यतो याति प्रवर्तते स च प्रवर्तकः ।**

ज॥यो विकारो यस्य तत् यद्विकारीति कश्चित् ; तदसम्, बाहुव्रीहितायामिनेर्वैयर्थ्यात्। किंतु यश्चासौ विकारश्चेति यद्विकारः,सोऽस्यास्तीति यद्विकारीति भावेनाह—**यदिति** । अत्र **येन विकारेणे**त्यनेन कर्मधारयं सूचयति, **युक्त**मितीनेरर्थम्। 'यतश्च यत्'इत्येतत् यस्माच्च यत्कार्यमुत्पद्यते 'इतिकश्चिद्व्याख्यातवान् ; तदयुक्तम्, यद्विकारीत्यनेन गतार्थत्वात् , साध्याहारत्वाच्च। विकारांश्च गुणांश्चेत्यस्यान्यथोपपत्तेः। अपरस्तु यतश्चामानित्वादिभ्यो यज्ज्ञेयं प्राप्यत इति; तदप्यसत् , अध्याहारादेव। 'अमानित्वम्' इत्यादेः 'अनादिमत्'इत्यादेश्चान्यथासिद्धेरिति भावेनान्यथा व्याचष्टे—**यतश्चेति**।यतो यस्य प्रेरणया।यदितीणो लडादेशशत्रन्तस्य रूपम्। इणो यातेश्चानतिभिन्नार्थत्वात् यातीत्युक्तम्। सर्वस्य क्षेत्रस्य गत्यभावाद्गौणीं वृत्तिमाश्रित्य विवृणोति—**प्रवर्तत** इति । 'स च यः' इति जीवप्रतिज्ञेति व्याख्यानमसत्,

रा॥धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव च 'इति छन्दोभिर्विविधैः पृथक् पृथग्विधैश्छन्दोभिश्च ऋग्यजुस्सामाथर्वभिः देहात्मनोः स्वरूपं पृथग्गीतं—*'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात्पुरुषः । स वा एष पुरुषोऽन्नरसमयः' इति शरीरस्वरूपमभिधाय तस्मादन्तरं प्राणमयं तस्माच्चान्तरं मनोमयमभिधाय *'तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः' इति क्षेत्रज्ञस्वरूपमभिधाय

ता॥तथाच क्षेत्रज्ञशब्दस्य जीवेऽपि प्रयोगदर्शनात्क्षेत्रज्ञो जीव इत्युपपद्यते। प्रत्येकं समुदायेन वा 'ममेदं शिरः' 'ममेमौ पाणी' 'ममेदं शरीरम्' इति क्षेत्रवेदित्वाज्जीवस्य क्षेत्रज्ञत्वम् । परमात्मनस्तु 'इदं शरीरमेतत्कर्मारम्भायैतत्कर्मफलभोगाय 'इत्यादिक्षेत्रयाथात्म्यवेदितृत्वेन । एतच्च 'एतदवयवशस्संघातरूपेण च 'इदमहं वेद्मि 'इति यो वेत्ति 'इति भाष्येण 'योऽस्यात्मनः कारयिता' इति मनुवचनेन च ज्ञापितम्। एवमुपद्रष्टृत्वमपि जीवस्य स्वशरीरमात्रं प्रति,परमात्मनस्तु सर्वचेतनाचेतनान् प्रतीत्युभयोरप्युपद्रष्टृत्वमविरुद्धम्। अतो न कस्यापि प्रमाणस्य विरोध इति भावः।स्वरूपवैविध्यस्य च्छन्दोभिरिति बहुवचनेनैव लाभात् विविधशब्दः प्रकृतप्रतिपाद्यप्रकारवैविध्यपर इत्यभिप्रायेणाह—**पृथग्विधैरिति**। पृथग्भूताः विधाः प्रतिपाद्यप्रकारा येषामिति विग्रहः। 'आम्नायश्छन्दसां दण्डः' इत्यादिप्रयोगानुसारेण च्छन्दश्शब्दो वेदपरः, न तु गायत्र्यादिपर इत्यभिप्रयन्नाह—**ऋग्यजुरिति**।पृथक्छब्दस्य ऋषिभिरुक्तात्पृथक्त्वपरत्वभ्रमव्युदासायाध्याहारानुषङ्गाभ्यां योजयति—**देहात्मनोः स्वरूपं पृथग्गीतमिति**। परस्परविलक्षणं गीतमित्यर्थः। 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः' 'एष म आत्मान्तर्हृदये .एतमितः प्रेत्याभिसंभविता-

**प्र-पा** ॥ * तै-आन-१-२ ॥ १-गी-१३-१-श्लो. भाष्ये॥ २. मनु. १२-१२॥ ३॥

४. कौषीत. ३-९. प्रतर्दनविद्यायां 'तद्यथा रथस्यारेषु...प्राणेऽर्पिताः'॥—यथा-रथस्य-नाभौ रथचक्रमध्यवर्तिसरन्ध्रकाष्ठविशेषे, अरशब्दिताः काष्ठविशेषाः परितोऽर्पिताः, तत्रच नेमिशब्दितं वलयाकारङ्काष्ठं यथार्पितम्, एवम्प्राणशब्दितपरमात्मनि प्रज्ञामात्राशब्दानिर्दिष्टाश्चेतना अर्पिताः, तेषुच भूतमात्राशब्दितग्राह्यग्राहकजातं सर्वं समर्पितमित्यर्थः ।।

५. छा-उप. ३-१४-४॥ 'एष म आत्मा अन्तर्हृदये एतद्ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मि' इति ॥ इदञ्च शाण्डिल्यविद्यावाक्यम् । —एवम्भूतं परब्रह्म परमकारुण्येनास्मदुज्जिजीवयिषयास्मद्धृदये सन्निहितमित्यनुसन्धातव्यमित्याह—**एषम इति**। यथोपासनमीदृशं परमात्मानम् 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तरीत्या देशविशेषविशिष्टम्प्राप्तास्मीति निश्चयरूपमनुसन्धानं कर्तव्यमित्याह—**एतमित इति**। अत्र 'इति' इत्यस्य 'स क्रतुं कुर्वीत' इति पूर्ववाक्येनान्वयः। विस्तरेण टीकायान्द्रष्टव्योऽस्यार्थः॥

आ॥**यतश्च यदित्यस्मात्प्रवर्तते क्षेत्रमिति वचनम् । स च यः' इति स्वरूपमात्रम् ॥ ३ ॥**

ज॥तस्याप्रकृतत्वात्,क्षेत्रज्ञशब्दस्यातद्विषयत्वादिति भावेनाह—**सच्चेति**।'यतः क्षेत्रं प्रवर्तते' इति प्रवर्तकस्य प्रकृतत्वादित्याशयः । नन्वेवं चेदेतद्वक्तव्यम् । किं 'यतश्च यत्' 'स च यः' इत्येकैव प्रतिज्ञा ? उत द्वे? नाद्यः, चशब्दद्वयानुपपत्तेः, 'तत्समासेन' इत्यनेनान्वयात् 'स च यः' इत्यस्य वैयर्थ्याच्च ; न द्वितीयः, अर्थभेदाभावादित्यतो द्वितीयमङ्गीकृत्याह—**यतश्चेति** । 'यतश्च यत्'इतिवचनमस्मादेवंधर्मविशिष्टात्क्षेत्रं प्रवर्तत इति वक्तुं प्रतिज्ञारूपम् । 'स च यः' इति वचनं प्रवर्तकस्य स्वरूपमात्रं वक्तुं प्रतिज्ञारूपमित्यर्थभेद इत्यर्थः ॥ ३ ॥

रा॥*'तस्माद्वा एतस्माद्विज्ञानमयात्।अन्योऽन्तर आत्मानन्दमयः'इति क्षेत्रज्ञस्याप्यन्तरात्मतया आनन्दमयः परमात्माभिहितः। एवमृक्सामाथर्वसु च तत्रतत्र क्षेत्रक्षेत्रज्ञयोः पृथग्भावस्तयोर्ब्रह्मात्मकत्वं च सुस्पष्टं गीतम्। ब्रह्मसूत्रपदैश्चैव—ब्रह्मप्रतिपादनसूत्राख्यैः पदैः शारीरकसूत्रैः, हेतुमद्भिः—हेतुयुक्तैः, विनिश्चितैः—निर्णयान्तैः; †'न वियद-

ता॥स्मि' 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः।अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' 'सकारणं करणाधिपाधिपः' 'भोक्ता भोग्यं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इत्यादिकमभिप्रेत्याह—एवमृक्सामाथर्वस्विति। 'ब्रह्मसूत्र' इत्यत्र लुप्तषष्ठ्यर्थसंबन्धः प्रतिपादकत्वमित्यभिप्रेत्य 'सूत्रपदैः'इत्यत्र षष्ठीसमासभ्रमं वारयति—ब्रह्मप्रतिपादनसूत्राख्यैः पदैरिति। फलितमाह—शारीरकसूत्रैरिति। हेतुयुक्तैरिति—हेतुप्रतिपादकैरित्यर्थः। कर्मणि क्ताश्रयणे प्रयोजनाभावाद्विशेषतो निश्चितं येषामिति भावे क्तं बहुव्रीहिं चाभिप्रेत्याह—निर्णयान्तैरिति। निर्णयफलकैरित्यर्थः।

प्र-पा॥ * तै आन-५-२॥

† शारी. २-३-१ ॥ नवियदश्रुतेः — वियन्नोत्पद्यते, कुतः? अश्रुतेः-श्रुतिः-श्रवणम्, निरवयवस्य आत्मनइवोत्पत्तिश्रवणासम्भवादिति॥ इदञ्च पूर्वपक्षसूत्रम्, अथ सिद्धान्तसूत्रम् —अस्तितु॥ २ ॥ — अस्ति त्वाकाशस्योत्पत्तिः, 'आत्मन आकाशस्सम्भूतः' इति श्रुतेः, अतीन्द्रियार्थविषयया श्रुत्या प्रमाणान्तराप्रतिपन्नवियदुत्पत्तिप्रतिपादनं सम्भवत्येव; आत्मनोऽपि 'न जायते' इति प्रतिषेधादनुत्पत्तिः ॥ २ ॥— गौण्यसम्भवाच्छब्दाच्च॥३॥ 'तत्तेजोऽसृजत'इति प्राथम्यवचनात्'आकाशः सम्भूतः'इतिश्रुतिः गौणी, 'वायुश्चान्तरिक्षञ्चैतदमृतम्' इतिशब्दाच्च॥३॥ स्याच्चैकस्य ब्रह्मशब्दवत्॥ ४ ॥ एकस्य सम्भूतशब्दस्य, आकाशे गौणत्वम् अन्यत्र मुख्यत्वम् अनुषङ्गे सम्भवत्येव, श्रवणावृत्तिवत्; यथा एकस्य ब्रह्मशब्दस्य 'तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते'इति प्रकृतौ गौणत्वं, 'तपसा चीयते ब्रह्म' इति ब्रह्मणि मुख्यत्वमावृत्तौ॥ ४॥ परिहरति-प्रतिज्ञाहानिरव्यतिरेकात्॥ ५॥ 'येनाश्रुतं श्रुतम्'इत्यादिना एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः अहानिः आकाशस्यापि ब्रह्मकार्यत्वेन तदव्यतिरेकादेव भवति॥ ५॥—शब्देभ्यः॥ ६॥—'आकाशः सम्भूतः' इत्यादिशब्देभ्यः अवगतां वियदुत्पत्तिं'तत्तेजोऽसृजत'इत्यत्र आकाशशब्दावचनावगतं तेजःप्राथम्यं न निवारयितुं क्षमम्॥ ६॥ —यावद्विकारन्तु विभागो लोकवत्॥ ७॥ तुशब्दश्चार्थे, 'ऐतदात्म्यमिदं सर्वम्' इत्यादिना आकाशादेरपि विकारत्वावगमात् तेजःप्रभृतिविभागवचनं सर्वस्य प्रदर्शनार्थमिति निश्चीयते; यथा लोके'दशेमेदेवदत्तपुत्राः'इत्युक्त्वा तेषु केषांचित् उत्पत्तिवचनम्॥ ७॥

१. मुण्ड. २-१-२॥दिव्यो ह्यमूर्त इति—पूर्वत्र 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः' इति द्युसम्बन्धित्वेन 'तदपाणिपादम्'इतिवा, 'नित्यं विभुम्' इतिवामूर्तत्वेन, 'तेनेदं पूर्णम्पुरुषेण सर्वम्' इति बाह्याभ्यन्तरसर्वस्वात्मतया, 'अचक्षुःश्रोत्रम्' इत्यनिन्द्रियत्वेन प्राणमनःशून्यतया 'येनाक्षरं पुरुषं वेद सत्यम्'इति विकाररूपदोषशून्यतया दिव्यादिशुभ्रपर्यन्तशब्दितश्च यः, तस्यापि कारणत्वेन पर इत्यर्थः; प्रधानपुरुषयोस्तज्जन्यत्वादिति भावः॥

२. श्वे. ६-९॥

३. श्वे. १-९॥

शां॥तत् क्षेत्रक्षेत्रज्ञयाथात्म्यं विवक्षितं स्तौति श्रोतृबुद्धिप्ररोचनार्थम्—ऋषिभिः वसिष्ठादिभिः बहुधा बहुप्रकारं गीतं कथितम्। छन्दोभिः-छन्दांसि ऋगादीनि, तैः छन्दोभिः विविधैः नानाभावैः नानाप्रकारैः पृथक् विवेकतः गीतम्। किञ्च—ब्रह्मसूत्रपदैश्च एव, ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि, तैः पद्यते ज्ञायते ब्रह्म इति पदानि

रा॥श्रुतेः' इत्यारभ्य क्षेत्रप्रकारनिर्णय उक्तः; *'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' इत्यारभ्य क्षेत्रज्ञयाथात्म्यनिर्णय उक्तः; †'परात्तु तच्छ्रुतेः' इति भगवत्प्रवर्त्यत्वेन भगवदात्मकत्व-

ता॥नवियदश्रुतेरित्यारभ्येत्यनेन—'अस्ति तु' इत्यादिकं सूत्रषट्कम्' 'एतेन मातरिश्वा व्याख्यातः' 'तेजोऽतस्तथाह्याह' 'आपः' 'पृथिवी' इति सूत्रचतुष्टयं च विवक्षितम्। उक्त इति—अनेनाकाशादीनामुत्पत्तिकथनेन तत्संघातात्मकक्षेत्रयाथात्म्यमुक्तप्रायमिति भावः। नात्मा श्रुतेरित्यारभ्येत्यनेन 'ज्ञोऽत एव' 'उत्क्रान्तिगत्यागतीनां' 'स्वात्मना चोत्तरयोः' 'नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात्' 'स्वशब्दोन्मानाभ्यांच' 'अविरोधश्चन्दनवत्' 'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदिहि' 'गुणाद्वालोकवत्' 'व्यतिरेको गन्धवत्तथाच दर्शयति' 'पृथगुपदेशात्' 'तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्' 'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्' 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' 'नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा' 'कर्ता शास्त्रार्थवत्त्वात्' 'उपादानाद्विहारोपदेशाच्च' 'व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः' 'उपलब्धिवदनियमः' 'शक्तिविपर्ययात्' 'समाध्यभावाच्च' 'यथाच तक्षोभयथा' 'परात्तु तच्छ्रुतेः' इत्यन्तं सूत्रजातमभिप्रेतम्। इत्यारभ्य ज्ञोऽतएवेत्यादिभिरिति पाठे इत्यादिशब्देनैतद्विवक्षितम्। भगवत्प्रवर्त्यत्वेनेति—चेतनं प्रति नियमेन नियाम्यद्रव्यत्वस्य शरीरलक्षणत्वादिति भावः। श्रुत्यादिभिः प्रतिपादितस्यैव क्षेत्रक्षेत्रज्ञयाथात्म्यस्य ज्ञातुं शक्यत्वात्त्वत्तः किमर्थं श्रोतव्यमित्याशङ्कापरिहाराय पूर्वोक्तं 'तत्समासेन मे शृणु' इत्येतदत्र संगमय्य तत्तात्पर्य-

प्र-पा॥*शारी. २-३-१८. आत्मा नोत्पद्यते, 'नजायते म्रियते' इतिश्रुतेः, 'नित्यो नित्यानाम्' इत्यादिश्रुतिभ्यो नित्यत्वावगतेश्च; जीवोत्पत्तिपक्षे अकृताभ्यागमकृतविप्रणाशप्रसङ्गः, वैषम्यनैर्घृण्यप्रसङ्गश्च दुर्वारः॥

† शारी. २-३-१८॥

१. शारी. २-३-२॥

२. शारी-२-३-७.एतेन-अनेनैव न्यायेन मातरिश्वनोऽपि उत्पत्तिरुक्ता;नायं न्यायातिदेशः-अधिकाशङ्काभावात्।

३. शारी. २-३-१०॥ अतः—'वायोरेव केवलात्, तेज उत्पद्यते; तथाह्याह श्रुतिः 'वायोरग्निः' इति॥१०॥—आपः॥११॥—आपोऽपि, अतः-तेजस एवोत्पद्यन्ते 'अग्नेरापः' इति श्रुतिस्तथाह्याह॥—पृथिवी॥ १२॥—पृथिवी अद्भ्य उत्पद्यते; 'अद्भ्यः पृथिवी' इतिह्याह॥—राद्धान्तमाह—तदभिध्यानादेव तु तल्लिङ्गात् सः॥१४॥-'तत्तेज ऐक्षत...ता आप ऐक्षन्त' इति तदभिध्यानरूपात् 'तदैक्षत बहु स्याम्' इत्येतत्स्वरूपात् परमात्मकारणत्वलिङ्गात् सएव-परमात्मा तेजःप्रभृतिशरीरकस्तत्तच्छब्दैस्साक्षात्कारणत्वेनाभिधीयते॥

४.शारी. २-३.ज्ञोऽतएव॥१९॥-'अथ यो वेदेदं जिघ्राणीति स आत्मा मनसैतान् कामान् पश्यन्रमते' इत्यादिश्रुतेः बद्धो मुक्तश्चात्मा ज्ञातैव; 'मनोऽस्य दैवं चक्षुः' इति श्रुतेः स्वधर्मभूतं ज्ञानम्मनः॥—उत्क्रान्तीति॥ २०॥ —श्रुतेरिति वर्तते, 'तेन प्रद्योतेनैष आत्मा निष्क्रामति' 'येवैकेचास्माल्लोकात्प्रयन्ति' 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' इति उत्क्रान्तिगत्यागतीनां श्रवणात् अणुर्जीवः॥ —स्वात्मनेति॥ २१॥ चशब्दोऽवधारणार्थः, यद्यपि शरीरवियोगरूपत्वेनोत्क्रान्तिः स्थितस्याप्यात्मनः कथंचिदुपपद्यते, गत्यागतीतु न कथंचिदुपपद्येते; अतस्ते स्वात्मनैव सम्पाद्ये॥—नाणुरिति॥२२॥-'सवा एष महानज आत्मा' इतिश्रुतेः नाणुरितिचेत्-न, 'यस्यानुवित्तः प्रतिबुद्ध आत्मा' इत्यणुशब्दात् 'आराग्रमात्रो ह्यवरः' इत्युद्धृत्य उन्मानशब्दाच्चाणुर्जीवात्मा॥ —अविरोधइति॥

प्र-पा ॥ २४॥—यथा चन्दनबिन्दुरेकदेशस्थोऽपि सकलदेहव्यापि सुखं जनयति, तद्वदात्मनोऽणुत्वेऽपि सकलदेहव्यापिसुखाद्यनुभवः सम्भवति, अतोऽविरोधः॥—अवस्थितीति॥ २५॥—देहविशेषस्थितेश्चन्दनस्येति चेत्- न, आत्मनोऽपि तदभ्युपगमात्,'हृदि ह्ययमात्मा''योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इति श्रुतेः॥—गुणादिति॥२६॥—आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यानुभवति, आलोकवत्—यथा मणिप्रभृतयः स्वकीयेनालोकेन सकलदेशं व्याप्य प्रकाशयन्ति, तद्वत् हृदयस्थस्यात्मनो ज्ञानं सकलदेहं व्याप्य वर्तते ; अत्र 'वा' शब्दः 'अविरोधश्चन्दनवत्' इत्युक्तमतान्तरव्यावृत्त्यर्थः, स्वमतसूचनार्थ इति यावत् ॥—व्यतिरेक इति ॥ २७ ॥—'विज्ञानं यज्ञन्तनुते' इति विज्ञानमेवात्मेति ह्युक्तम्,तत्कथं ज्ञानस्य स्वरूपव्यतिरिक्तगुणत्वमुच्यत इति चेत्-तत्राह—व्यतिरेक इति । 'गन्धवती पृथिवी' इतिवत् 'अहं जानामि'इति गुणवत्त्वेनोपलब्धेः व्यतिरेकोऽस्ति, तथा दर्शयति च श्रुतिः 'जानात्येवायम्पुरुषः' इति ॥ — पृथगिति ॥ २८ ॥—आत्मनः पृथक्त्वेनोपदिश्यतेच ज्ञानं, 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ' इति ॥—तद्गुणेति ॥ २९ ॥—यावदितिच ॥ ३० ॥ पूर्वमेव व्याख्यातम् ॥—पुंस्त्वादिवदिति॥ ३१॥ सुषुप्त्यादिष्वसतो ज्ञानस्य यावदात्मभावित्वं कथमित्यत्राह—पुंस्त्वादिवदिति। सुषुप्त्यादिषु सतो ज्ञानस्यानभिव्यक्तस्यापि जागरादौ अभिव्यक्तिसम्भवात् स्वरूपानुबन्ध्येव ज्ञानम्, यथा पुंस्त्वासाधारणसप्तमधातोः बाल्येऽपि सतो युवत्वेऽभिव्यक्तिः; जीवात्मनः ज्ञातृत्वमणुत्वञ्चोक्तम्॥-एवमात्मनो ज्ञातृत्वमणुत्वञ्चोक्त्वा ज्ञानात्मवादे तस्य सर्वगतत्वे दूषणमाह—नित्योपलब्धीति ॥३२॥ अन्यथा - ज्ञप्तिमात्रसर्वगतात्मवादे तावत् नित्यत्वात् सर्वदोपलब्धिस्स्यात्, संकोचकाभावात् ; विद्यमानायाः अनुपलब्धेरपि सैव हेतुरिति सापि नित्यवस्स्यात्, ज्ञाने विद्यमानेऽपि हेत्वन्तरेण निवारणासम्भवात् ; आगन्तुकज्ञानसर्वगतात्मवादेऽपि स एव दोषः ; सर्वात्मनां सर्वगतत्वेन ज्ञानहेतूनां मनःसंयोगादीनां सर्वसाधारणत्वात्;अदृष्टहेतूनामपि सर्वसाधारणत्वात् तेनापि न नियमः, अथोपलब्ध्यनुपलब्ध्योः विरोधादुपलब्धेर्वा एते हेतवः स्युः, अनुपलब्धेर्वा;-तथा सति अन्यतरनियमस्स्यात् ॥—कर्तेति ॥ ३३ ॥ व्याख्यातम्॥—उपादानादिति ॥ ३४ ॥ — उपादानात्-उद्दिश्यमानात्, विहारोपदेशाच्च,उपदिश्यते हि उपादानं विहारश्च 'एवमेवैष एतान्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते'इति उपादानविहारयोः कर्तृत्वोपदेशाच्च कर्ता जीवः ॥ —व्यपदेशादिति ॥ ३५ ॥—'विज्ञानं यज्ञन्तनुते' इत्यादिना यज्ञादौ कर्तृत्वव्यपदेशाच्च कर्ता ; विज्ञानशब्दोऽन्तःकरणस्य बुद्धेः, नात्मन इति चेत् - न, तदा 'विज्ञानेन' इतिनिर्देशविपर्ययस्स्यात्, बुद्धेः करणत्वादिति ॥—उपलब्धिवदिति ॥ ३६ ॥ आत्मनोऽकर्तृत्वे दोष उच्यते ; प्रकृतेरेव कर्तृत्वे तस्यास्सर्वसाधारणत्वेन पूर्वोपलब्ध्यनियमवत् फलानियमः स्यात् ; अन्तःकरणभेदेऽपि सर्वेषामात्मनां सर्वगतत्वेन साधारण्यमनिवार्यम् ॥—शक्तीति ॥ ३७ ॥—बुद्धेः कर्तृत्वे कर्तुरन्यस्य भोक्तृत्वायोगात् भोक्तृत्वशक्तिरपि बुद्धेरेवेति आत्मनो भोक्तृत्वशक्तेः विपर्ययः-हानिरित्यर्थः ॥—समाध्यभावाच्च ॥ ३८ ॥ — प्रकृतेरेव कर्तृत्वे मोक्षसाधनभूतसमाध्यभावश्च स्यात् , 'प्रकृतेरन्योऽस्मि' इति समाधाने प्रकृतेः कर्तृत्वायोगात् ; नच'प्रकृतेरन्योऽस्मि'इति प्रकृतिस्समाधातुमलम्, अत आत्मैव कर्ता ॥—यथेति ॥ ३९॥ —आत्मनः कर्तृत्वे 'भोगवाञ्छायां करोति, अन्यथा न करोति'इति व्यवस्था च सिद्ध्यति ; यथा तक्षा स्वकार्येषु; बुद्धेरिच्छाभावात् न व्यवस्था, चेतनधर्मत्वादिच्छायाः ॥—परादिति ॥ ४० ॥ व्याख्यातम् ॥

---

शं॥उच्यन्ते, तैरेव च क्षेत्रक्षेत्रज्ञयाथात्म्यं 'गीतम्' इति अनुवर्तते। 'आत्मेत्येवोपासीत

रा॥मुक्तम्; एवं बहुधा गीतं; क्षेत्रक्षेत्रज्ञयाथात्म्यं मया सङ्क्षेपेण सुस्पष्टमुच्यमानं शृण्वित्यर्थः ॥ ४ ॥

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५
इच्छा द्वेषस्सुखं दुःखं सङ्घातश्चेतनाधृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६

महाभूतान्यहंकारो बुद्धिरव्यक्तमेवचेति-क्षेत्रारम्भकद्रव्याणि; पृथिव्यप्तेजोवाय्वाकाशा महाभूतानि, अहंकारो भूतादिः, बुद्धिर्महान्,अव्यक्तं प्रकृतिः; इन्द्रियाणि दशैकं च पञ्चचेन्द्रियगोचरा इति-क्षेत्राश्रितानि तत्त्वानि; श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च ज्ञा-

ता॥माह-एवंबहुधागीतमित्यादि।क्षेत्रक्षेत्रज्ञयाथात्म्यस्य श्रुत्यादिभिरतिविस्तरेण बहुधा गीतत्वात्किंचिज्ज्ञेन स्पष्टमवगन्तुमशक्यत्वात्सर्वज्ञेन मया संक्षेपेण सुस्पष्टमुच्यमानं तच्छ्रोतव्यमिति भावः ॥ ४ ॥

'तत्क्षेत्रं यच्च यादृक्च' इत्यादौ 'यच्च' इति प्रतिज्ञातस्य 'महाभूतान्यहंकारो बुद्धिरव्यक्तमेवच' इत्येतत्प्रतिपादकमित्यभिप्रायेणाह—महाभूतानीत्यारम्य इतिक्षेत्रारम्भकद्रव्याणीति। भूतशब्दस्य सशरीरचेतनादावपि प्रयोगात्तद्भ्रमव्युदासाय प्रकृतोपयुक्तमर्थमाह —पृथिव्यप्तेजइति। अहंकारशब्दस्य त्रिविधाहंकारवाचित्वेऽपि सात्त्विकाहंकारस्येन्द्रियारम्भकत्वाद्राजसस्योभयानुग्राहकत्वात्तामसपरत्वमाह—अहंकारइति। बुद्धिशब्दस्याध्यवसायपरत्वभ्रमव्युदासायाह—बुद्धिर्महानिति। अव्यक्तशब्दस्य 'अव्यक्तमक्षरे लीयते' इत्युक्ताव्यक्तपरत्वे तत्कारणमपि वक्तव्यं स्यादित्यभिप्रयंस्तद्व्याचष्टे—अव्यक्तं प्रकृतिरिति।'इन्द्रियाणि दशैकंच'इत्यादिकं 'यादृक्च'इति प्रतिज्ञातस्य प्रतिपादकमित्यभिप्रायेणाह—इन्द्रियाणिदशेत्यारम्य इति क्षेत्राश्रितानि तत्त्वानीति । इन्द्रियाणामेकादशत्वव्यक्तीकरणाय तद्गोचराइत्युक्तपञ्चसंख्यास्पष्टीकरणाय च 'त्वक्चक्षुर्नासिका जिह्वा श्रोत्रमत्र च पञ्चमम्। शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि च द्विज। पायूपस्थौ करौ पादौ वाक्च मैत्रेय पञ्चमी। विसर्गशिल्पगत्युक्ति कर्म तेषां च कथ्यते। एकादशं मनश्चात्र' इति पराशरोक्त्यनुसारेण तानि इन्द्रियार्थांश्च विशेषतः कथयति—श्रोत्रत्वगित्यादिना।'इच्छा द्वेषस्सुखं दुःखम्' इत्येतत् 'यद्विकारि' इत्यु-

प्र-पा ॥ १. सुबाल. २. खं ॥ | २. वि पु. १-२-४८-४९॥

शं॥इत्येवमादिभिः ब्रह्मसूत्रपदैः आत्मा ज्ञायते, हेतुमद्भिः युक्तियुक्तैः विनिश्चितैः निस्संशयरूपैः निश्चितप्रत्ययोत्पादकैः इत्यर्थः ॥ ४॥

स्तुत्या अभिमुखीभूताय अर्जुनाय आह भगवान्—महाभूतानि महान्ति च तानि भूतानि, सर्वविकारव्यापकत्वात्। भूतानि च सूक्ष्माणि, न स्थूलानि। स्थूलानि तु इन्द्रियगोचरशब्देन अभिधायिष्यन्ते।अहङ्कारः महाभूतकारणम् अहंप्रत्ययलक्षणः। अहङ्कारकारणं बुद्धिः अध्यवसायलक्षणा। तत्कारणम् अव्यक्तमेव च, न व्यक्तम् अव्य-

आ॥ ब्रह्मसूत्राणि शारीरकम् ॥ ४ ॥

ज्ञा॥ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि ततश्च च्छन्दसामृषिवाक्यानां च तथात्वात् ऋषिभिरित्यादिकं वृथा स्यादित्यतो रूढिमाश्रित्याह—ब्रह्मेति ॥ ४ ॥

रा॥नेन्द्रियाणि वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणीति तानि दश,एकमिति मनः, इन्द्रियगोचराश्च पञ्च-शब्दस्पर्शरूपरसगन्धाः;इच्छाद्वेषस्सुखं दुःखमिति-क्षेत्रकार्याणि क्षेत्रविकारा उच्यन्ते ; यद्यपीच्छाद्वेषसुखदुःखान्यात्मधर्मभूतानि,तथाप्यात्मनः क्षेत्रसंबन्धप्रयुक्तानीति क्षेत्रकार्यतया क्षेत्रविकारा उच्यन्ते;तेषां पुरुषधर्मत्वं* 'पुरुषस्सुख-

ता॥क्तस्य प्रतिपादकमित्याशयेनाह—इच्छाद्वेष इति। इच्छादीनां भूतसङ्घातरूपक्षेत्रपरिणामत्वाभावेन कथं क्षेत्रविकारत्वं, प्रत्युतात्मधर्मभूतज्ञानविकारत्वमेवेत्याशयेन शङ्कते—यद्यपीति । तेषां क्षेत्रविकारत्वव्यपदेश औपचारिक इत्याशयेन परिहरति—तथापीति । क्षेत्रासाधारणकार्यत्वमुपचारनिमित्तमिति भावः । ननु कथमिच्छादीनां धर्मभूतज्ञानविकारत्वम् ?, 'कामस्सङ्कल्पः' इत्यादिना तेषां मनोविकारत्वश्रवणात् । 'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते' इति सूत्रभाष्ये 'न कामादिकं मनसस्तत्त्वान्तरम्' इति भाषितत्वाच्चेत्यत आह—तेषामिति । नचाश्रयत्वमन्तरेण हेतुत्वमस्त्विति वाच्यम्, 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ' इति पूर्ववाक्ये क्रियाश्रयत्वरूपकर्तृत्वं प्रति प्रकृतेराश्रयत्वेन हेतुत्वोक्त्या तद्वैरूप्यापत्तेः । नचान्तःकरणावच्छिन्नचैतन्यरूपजीवस्य पुरुषशब्देन विवक्षितत्वात्, 'कामस्संकल्पः' इत्यादिश्रुत्यनुसारेण योग्यतयान्तःकरणस्य तदाश्रयत्वपरमेव 'पुरुषस्सुखदुःखानाम्'इति वाक्यमिति वाच्यं, देहादिवदन्तःकरणस्यापि प्रकृतिपरिणामत्वेन कार्यकरणकर्तृत्वे सुखदुःखानां भोक्तृत्वे च हेतुः प्रकृतिरुच्यत इत्येवोक्त्यापत्तेः। चैतन्यसंबन्धप्रयुक्तं भोक्तृत्वाश्रयत्वमिति ' पुरुषस्सुखदुःखानाम् 'इत्युक्तिरिति चेत्-कर्तृत्वाश्रयत्वमपि तत्संबन्धायत्तमिति तत्रापि तथोक्तिस्स्यात्। नचैवं'कामस्सकल्पः' इति श्रुतेः'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते'इति सूत्रभाष्यस्य च कथमुपपत्तिरिति वाच्यं,कामसंकल्पादिशब्दवाच्यधर्मभूतज्ञानपरिणामहेतुभूतमनोवृत्तीनां तत्कार्यवाचिशब्देनाभिधानपूर्वकं मनसस्तत्त्वान्तरत्वाभावप्रतिपादनपरत्वेनोपपत्तेः। ननूभयसंप्रतिपन्नमनोवृत्तिभिरेव तत्तन्नामीभिस्सर्वकार्योपपत्तौ कामादिशब्द-

प्र-पा॥ *गी. १३-२० ॥ १. बृ. ३-५-३ ॥ २. शारी. २-४-११ ॥ पञ्चवृत्तिरिति—वायुक्रियाधिकरणस्थमिदं सूत्रम् । प्राणापानादीनामभेदेन पञ्चधावस्थित एक एव प्राण इत्याह—पञ्चेति । यथा कामादिवृत्तिभेदे तत्कार्यभेदेऽपि न कामादिकं मनसस्तत्त्वान्तरम्, 'कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिः ह्रीर्धीर्भीरित्येतत्सर्वम्मन एव' इति वचनात् ; एवं 'प्राणोऽपानो व्यान उदानस्समान इत्येतत् सर्वं प्राण एव'इति वचनात् अपानादयोऽपि प्राणस्यैव वृत्तिविशेषाः, न तत्त्वान्तरमित्यवगम्यते ॥ ३. श्रीभाष्ये ॥ ४. गी. १३-२० ॥

शां॥कम् अव्याकृतम् ईश्वरशक्तिः'मम माया दुरत्यया' इत्युक्तम्। एवशब्दः प्रकृत्यवधारणार्थः । एतावत्येव अष्टधा भिन्ना प्रकृतिः । 'च' शब्दः भेदसमुच्चयार्थः । इन्द्रियाणि दश —श्रोत्रादीनि पञ्च बुद्ध्युत्पादकत्वात् बुद्धीन्द्रियाणि , वाक्पाण्यादीनि पञ्च कर्मनिर्वर्त्तकत्वात् कर्मेन्द्रियाणि; तानि दश—एकं च, किं तत्?—मनः एकादशं सङ्कल्पाद्यात्मकम् । पञ्च च इन्द्रियगोचराः शब्दादयो विषयाः । तानि एतानि साङ्ख्याः चतुर्विंशतितत्त्वानि आचक्षते ॥ ५ ॥

अथ इदानीम् आत्मगुणाः इति यान् आचक्षते वैशेषिकाः,ते अपि क्षेत्रधर्माः एव, न तु क्षेत्रज्ञस्य इति आह भगवान्—इच्छा—यज्जातीयं सुखात्मकम् अर्थम् उपलब्धवान् पूर्वं पुनः तज्जातीयं समुपलभमानः तम् अर्थं समादातुम् इच्छति सुखहेतुरिति ; सा इयम् इच्छा अन्तःकरणस्य धर्मः, ज्ञेयत्वात् क्षेत्रम् । तथा द्वेषः—यज्जातीयम् अर्थं

ता॥वाच्यधर्मभूतज्ञानपरिणामकल्पने प्रमाणाभावात्कामादिशब्दानां मनोवृत्तिषु लाक्षणिकत्वमनुपपन्न-मिति चेन्न, 'सोऽकामयत' 'अथ पुरुषो हवै नारायणोऽकामयत' इति स्थाने 'तदैक्षत' 'स ईक्षांचक्रे' इत्यन्तःकरणरहितजगत्कारणाश्रितज्ञानविशेषवाचीक्षतिशब्दपाठात् 'स तपोऽतप्यत' इति तत्स्थानपठिततपश्शब्दस्य 'यस्य ज्ञानमयं तपः' इति ज्ञानशब्देन व्याख्यानात् 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरस्समुत्तिष्ठन्ति' इति मुक्ताश्रितत्वेन कामसंकल्पयोश्श्रवणात्सुखत्वापरपर्यायानन्दत्वस्य 'रसं ह्येवायं लब्ध्वानन्दी भवति' 'आनन्दं ब्रह्मणो विद्वान्' इत्यादिषु 'अनुकूलज्ञानमेव ह्यानन्दः' इति भाष्यकृदुक्तरीत्या मुक्तब्रह्मसंबन्धिज्ञानवृत्तित्वश्रवणात् 'निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता' इति भगवदनुभवरूपभगवत्प्राप्तेस्सुखरूपत्वस्मृतेश्च कामसंकल्पसुखादीनां ज्ञानावस्थाविशेषत्वस्य अवश्याभ्युपगमनीयत्वान्मनोवृत्तीनामज्ञानत्वेनान्याधीनप्रकाशतयानन्याधीनप्रकाशत्वादिरूपव्यापकनिवृत्त्या व्याप्यभूतार्थान्तरप्रकाशादिहेतुत्वासंभवेन ज्ञानावस्थाविशेषानङ्गीकारे विषयप्रकाशव्यवहारादेरनुपपत्तेस्स्वप्रकाशज्ञानावस्थाविशेषाणामावश्यकत्वादनेकशक्तिकल्पने गौरवेण कामसंकल्पादिशब्दानां वृत्तिषु लाक्षणिकत्वस्य न्याय्यत्वाच्च।नच वृत्तीनां चैतन्यसंबन्धेन विषयप्रकाशादिसमर्थत्वमिति वाच्यम्, निर्विशेषचैतन्यस्य सर्वविषयविमुखस्य विषयप्रकाशाद्ययोग्यत्वेन तत्सहायस्य 'शतमप्यन्धानां न पश्यति' इति न्यायेन विषयप्रकाशादिसामर्थ्यानापादकत्वान्निर्विशेषचैतन्यस्य तद्योग्यत्वे तेनैव प्रकाशाद्युपपत्तौ वृत्त्यवच्छेदकल्पना निष्फला स्यात्; नच संसारदशायां संकुचितस्य तस्य विषयव्यवस्थौपयिकतया साफल्यमिति वाच्यम्, तस्य संकोचाङ्गीकारे निर्विकारत्वादिप्रतिपादकश्रुत्यादिविरोधाच्चक्षुरादिवृत्तिभिरेव विषयव्यवस्थोपपत्तेश्च; धर्मभूतज्ञानस्य च विकारोऽङ्गीकृत एवेति न किंचिदनुपपन्नमस्माकम्--इति।एतत्सर्वमभिप्रेत्य भाषितं-**तेषां पुरुषधर्मत्वं 'पुरुषस्सुखदुःखानां**

प्र-पा ॥ १. तै. आन. ६. अनु. २ ॥
२. नारायणोपनिषत् ॥
३. छा. ६-२-३ ॥ ४. प्रश्न ६-३ ॥
५. तै. आन ६-४ ॥ ६. मु. १-१-९ ॥
७. छा उप. ८-२-१ ॥ स यदि पितृलोककामो भवतीति—'तेन पितृलोकेन सम्पन्नो महीयते' इति वाक्यशेषः । सः मुक्तस्सन्, यदि प्राचीनानेकजन्मसम्बन्धिपितृवर्गं दिदृक्षते, तदास्य पितृवर्गः एतस्य सङ्कल्पमात्रसमुत्थितो भवति, तेन सहितः पूज्यते इत्यर्थः ॥
८. तै. आन. ७-१ ॥ ९. तै. आन ९ ३॥
१०. श्रीभाष्ये ॥
११. वि. पु. ५-६-५९॥ निरस्तेति येनेतरातिशयो निरस्तः, स सर्वातिशायीत्यर्थः, आह्लादः-संसारतापत्रयनिवारकः, एतादृशसुखभावः-आनन्दानुभवः, स एव एकलक्षणं मुख्यलक्षणं यस्यास्तादृशी, एकान्तत्वम्-अनन्यविषयत्वम्, आत्यन्तिकनित्यत्वम्, 'भक्त्या त्वनन्यया' इत्युक्तेः; एतादृशी भगवत्प्राप्तिः-हेयप्रत्यनीककल्याणैकतानस्य प्राप्तिः, भेषजं-संसरतापतप्तस्य तन्निवर्तनौषधमिति, मता-सम्मता, 'तस्मात्तत्प्राप्तये यत्नः क्रियते पण्डितैर्नरैः' इति ॥

**शां॥दुःखहेतुत्वेन अनुभूतवान्, पुनः तज्जातीयम् अर्थम् उपलभमानः तं द्वेष्टि; सोऽयं द्वेषः ज्ञेयत्वात् क्षेत्रमेव । तथा सुखम् अनुकूलं प्रसन्नसत्त्वात्मकं, ज्ञेयत्वात् क्षेत्रमेव, दुःखं प्रतिकूलात्मकं; ज्ञेयत्वात् तदपि क्षेत्रम् । सङ्घातः देहेन्द्रियाणां संहतिः । तस्मिन् अभिव्यक्तान्तःकरणवृत्तिः, तप्ते लोहपिण्डे अग्निरिव, आत्मचैतन्याभासरसविद्धा चेतना; सा च क्षेत्रं, ज्ञेयत्वात्। धृतिः यया अवसादं प्राप्तानि देहेन्द्रियाणि ध्रियन्ते; सा च ज्ञेयत्वात् क्षेत्रम्। सर्वान्तःकरणधर्मोपलक्षणार्थम् इच्छादिग्रहणम् यत् उक्तम् तत् उप-**

रा॥दुःखानां भोक्तृत्वे हेतुरुच्यते'इति वक्ष्यते;संघातश्चेतनाधृतिः—आधृतिराधारः;सुखदुःखे भुञ्जानस्य भोगापवर्गौ साधयतश्च चेतनस्याधारतयोत्पन्नो भूतसंघातः प्रकृत्यादिपृथिव्यन्तद्रव्यारब्धमिन्द्रियाश्रयभूतमिच्छाद्वेषसुखदुःखविकारि भूतसंघातरूपं चेतनसुखदुःखोपभोगाधारत्वप्रयोजनं क्षेत्रमित्युक्तं भवति,एतत् क्षेत्रं समासेन संक्षेपेण सविकारं-सकार्यमुदाहृतम् ॥ ५ ॥ ६ ॥

अथ क्षेत्रकार्येष्वात्मज्ञानसाधनतयोऽपादेया गुणाः प्रोच्यन्ते—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७

अमानित्वम्-उत्कृष्टजनेष्ववधीरणारहितत्वम् , अदम्भित्वं—धार्मिकत्वयशःप्रयो-

---

ता॥भोक्तृत्वे हेतुरुच्यते'इति वक्ष्यतइति।'चेतनाधृतिः'इत्यत्र न तावत्पदद्वयं,चैतन्यस्य क्षेत्रान्तर्भावात्; एकपदत्वेऽपि चेतनाया धृतिरिति न विग्रहः, धृतिशब्दस्याधारपरत्वे शरीरस्य चैतन्याधारत्वासंभवात्; भोगस्थानपरत्वे निर्विशेषचैतन्यस्य भोक्तृत्वानभ्युपगमात् 'एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इति ज्ञातृत्वकर्तृत्वविशिष्टचेतनस्यैव भोक्तृत्वश्रवणाच्च। चेतनस्याधृतिरिति विग्रहः।चेतनशब्देनात्मा निर्दिश्यते। 'भूतग्राम'इतिवत् आधृतिशब्दोऽपि 'अकर्तरि च कारके संज्ञायाम्' इत्याधारपर इत्याह—आधृतिराधारइति। अत्रोद्दिष्टार्थक्रमवशाद्व्युत्क्रमेण व्याख्यातम् ।आधारत्वस्यात्र भोगायतनत्वरूपत्वान्नाधेयत्वरूपशरीरलक्षणविरोध इत्यभिप्रेत्याह—सुखेति। 'महाभूतानि'इत्यादेस्सुग्रहत्वाय'महाभूतानि' इत्यादेः'तत्क्षेत्रं यच्च यादृक्च'इत्यादियद्वृत्तप्रकार्थविषयतां दर्शयन्पिण्डितार्थमाह—प्रकृत्यादीति।सविकारशब्देनेच्छादीनां क्षेत्रपरिणामत्वशङ्काव्युदासायाह—सकार्यमिति ॥ ५ ॥ ६ ॥

पूर्वं क्षेत्रज्ञादपि पश्चाज्ज्ञानोद्देशेऽपि तत्साधनानामनुष्ठेयानामिच्छादिवत्क्षेत्रकार्यत्वात्तदनन्तरमिह तदुक्तिरित्यभिप्रायेणाह—अथ क्षेत्रकार्येष्विति।विद्याभिजनधनादिसंपत्तिमूल उत्कृष्टजनावमानहेतुर्गर्वोऽत्र मानः; तद्वान्मानी; तदन्योऽमानी; तस्य भावस्तत्त्वम्; मानित्वस्याभावो वाऽत्रामानित्वम्; एवमदम्भित्वमपि; तदाह—तद्रहितत्वमिति। 'धर्मध्वजः'इति स्मृत्यनुसारेणाह—धार्मिक-

---

प्र-पा ॥ १. प्रश्न. ४-९ ॥ २. वि. पु. २-३-६९ ॥ ३. अष्टा. ३-३-९ ॥

---

शां॥संहरति—एतत् क्षेत्रं समासेन सविकारं सह विकारेण महदादिना उदाहृतम् उक्तम् ॥ ६ ॥

यस्य क्षेत्रभेदजातस्य संहतिः 'इदं शरीरं क्षेत्रम्'इति उक्तं, तत् क्षेत्रं व्याख्यातं महाभूतादिभेदभिन्नं धृत्यन्तम्। क्षेत्रज्ञः वक्ष्यमाणविशेषणः—यस्य सप्रभावस्य क्षेत्रज्ञस्य परिज्ञानात् अमृतत्वं भवति, तं 'ज्ञेयं यत्तत्प्रवक्ष्यामि' इत्यादिना सविशेषणं स्वयमेव वक्ष्यति भगवान्। अधुना तु तत्त्वज्ञानसाधनं गुणम् अमानित्वादिलक्षणं—यस्मिन् सति

---

आ ॥ इच्छादयो विकाराः ॥ ६ ॥

---

ज॥'महाभूतानि'इत्यनुक्रम्य'एतत्क्षेत्रं समासेन सविकारमुदाहृतम्' इत्युक्तम्।तत्र न ज्ञायते किं क्षेत्रं के च तद्विकारा इत्यत आह—इच्छादय इति। पूर्वं क्षेत्रमिति भावः ॥ ६ ॥

रा॥जनतया धर्मानुष्ठानं-दम्भः, तद्रहितत्वम्; अहिंसा—वाङ्मनःकायैः परपीडारहितत्व-म्;क्षान्तिः—परैः पीड्यमानस्यापि तान्प्रत्यविकृतचित्तत्वम्; आर्जवं-परान्प्रति वाङ्मनः-कायप्रवृत्तीनामेकरूपता ; आचार्योपासनम्—आत्मज्ञानप्रदायिन्याचार्ये प्रणिपातपरिप्रश्नसेवादिनिरतत्वम् ; शौचम्—आत्मज्ञानतत्साधनयोग्यता मनोवाक्कायगता शास्त्रसिद्धा; स्थैर्यम्—अध्यात्मशास्त्रोदितेऽर्थे निश्चलत्वम्; आत्मविनिग्रहः—आत्मस्वरूपव्यतिरिक्तविषयेभ्यो मनसो निवर्तनम् ॥ ७ ॥

---

ता॥ त्वयशःप्रयोजनतयेति । न पुनश्चोदितकर्तव्यताबुद्ध्येति भावः। अनर्थैकफलपीडारूपो व्यापारो हिंसा; स च वाङ्मनःकायैस्त्रिभिरपि शापादिद्वारा संभवतीति संभावितसमस्तप्रकारनिषेधस्य वचना-त्सिद्धस्य असंकोचेन विवक्षितत्वात्—वाङ्मनःकायैरित्युक्तम् । परपीडेति—प्रायिकत्वाभिप्रायम्, अशास्त्रीयस्वपीडाया अपि हिंसात्वात्। 'मनस्यन्यद्वचस्यन्यत्' इत्येवंरूपं हि कौटिल्यं, तन्निवृत्तिरार्जवमि-त्यभिप्रायेणाह—परान्प्रति वाङ्मनःकायप्रवृत्तीनामेकरूपतेति। उपकारबुद्ध्या आचार्योपासनस्य स्वरसवाहित्वज्ञापनायाह—आत्मज्ञानप्रदायिनीति । यद्वा आत्मज्ञानापेक्षितत्वज्ञापनाय तदुक्तिः । 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया' इति प्राक्प्रपञ्चितमिहोपासनशब्देन संगृहीतमिति ज्ञापनाय प्रणि-पाताद्युपादानम् । अशुचित्वं ह्युत्तरकर्माद्ययोग्यत्वरूपम् ; शुचित्वं च तद्योग्यत्वम्; तच्चात्र प्रकरणविशे-षितविषयमित्याह–आत्मज्ञानेति।रागादयोऽनृतादयो निषिद्धभक्षणादयश्च मनोवाक्कायानामशुद्धयः। प्रत्यक्षाद्यगोचरत्वप्रामाणिकत्वप्रतिपादनाय तत्तद्विशेषावगमाय च—शास्त्रसिद्धेत्युक्तम् । स्थैर्यं निश्च-लत्वम्; तच्च प्रकृते नियच्छति—अध्यात्मेति । निश्चलत्वं बाह्यकुदृष्टिभिरक्षोभणीयत्वं, निस्संदेहत्व-मित्यर्थः।निग्राह्यत्वसामर्थ्यादत्रात्मशब्दो मनोविषयः। अत एव परोक्तं संघातपरत्वमयुक्तम् । स्वभावेन सर्वतः प्रवृत्तस्य निग्रहश्चापर्यान्निवर्तनं, तदाह—आत्मस्वरूपेति ॥ ७ ॥

प्र-पा ॥ १ ॥ | २. गी. ४-३४॥

---

शं॥ ज्ञेयविज्ञाने योग्यः अधिकृतः भवति, यत्परः संन्यासी ज्ञाननिष्ठः उच्यते, तम् अ-मानित्वादिगुणं, ज्ञानसाधनत्वात् ज्ञानशब्दवाच्यं, विदधाति भगवान्—अमानित्वं—मानिनः भावः मानित्वम् आत्मनः श्लाघनं, तदभावः अमानित्वम् । अदम्भित्वं—स्व-धर्मप्रकटीकरणं दम्भित्वं, तदभावः अदम्भित्वम् । अहिंसा अहिंसनं प्राणिनाम् अपीड-नम् । क्षान्तिः परापराधप्राप्तौ अविक्रिया। आर्जवम् ऋजुभावः अवक्रत्वम् । आचार्यो-पासनं मोक्षसाधनोपदेष्टुः आचार्यस्य शुश्रूषादिप्रयोगेण सेवनम् । शौचं कायमलानां

---

आ॥'स च यो यत्प्रभावश्च' इति वक्तुं तज्ज्ञानसाधनान्याह—अमानित्वमित्यादिना । आत्माल्पत्वं ज्ञात्वापि महत्त्वप्रदर्शनं दम्भः । 'ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं दम्भो माहा-त्म्यदर्शनम्' इति ह्यभिधानम् । आर्जवं—मनोवाक्कायकर्मणामवैपरीत्यम् ॥ ७ ॥

---

ज॥ननु षट्स्वर्थेषु प्रतिज्ञातेषु अमानित्वादिकमनन्तर्भूतं किमित्युच्यत इत्यत आह-- सचेति । इति प्रतिज्ञातमर्थद्वयं वक्तुं 'ज्ञेयं यत्तत्' इत्यादिना। न यादृशतादृशेन श्रवणेन तदनुभवारूढं भवतीत्याशयेनेति शेषः । मानाहंकाराभ्यां दम्भं पृथक् दर्शयति—आत्मेति। आर्जवं ज्ञानसाधनं यथा स्यात्तथा व्याचष्टे—आर्जवमिति । एतच्च सन्मार्ग इति ज्ञातव्यम् ॥ ७ ॥

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८

रा॥इन्द्रियार्थेषु वैराग्यम्—आत्मव्यतिरिक्तेषु विषयेषु सदोषतानुसंधानेनोद्वेजनम् ; अनहंकारः—अनात्मनि देहे आत्माभिमानरहितत्वम् , प्रदर्शनार्थमिदम् ; अनात्मीये-ष्वात्मीयाभिमानरहितत्वं च विवक्षितम् ; जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं—सशरीरत्वे जन्ममृत्युजराव्याधिदुःखरूपस्य दोषस्यावर्जनीयत्वानुसंधानम् ॥ ८ ॥

ता॥ बाह्यविषयवैराग्यं हि आत्मरागनिबन्धनमित्यभिप्रायेणाह—आत्मव्यतिरिक्तविषयेष्विति । विरागस्य भावो वैराग्यम्, तत्प्रकारमाह—सदोषतानुसंधानेनोद्वेजनमिति । दुःखसाध्यत्वदुःख-मिश्रत्वनश्वरत्वादिभिस्तेषां दोषमयत्वम्। गर्वरूपस्याहंकारस्य पूर्वं निषेधादत्राहंकारशब्देन देहात्मभ्रमो निवार्यत इत्याह—अनात्मनीति । अहंकारस्य निषेधस्तन्मूलस्य सर्वत्र तत्सहपठितस्य ममकारस्यापि निषेधं प्रदर्शयितुमित्याह—प्रदर्शनार्थमिति । शरीरप्रयुक्तजन्मादिदोषदर्शनं 'नह वै सशरीरस्य सतः प्रियाप्रिययोः ' इत्यादिप्रकारेण शरीरस्य हेयताप्रतिपत्त्यर्थमित्यभिप्रायेणाह—सशरीरत्वइति । जन्ममृत्युजराव्याधिभिर्जन्यं दुःखं जन्ममृत्युजराव्याधिदुःखम्, स एव दोष इति समासार्थः। जन्मादय एव वा दुःखान्तास्सर्वे दुःखसाधनत्वाद्दुःखत्वाच्च दोषाः। नहि तुषतण्डुलवच्छरीरमवस्थाप्य दोषाः परिहर्तुं शक्या इति दर्शयितुम् अवर्जनीयत्वोक्तिः। अनुदर्शनं भूयोभूयोदर्शनमित्याह—अनुसंधान-मिति ॥ ८ ॥

प्र·पा ॥ १. छा. ८. १२. १ ॥

शं॥मृज्जलाभ्यां प्रक्षालनम्;अन्तश्च मनसः प्रतिपक्षभावनया रागादिमलानाम् अपनयनं शौचम् । स्थैर्यं स्थिरभावः ; मोक्षमार्गे एव कृतव्यवसायित्वम् । आत्मविनिग्रहः आत्मनः उपकारकतया आत्मशब्दवाच्यस्य कार्यकरणसङ्घातस्य विनिग्रहः स्वभावेन सर्वतः प्रवृत्तस्य सन्मार्गे एव निरोधः आत्मविनिग्रहः ॥ ७ ॥

किञ्च—इन्द्रियार्थेषु शब्दादिषु दृष्टादृष्टेषु विषयभोगेषु विरागभावो वैराग्यम्, अनहङ्कारः अहङ्काराभाव एव च, जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं—जन्म च मृत्युश्च जरा च व्याधयश्च दुःखानि च तेषु जन्मादिदुःखान्तेषु प्रत्येकं दोषानुदर्शनम् । जन्मनि गर्भवासयोनिद्वारनिस्सरणं दोषः, तस्य अनुदर्शनम् आलोचनम् । तथा मृत्यौ दोषानुदर्शनम् । तथा जरायां प्रज्ञाशक्तितेजोनिरोधदोषानुदर्शनं, परिभूतता चेति । तथा व्याधिषु शिरोरोगादिषु दोषानुदर्शनम् । तथा दुःखेषु आध्यात्मिकाधिभौतिका-धिदैविकनिमित्तेषु । अथवा—दुःखान्येव दोषः दुःखदोषः तस्य जन्मादिषु पूर्ववत् दर्शनं—दुःखं जन्म, दुःखं मृत्युः, दुःखं जरा, दुःखं व्याधयः । दुःखनिमित्तत्वात् जन्मादयः दुःखानि न पुनः स्वरूपेणैव इति । एवं जन्मादिषु दुःखदोषानुदर्शनात् देहेन्द्रियादिविषयभोगेषु वैराग्यम् उपजायते । ततः प्रत्यगात्मनि प्रवृत्तिः करणानाम् आत्मदर्शनाय । एवं ज्ञानहेतुत्वात् ज्ञानम् उच्यते जन्मादिदुःखदोषानुदर्शनम् ॥ ८ ॥

किञ्च—असक्तिः-सक्तिः सङ्गनिमित्तेषु विषयेषु प्रीतिमात्रं, तदभावः असक्तिः।अन-भिष्वङ्गः अभिष्वङ्गाभावः । अभिष्वङ्गो नाम सक्तिविशेष एव अनन्यात्मभावनालक्षणः; यथा अन्यस्मिन् सुखिनि दुःखिनि वा'अहमेव सुखी दुःखी च' जीवति मृते वा 'अह-

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९**

रा॥असक्तिः—आत्मव्यतिरिक्तपरिग्रहेषु सङ्गरहितत्वम्; अनभिष्वङ्गः **पुत्रदारगृहादिषु**—तेषु शास्त्रीयकर्मोपकरणत्वातिरेकेण श्लेषरहितत्वम्; संकल्पप्रभवेष्विष्टानिष्टोपनिपातेषु हर्षोद्वेगरहितत्वम् ॥ ९ ॥

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १०**

**मयि**—सर्वेश्वरे चैकान्त्ययोगेन स्थिरा भक्तिः; जनवर्जितदेशवासित्वं, जनसंसदि

ता॥पूर्वम् 'इन्द्रियार्थेषु वैराग्यम्'इति सांस्पर्शिके शब्दादिविषये विरक्तिरुक्ता;इदानीम्'असक्तिः' इत्याभिमानिकेषु सङ्गरहितत्वमुच्यत इति पुनरुक्तिं परिहर्तुम्—**आत्मव्यतिरिक्तपरिग्रहेष्वित्युक्तम्।** तर्हि गृहस्थस्य मुमुक्षोराभिमानिकसर्वधर्मपरित्यागेन कथमाश्रमधर्मो निर्वर्त्येतेत्यत्रोच्यते—**अनभिष्वङ्गः पुत्रदारगृहादिष्विति** । नात्र तेषूपयुक्तानामपि स्वरूपेण त्यागो विवक्षितः, प्रव्रजितस्याप्यवर्जनीयेषु सङ्गमात्रनिषेधात् - 'न कुण्ड्यां नोदके सङ्गो न चेले न च विष्टरे। नागारे नासने नान्ये यस्य वै मोक्षवित्तु सः'इति।अतो धर्मोपयुक्तत्वमात्रेण तु परिग्रह एवेत्यभिप्रायेणाह—**शास्त्रीयेति।** सङ्गोऽभिष्वङ्गहेतुः, 'सङ्गात्संजायते कामः' इत्युक्तत्वात्। अतः कारणाभावात्कार्याभाव इति भावः। अभिष्वङ्गोऽतिसक्तिः । सांस्पर्शिकेष्टानिष्टयोस्समचित्तत्वस्याशक्यत्वादाह—**संकल्पप्रभवेष्विति** । पुत्रदारादिप्रसङ्गात्तद्विषयत्वं युक्तमेवेति च भावः ॥ ९ ॥

'मयि'इत्यनेनान्यभक्त्युन्मूलनेनाव्यभिचारित्वोपयुक्ताकारविवक्षामाह—**मयिसर्वेश्वरइति।**'अनन्ययोगेन'इति देवतान्तरादिपरित्यागस्संगृहीतः। तत एव चाव्यभिचारित्वं तन्मूलं स्थैर्यम्, अन्यथा पुनरुक्तेरित्यभिप्रायेणाह—**ऐकान्त्ययोगेन स्थिरेति** । 'अनन्ययोगेनापृथक्समाधिना' इति शंकरोक्तमेतेन प्रत्युक्तम्। न व्यभिचरितुं शीलमस्या इत्यव्यभिचारिणीति।समाधिविरोधिपरिहारार्थं—**विवि-**

प्र-पा ॥ १ ॥ | २. गी. २-६२॥

शं॥मेव जीवामि, मरिष्यामि च' इति। क इति? आह—**पुत्रदारगृहादिषु पुत्रेषु दारेषु गृहेषु**—आदिग्रहणात् अन्येष्वपि अत्यन्तेष्टेषु दासवर्गादिषु। तच्च उभयं ज्ञानार्थत्वात् ज्ञानम् उच्यते। नित्यं च समचित्तत्वं तुल्यचित्तता, क? इष्टानिष्टोपपत्तिषु इष्टानाम् अनिष्टानां च उपपत्तयः संप्राप्तयः, तासु इष्टानिष्टोपपत्तिषु । इष्टोपपत्तिषु न हृष्यति न कुप्यति च अनिष्टोपपत्तिषु। तच्च एतत् नित्यं समचित्तत्वं ज्ञानम् ॥ ९ ॥

किञ्च—मयि च ईश्वरे अनन्ययोगेन—अपृथक्समाधिना'न अन्यो भगवतो वासु-

आ॥सक्तिः-स्नेहः। स एवातिपकोऽभिष्वङ्ग। 'स्नेहः सक्तिः स एवातिपकोऽभिष्वङ्ग-उच्यते' इत्यभिधानम् ॥ ९ ॥

ज॥सक्त्यभिष्वङ्गशब्दयोरर्थभेदमाह—**सक्तिरिति** ॥ ९ ॥

रा॥चाप्रीतिः ॥ १० ॥

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थचिन्तनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११

**आत्मनि ज्ञानम् अध्यात्मज्ञानं तन्निष्ठत्वं; तत्त्वज्ञानार्थचिन्तनं—तत्त्वज्ञानप्रयोजनं यच्चिन्तनं तन्निरतत्वमित्यर्थः; ज्ञायतेऽनेनात्मेति ज्ञानम्, आत्मज्ञानसाधनमित्यर्थः;**

---

ता॥केत्यादि। 'अहेरिव गणाद्भीतः' इत्यादिवत्। उक्तं च मोक्षधर्मे 'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । सत्यं धृतिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः' इति । जनोऽत्र सत्त्वोत्तरेतरः ॥ १० ॥

'अध्यात्मज्ञाननित्यत्वम्' इत्यत्र नित्यशब्देनाविच्छिन्नानुवृत्तिर्विवक्षितेत्याह—**तन्निष्ठत्वमिति ।** 'तत्त्वज्ञानार्थचिन्तनम्' इत्युक्तस्य तत्त्वज्ञानस्य अर्थचिन्तनमित्यनुचितम्, न हि तत्त्वज्ञानस्य कोऽर्थ इति चिन्तनप्रकारः; अपितु तत्त्वं किमिति; ततस्तत्त्वचिन्तनमिति वा तत्त्वार्थचिन्तनमिति वा वक्तव्यम्; न पुनस्तत्त्वज्ञानार्थचिन्तनमिति; एवं तत्त्वज्ञानविषयस्य प्रयोजनस्य वा चिन्तनं, तत्त्वज्ञानपुरुषार्थदर्शनमित्यादिकमपि मन्दप्रयोजनम्; दर्शनशब्दश्चात्राध्येतृभिर्न पठ्यते; ततोऽस्यार्थान्तरमुचितमाह—**तत्त्वज्ञानप्रयोजनमिति** । फलितमन्यत्र चिन्ताराहित्यमभिप्रेत्याह—**तन्निरतत्वमित्यर्थ इति।** अमानित्वादीनां सर्वेषामविशेषेण ज्ञानशब्दनिर्देशोचितं निर्वचनमाह—**ज्ञायतेऽनेनेति।**आत्मेत्यर्थप्रकरणलब्धविषयविशेषाभिधानम्।करणव्युत्पत्तिं विवृण्वन् फलितमाह— **आत्मज्ञानेति** । आपातप्रतीत्यादेः पूर्वसिद्धत्वादपरोक्षादिज्ञानमिह विवक्षितम्। 'एतज्ज्ञानम्' इति निर्दिश्य 'यदतोऽन्यथा'

---

प्र-पा ॥ १ ॥ | २. भार. शा. मो. २८३-३८॥

---

**शं॥देवात् परः अस्ति, अतः स एव नः गतिः' इत्येवं निश्चिता अव्यभिचारिणी बुद्धिः अनन्ययोगः, तेन भजनं भक्तिः न व्यभिचरणशीला अव्यभिचारिणी।सा च ज्ञानम् । विविक्तदेशसेवित्वं, विविक्तः स्वभावतः संस्कारेण वा अशुच्यादिभिः सर्पचोरव्याघ्रभयादिभिश्च रहितः अरण्यनदीपुलिनदेवगृहादिः विविक्तो देशः, तं सेवितुं शीलम् अस्य इति विविक्तदेशसेवी, तस्य भावः विविक्तदेशसेवित्वम् । विविक्ते हि देशे चित्तं प्रसीदति। ततः आत्मादिभावना विविक्ते संजायते । अतः विविक्तदेशसेवित्वं ज्ञानम् उच्यते । अरतिः अरमणं जनसंसदि, जनानां प्राकृतानां संस्कारशून्यानां अविनीतानां संसत् समवायः जनसंसत्; न संस्कारवतां विनीतानां संसत्, तस्याः ज्ञानोपकारित्वात् । अतः प्राकृतजनसंसदि अरतिः ज्ञानार्थत्वात् ज्ञानम् ॥ १० ॥**

**'अध्यात्मज्ञाननित्यत्वम्—आत्मादिविषयं ज्ञानम् अध्यात्मज्ञानं, तस्मिन् नित्यभावः नित्यत्वम् । अमानित्वादीनां ज्ञानसाधनानां भावनापरिपाकनिमित्तं तत्त्वज्ञानं, तस्य अर्थः मोक्षः संसारोपरमः, तस्य आलोचनं तत्त्वज्ञानार्थदर्शनम्; तत्त्वज्ञानफलालोचने हि तत्साधनानुष्ठाने प्रवृत्तिः स्यादिति । एतत् अमानित्वादितत्त्वज्ञानार्थदर्शनान्तम् उक्तं ज्ञानम् इति प्रोक्तं,ज्ञानार्थत्वात्। अज्ञानं यत् अतः एतस्मात् यथोक्तात् अन्यथा विपर्ययेण—मानित्वं दम्भित्वं हिंसा अक्षान्तिः अनार्जवम् इत्यादि अज्ञानं विज्ञेयं परिहरणाय, संसारस्य प्रवृत्तिकारणत्वात् इति ॥ ११ ॥**

ता॥क्षेत्रसंबन्धिनः पुरुषस्यामानित्वादिकमुक्तं गुणवृन्दमेवात्मज्ञानोपयोगि, एतद्व्यतिरिक्तं सर्वं क्षेत्रकार्यमात्मज्ञानविरोधीत्यज्ञानम्॥ ११ ॥

अथ 'एतद्यो वेत्ति' इति वेदितृत्वलक्षणेनोक्तस्य क्षेत्रज्ञस्य स्वरूपं विशोध्यते—

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते ॥　　१२

अमानित्वादिभिस्साधनैः ज्ञेयं प्राप्यं यत्प्रत्यगात्मस्वरूपं तत्प्रवक्ष्यामि, यत् ज्ञात्वा जन्मजरामरणादिप्राकृतधर्मरहितममृतमात्मानं प्राप्नोति ; अनादि-आदिर्यस्य न विद्यते,

ता॥इति सामान्येन तद्व्यतिरिक्तस्य सर्वस्याज्ञानतोक्तिस्तस्य सर्वस्य परिहरणीयत्वपरेत्यभिप्रायेणाह—क्षेत्रसंबन्धिनइति।क्षेत्रसंबन्धोक्तिस्तदत्यन्तनिवृत्तेः ज्ञानसापेक्षत्वसूचनार्था । 'एतत्' इत्यवीच्छद्य निर्देशेनाभिप्रेतं—गुणवृन्दमेवेत्यवधारणेन विवृतम् । न केवलं प्रकृतगुणप्रतिपक्षभूतमानित्वादिमात्रमित्यभिप्रायेणाह—एतद्व्यतिरिक्तं सर्वमिति । 'अज्ञानम्' इत्यत्र करणव्युत्पत्तिनैरपेक्ष्यात्प्रसिद्धभावव्युत्पत्त्यनुसारेण ज्ञानविरोधित्वमुच्यत इत्याह—क्षेत्रकार्यमात्मज्ञानविरोधीत्यज्ञानमिति । अवैरूप्याय करणार्थत्वेऽप्यसौ फलितोक्तिर्वा ॥ ११ ॥

ज्ञाता हि पूर्वमुद्दिष्टः—' स च यो यत्प्रभावश्च ' इति ; स एव पुनः परामृष्टः ; तत्कथं ' ज्ञेयं यत्तत्प्रवक्ष्यामि' इत्युच्यत इत्यत्राह—अथेति । वेद्यविशेषस्यात्मनो लक्षणतया हि वेदितृत्वं प्रागुक्तमिति भावः । अत एव ' ज्ञेयं यत्' इत्यादेः परब्रह्मविषयत्वभ्रमो निरस्तः, 'क्षेत्रक्षेत्रज्ञयोर्ज्ञानम्' इति प्रक्रमात्, ' क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा इति उपसंहरिष्यमाणत्वात्, मध्येच 'प्रकृतिं पुरुषंचैव' इति तयोरेव निरूपणात् इन्द्रियाधीनभोगत्वोत्क्रमणगुणवश्यत्वादिवचनाच्च । स्वरूपशब्देन नपुंसक' निर्देशविवक्षाद्योतनम् ; वक्ष्यमाणब्रह्मशब्दापेक्षया वा नपुंसकत्वम् । स्वेतरसमस्तव्यावर्तकं हि लक्षणम्। तत्र वेदितृत्वलक्षणेन विविक्तस्वरूपस्य किमन्यत्स्वरूपशोधनमिति चेत्-तन्न लक्षणेनान्यत्वमात्रं हि प्रतीयते, न पुनर्भावाभावरूपाः सर्वे प्रकाराः; यथा 'गन्धवती पृथिवी' इत्यत्र तेनाकारेण जलादिव्यावृत्तिमात्रं सिध्यति, न पुनः पाकजरूपादिमत्त्वादिकम्,तद्वदिहापि ज्ञातृत्वलक्षणाभिधानेऽपि तस्य ज्ञातुः कार्यत्वाकार्यत्वादिविवेको न सिध्येत्; अतस्स वक्तव्य इत्यभिप्रायेण 'ज्ञेयम्' इत्यनेन सूचितां संगतिमाह—अमानित्वादिभिरिति । प्रवक्ष्यामि प्रकर्षेण यथावद्वक्ष्यामीत्यर्थः।'अनादिमत्' इति पदच्छेदो न युक्तः, प्रत्ययमन्तरेणापि बहुव्रीहिवशात्तदर्थसिद्धेरित्यभिप्रायेणाह—आदिर्यस्येति । अनादि कारण-

शं॥यथोक्तेन ज्ञानेन ज्ञातव्यं किम् ? इत्याकाङ्क्षायाम् आह—' ज्ञेयं यत्तत् ' इत्यादिना ।

ननु यमाः नियमाश्च अमानित्वादयः। न तैः ज्ञेयं ज्ञायते । न हि अमानित्वादि कस्यचित् वस्तुनः परिच्छेदकं दृष्टम् । सर्वत्रैव च, यद्विषयं ज्ञानं, तदेव तस्य ज्ञेयस्य परिच्छेदकं दृश्यते; न हि अन्यविषयेण ज्ञानेन अन्यत् उपलभ्यते, यथा घटविष-

आ॥तत्त्वज्ञानार्थदर्शनम् -अपरोक्षज्ञानार्थं शास्त्रदर्शनम् ॥ ११ ॥

जा॥ननु तत्त्वज्ञानार्थदर्शनं नाम ज्ञानमेव, तत्कथं ज्ञानसाधनेषूच्यत इत्यत आह—तत्त्वेति । शास्त्रदर्शनं तात्पर्यालोचनम् । अत्र शास्त्रस्येत्यध्याहृत्य व्याख्यानमिति ज्ञातव्यम् ॥ ११ ॥

रा॥तदनादि ; अस्य हि प्रत्यगात्मन उत्पत्तिर्न विद्यते ; तत एवान्तो न विद्यते, श्रुतिश्च *'न जायते म्रियते वा विपश्चित्' इति;मत्परम्—अहं परो यस्य तन्मत्परम्, †'इतस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूताम्'इतिह्युक्तम्, भगवच्छरीरतया भगवच्छेषतैकरसं ह्यात्मस्वरूपम्; तथाच श्रुतिः—‡'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति'इति,तथा§'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता नचाधिपः' ¶'प्रधानक्षेत्रज्ञपतिर्गुणेशः' इत्यादिका । ब्रह्म-बृहत्त्वगुणयोगि, शरीरादेरर्थान्तरभूतं,स्वतश्शरीरादिभिः परिच्छेदरहितं क्षेत्रज्ञतत्त्वमित्यर्थः; ||'सचानन्त्याय कल्पते'इति हि श्रूयते; शरीरपरिच्छिन्नत्वं चास्य कर्मकृतम् ; कर्मबन्धान्मुक्तस्यानन्त्यम् ; आत्मन्यपि ब्रह्मशब्दः प्रयुज्यते—+'स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते' × 'ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च' ÷ 'ब्रह्मभूतः प्रसन्नात्मा न शोचति

ता॥रहितमित्यर्थः। अयमर्थो'नात्मा तेः'इत्यधिकरणसिद्ध इत्यभिप्रायेणाह—अस्य हीति।पूर्वोक्तामृतत्वेऽपि हेतुरयमित्याह—तत एवेति । उभयत्र प्रमाणमाह—श्रुतिश्चेति । 'अनादिमत्' इति पदच्छेदेऽत्र निर्दिश्यमानं ब्रह्म परशब्देन विशेषणीयम्; तच्चाप्रकरणत्वादस्वरसम्; अतः प्रकरणोचितपदच्छेदार्थमाह—अहं परो यस्येति। प्रागुक्तसंग्रहो ह्ययमित्यभिप्रायेणाह—इतस्त्वन्यामिति। परशब्दोऽत्र शेषिपरः। शरीरत्वे शेषत्वे च क्रमाच्छ्रुतिमाह—तथाचेति। एतेन 'मत्परम्'इति पदच्छेदेऽर्थासंभवान्मतुपो बहुव्रीहिणा समानार्थत्वेऽपि प्रयोगः श्लोकपूरणार्थ इति शंकरोक्तं प्रत्युक्तम्। ननु परशब्देनाविशेषितोऽपि ब्रह्मशब्दः परमात्मन्येव मुख्यः ; तत्कथमस्य जीवविषयत्वमित्यत्राह—बृहत्त्वगुणयोगीति । अणुत्वेन श्रुतिसिद्धस्य संकुचितज्ञानस्य कथं बृहत्त्वमित्यत्राह—शरीरादेरिति । परिच्छेदरहितं—स्वतस्सर्वविषयत्वार्हस्य ज्ञानस्य संकोचरहितमित्यर्थः। स्वरूपाविर्भावदशायां बृहत्त्वं श्रुतिसिद्धमित्याह—सचेति । अनन्तस्वभावस्य परिच्छिन्नत्वासंभवादानन्त्यमौपचारिकमित्यत्राह—शरीरपरिच्छिन्नत्वंचेति। औपाधिकमवस्थाभेदेनाविरुद्धं चेत्यभिप्रायः। औपचारिकस्यापि ब्रह्मशब्दप्रयोगस्य प्रसिद्धिमाह—आत्मन्यपीति । अत एव हि परंब्रह्मेति विशेषणस्य सार्थतेत्यभिप्रायः । अत्रैव शास्त्रे बहुषु प्रदेशेषु प्रत्यगात्मन्येव ब्रह्मशब्दप्रयोगं दर्शयति—सगुणानिति । ब्रह्मभूयाय ब्रह्मत्वाय । नहि जीवस्य मुक्तस्यापि साक्षाद्ब्रह्मत्वं, 'मम साधर्म्यमागताः' इत्यादिविरोधादिति भावः। 'ब्रह्मणो हि प्रतिष्ठाहम्'इत्यत्र 'अहम्'इति परं ब्रह्म निर्दिश्यते;तत्प्रतिष्ठं च ब्रह्म ततोऽन्यदेवेति भावः। 'ब्रह्मभूतः'इत्यत्र श्लोके परब्रह्मप्राप्तिसाधनभूतभक्त्युत्पत्तेः पूर्वमेव ब्रह्मभूतत्वंच नहि परब्रह्मस्वरूपत्वमिति भावः। 'न सत्तन्नासदुच्यते' इत्यत्र न सर्वप्रकारोक्तिगोचरत्वप्रतिक्षेपः, स्ववचनविरोधात्; नच सत्त्वासत्त्वनिषेधः,'परस्परविरोधे हि न प्रकारान्तरस्थितिः'इति न्यायात्; नापि सदसत्संज्ञकाभ्यां वस्तुभ्यां व्यावृत्तिः, तयोरसिद्धत्वात् ; नच शुभाशुभादिव्यवच्छेदः, शुभत्वनिषेधायोगात् ; अतोऽत्र

प्र-पा ॥ * कठ. १-२-१८ ॥
† गी. ७-५ ॥
‡ बृ. ५-७-२२, मा. पा ॥
§ श्वे. ६-९ ॥ ¶ श्वे. ६-१६ ॥
|| श्वे. ५-९ ॥ + गी. १४-२६ ॥
× गी. १४-२७ ॥ ÷ गी. १८-५४ ॥
१. शारी २-३-१८ ॥
२. गी. १४-२ ॥ ३. गी. १४-२७ ॥
४. गी. १८-५४ ॥
५ ॥

शां॥येण ज्ञानेन अग्निः ॥

रा॥नकाङ्क्षति' *'समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम्'इति;न सत्तन्नासदुच्यते—कार्यकारणरूपावस्थाद्वयरहिततया सदसच्छब्दाभ्यामात्मस्वरूपं नोच्यते, कार्यावस्थायां हि देवादिनामरूपभाक्त्वेन सदित्युच्यते, तदनर्हतया कारणावस्थायामसदित्युच्यते; तथाच श्रुतिः †'असद्वा इदमग्र आसीत्। ततो वै सदजायत' ‡'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत'इत्यादिका;कार्यकारणावस्थाद्वयान्वयस्त्वात्मनः कर्मरूपाविद्यावेष्टनकृतः, न स्वरूपकृत इति सदसच्छब्दाभ्यामात्मस्वरूपं नोच्यते ; यद्यपि 'असद्वा इदमग्र आसीत्'इति कारणावस्थं परं ब्रह्मोच्यते, तथापि नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरं परं ब्रह्म कारणावस्थमिति कारणावस्थायां क्षेत्रक्षेत्रज्ञस्वरूपमप्यसच्छब्दवाच्यम्; क्षेत्रज्ञस्य सावस्था कर्मकृतेति परिशुद्धस्वरूपं न सदसच्छब्दनिर्देश्यम् ॥ १२ ॥

ता॥किमुच्यत इत्यत्राह—कार्यकारणेति।परिशुद्धाकारविषयमिदमिति ज्ञापनाय—आत्मस्वरूपमित्युक्तम् । अवस्थाद्वये सदसच्छब्दयोः प्रयोगनिमित्तमाह —कार्यावस्थायामिति । तन्निबन्धनं श्रुतौ परमात्मादिविषयप्रयोगं दर्शयति—तथाचेति । '[1]असद्वा इदम्' इत्यत्रासच्छब्दनिर्दिष्टं हि तत इति कारणतयोच्यते ; 'सदजायत'इति कार्यं सच्छब्देन, '[2]तद्धेदम्' इति समानार्थश्रुत्यन्तरेणासदादिशब्दौ क्रमान्नामरूपप्रहाणतद्योगनिमित्तौ व्याख्यातौ । ननु '[1]असद्वा इदमग्र आसीत्'इत्याद्युक्तमवस्थाद्वयं जीवस्याप्यस्त्येव, अन्यथा प्रागुक्तप्रकृतित्वानुपपत्तेः । '[3]तोयेन जीवान्व्यससर्ज भूम्याम्'इति श्रुत्याच तात्सिद्धेरित्यत्राह—कार्यकारणेति । कर्मोपाधिकमेव ह्यवस्थाद्वयं, न पुनस्स्वाभाविकम् । अत्र स्वाभाविकरूपमुच्यत इत्यर्थः । ननु '[4]कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः' इत्यस्मिन्नधिकरणे सदसदव्याकृतादयस्सर्वे कारणवाक्यगताश्शब्दाः परमात्मपरा इति निर्णीतम्,तत्कथमत्रासच्छब्देन जीवप्रसङ्ग इत्यत्राह—यद्यपीति । सदसच्छब्दौ ह्यत्र परमात्मनि सद्वारकौ, अतो द्वारभूते जीवे तद्वाच्यत्वं सिद्धमिति भावः । तर्हि परिशुद्धावस्थायामपि कार्यनामरूपविभागाभावादसच्छब्दः प्राप्त इत्यत्राह—क्षेत्रज्ञस्येति । कर्मकृतावस्थाद्वयनिषेधेऽत्र तात्पर्यमिति भावः ॥ १२ ॥

प्र-पा ॥ * गी. १८-५४ ॥
† तै. आन. ७-१ ॥ ‡ बृ. ३-४-७ ॥
१. तै. आन. ७. अनु. १ ॥
२. बृ. ३-४-७ ॥
३. तै-अम्भस्यनुवाक ॥
४. शारी. १-४-१४ ॥ कारणत्वेनेति - आकाशादिपदचिह्नितेषु 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इत्यादिषु सर्वज्ञस्य परस्य ब्रह्मणः कारणत्वप्रतिपादनात्, सर्वेषु सृष्टिवाक्येषु यथाव्यपदिष्टस्यैव कारणत्वेनोक्तेः ब्रह्मकारणतावादैकान्तानि वेदान्तवाक्यानि । सर्वज्ञत्वादिविशिष्टत्वेन 'जन्माद्यस्य यतः' इत्येवमादिषु अस्माभिः प्रतिपादितं ब्रह्म-यथाव्यपदिष्टमित्युच्यते ; अतो ब्रह्मकारणञ्जगदिति ॥

शं॥नैष दोषः, ज्ञाननिमित्तत्वात् ज्ञानम् उच्यते इति हि अवोचाम; ज्ञानसहकारिकारणत्वाच्च ॥

ज्ञेयं ज्ञातव्यं यत् तत् प्रवक्ष्यामि प्रकर्षेण यथावत् वक्ष्यामि । किंफलं तत् इति

आ॥परं ब्रह्मेति —'स च यः' इति प्रतिज्ञातमुच्यते । अन्यद्यत्प्रभाव इति ।

ज॥प्रतिज्ञातार्थद्वयप्रतिपादनाय 'ज्ञेयं यत्तत्'इत्यादिकं वाक्यमिति सूचितम् । तत्र केन तु किमुच्यत इत्यत आह-परमिति। इति नामोक्त्या।अन्यत्-अनादिमदित्यादिकं 'यत्प्रभावः'इति प्रतिज्ञातस्य प्रतिपादकमित्यर्थः । आदिरस्यास्तीत्यादिमत्,न आदिमदनादिमदिति व्याख्यानेन विद्यते आदिरस्येत्यना-

शां॥प्ररोचनेन श्रोतुः अभिमुखीकरणाय आह—यत् ज्ञेयं ज्ञात्वा अमृतम् अश्नुते, न पुनः म्रियते इत्यर्थः। अनादिमत् आदिः अस्य अस्तीति आदिमत्, न आदिमत् अनादिमत्—किं तत्?—परं निरतिशयं ब्रह्म. 'ज्ञेयम्' इति प्रकृतम् ॥

अत्र केचित् 'अनादि मत्परम्' इति पदं छिन्दन्ति, बहुव्रीहिणा उक्ते अर्थे मतुपः आनर्थक्यम् अनिष्टं स्यात् इति। अर्थविशेषं च दर्शयन्ति—अहं वासुदेवाख्या परा शक्तिः यस्य तत् मत्परम् इति ॥

सत्यम् एवं न पुनरुक्तं स्यात्, अर्थः चेत् सम्भवति। न तु अर्थः सम्भवति. ब्रह्मणः सर्वविशेषप्रतिषेधेनैव विजिज्ञापयिषितत्वात् 'न सत्तन्नासदुच्यते' इति। विशिष्टशक्तिमत्त्वप्रदर्शनं, विशेषप्रतिषेधश्च इति विप्रतिषिद्धम्।तस्मात् मतुपः बहुव्रीहिणा समानार्थत्वेऽपि प्रयोगः श्लोकपूरणार्थः ॥

अमृतत्वफलं ज्ञेयं मया उच्यते इति प्ररोचनेन अभिमुखीकृत्य आह—न सत् तत् ज्ञेयम् उच्यते।

ननु महता कण्ठरवेण उद्घुष्य 'ज्ञेयं प्रवक्ष्यामि' इति, अननुरूपम् उक्तं 'न सत्तन्नासदुच्यते' इति।

न, अनुरूपमेव उक्तम्। कथम्?—सर्वासु हि उपनिषत्सु ज्ञेयं ब्रह्म 'नेति नेति' 'अस्थूलमनणु' इत्यादिविशेषप्रतिषेधेनैव निर्दिश्यते 'न इदं तत्' इति, वाचः अगोचरत्वात् ॥

ननु तत् अस्ति. यत् वस्तु 'अस्ति' शब्देन उच्यते। अथ 'अस्ति' शब्देन नोच्यते, नास्ति तत् ज्ञेयम्। विप्रतिषिद्धं च—'ज्ञेयं तत्', 'अस्तिशब्देन नोच्यते' इति च ॥

न तावत् नास्ति, नास्तिबुद्ध्यविषयत्वात् ॥

---

आ॥आदिमद्देहवर्जितमित्यनादिमत्। अन्यथानादीत्येव स्यात्॥ १२॥

---

ज॥दीति बहुव्रीहित्वाश्रयणेनैव विवक्षितार्थसिद्धेः मतुपो वैयर्थ्यमिति दोषं पश्यन्तः केचिदनादीति मत्परमिति च पदं विच्छिद्य, अहं वासुदेवाख्या परा शक्तिर्यस्य तन्मत्परमिति व्याचक्षते; तदसत्, अर्थासंभवात्। न हि ब्रह्मेति वासुदेवेति कश्चिद्भेदः; न चावतारेषु पारावर्यमित्युक्तमिति भावेन यथा मतुपो न वैयर्थ्यं,तथा व्याचष्टे—आदिमदिति।आदिर्येषामस्तीत्यादिमन्ति,न विद्यन्ते आदिमन्ति यस्य तदनादिमत्। सामर्थ्यात्तानि देहेन्द्रियगुणक्रियादीनीत्यर्थः। अथवा पूर्वोक्त एव विग्रहः। न च मतुपो वैयर्थ्यं, वैदिकं लिङ्गव्यत्ययं विभक्तिलोपं वा मन्यमानस्य बहुव्रीहिर्वा नञ्समासो वायमिति संशयः स्यात् तथा च ब्रह्म स्वयं कारणं न भवतीत्यपि शङ्क्येत, तन्निवृत्त्यर्थं मतुबन्तेनादिशब्देन नञ्समासस्याश्रयणात्।ये त्वेवं प्रयोजनमनभिधाय मतुपः प्रयोगः श्लोकपूरणार्थ इत्युक्तवन्तः, तान्निराचष्टे—अन्यथेति। अस्मदुक्तप्रयोजनद्वयानङ्गीकार इत्यर्थः। सार्थकेन शब्दान्तरेण श्लोकपूरणसंभवादिति भावः। ननु बहुव्रीहिमाश्रित्य पुनर्मतुपः प्रयोगे दोषः स्यात्; न चैवम्; किं तु शब्दान्तरमेवैतत्; तत्कथमयं दोषः? अन्यथा'यद्विकारि'इत्यत्रापि दोषप्रसङ्गात्; मैवम्; बहुव्रीहिं विवक्षित्वाऽल्पेन शब्देनाभिमतार्थप्रतिपादनसंभवे बहुयत्नाश्रयणस्य दोषत्वेनोक्तत्वात्,'यद्विकारि' इत्यत्र गौरवाभावात्॥ १२॥

**सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।**
**सर्वतश्श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३**

रा॥**सर्वतः पाणिपादं तत्-परिशुद्धात्मस्वरूपं सर्वतःपाणिपादकार्यशक्तम्,तथा सर्वतो-**

ता॥आत्मस्वरूपस्याशरीरत्वान्निरवयवत्वान्निरिन्द्रियत्वाच्च पाणिपादप्रसङ्ग एव नास्ति, नचेदमनेकबाहुत्वादिप्रागुक्तपरं, जीवप्रकरणत्वस्थापनात्; अतएव जीवकर्मगृहीतैस्स्वेच्छागृहीतैश्च पाण्यादिभिर्विश्वात्मकस्य ब्रह्मणो योग उच्यत इत्यादिकल्पनापि निरस्ता, पादादिषु पाण्याद्यभावाच्च सर्वत इत्यपि न घटते; तत्कथं सर्वतः पाणिपादत्वादिकमित्यत्राह—**परिशुद्धेति** । पाण्यादिरहितस्यापि परिशुद्धात्मनः पाण्यादिशब्दलक्षिते शक्तियोगे श्रुतिं दर्शयितुं परमात्मनस्तद्रहितस्यापि तच्छक्तियोगं तावद्दर्शयति—**अपाणीति**। 'अपाणिपादः'इति निषेध्यस्य कर्मेन्द्रियवर्गस्योपलक्षणम्; 'अचक्षुरकर्णः' इति ज्ञानेन्द्रियवर्गस्य। तर्हि परमात्मासाधारणस्वभावस्यात्र अल्पशक्तौ जीवे कथं व्यपदेश इत्यत्राह—**प्रत्यगात्मनोऽपीति** । मुक्तदशायां ब्रह्मगुणाष्टकयोगादसंकुचितज्ञानशक्तेस्तदुपपत्तिरिति भावः।साम्य-श्रुतिसंकोचाभावाद्विशेषकण्ठोक्त्यभावेऽपि सर्वतःपाणिपादत्वादिकं सिद्धमेवेत्यभिप्रायेणैवकारः

**प्र-पा** ॥ १. श्वे. ३-१९ ॥

शां॥**ननु सर्वाः बुद्धयः अस्तिनास्तिबुद्ध्यनुगता एव । तत्र एवं सति ज्ञेयमपि अस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात्, नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा ॥**

**न,** अतीन्द्रियत्वेन **उभयबुद्ध्यनुगतप्रत्ययाविषयत्वात् । यद्धि इन्द्रियगम्यं वस्तु घटादिकं, तत् अस्तिबुद्ध्यनुगतप्रत्ययविषयं स्यात्, नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा । इदं तु ज्ञेयम् अतीन्द्रियत्वेन शब्दैकप्रमाणगम्यत्वात् न घटादिवत् उभयबुद्ध्यनुगतप्रत्ययविषयम्, इत्यतः 'न सत्तन्नासत्' इति उच्यते ॥**

**यत्तु उक्तं—विरुद्धम्, उच्यते, 'ज्ञेयं' 'न सत्तन्नासदुच्यते' इति, न विरुद्धम्, 'अन्यदेव तद्विदितादथो अविदितादधि' इति श्रुतेः ॥**

**श्रुतिरपि विरुद्धार्था इति चेत्—यथा यज्ञाय शालाम् आरभ्य 'यद्यमुष्मिन् लोकेऽस्ति वा न वेति' इत्येवमिति चेत्—**

**न, विदिताविदितान्यत्वश्रुतेः अवश्यविज्ञेयार्थप्रतिपादनपरत्वात् । 'यद्यमुष्मिन्' इत्यादि तु विधिशेषः अर्थवादः ।**

**उपपत्तेश्च सदादिशब्दैः ब्रह्म नोच्यते इति । सर्वो हि शब्दः अर्थप्रकाशनाय प्रयुक्तः, श्रूयमाणश्च श्रोतृभिः, जातिक्रियागुणसम्बन्धद्वारेण संगतिग्रहणसव्यपेक्षः अर्थं प्रत्याययति ; न अन्यथा, अदृष्टत्वात् । तत् यथा—'गौः' 'अश्वः' इति वा जातितः ; 'पाचकः' 'पाठकः' इति वा क्रियातः, 'शुक्लः' 'कृष्णः' इति वा गुणतः, 'धनी' 'गोमान्' इति वा सम्बन्धतः । न तु ब्रह्म जातिमत्, अतः न सदादिशब्दवाच्यम् । नापि गुणवत्—येन गुणशब्देन उच्यते—निर्गुणत्वात् । नापि क्रियाशब्दवाच्यं, निष्क्रियत्वात् 'निष्कलं निष्क्रियं शान्तम्' इति श्रुतेः । न च सम्बन्धी, एकत्वात् । अद्वयत्वात् अविषयत्वात् आत्मत्वाच्च न केनचित् शब्देन उच्यते इति युक्तम्; 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिभिश्च ॥ १२ ॥**

**सच्छब्दप्रत्ययाविषयत्वात् असत्त्वाशङ्कायां ज्ञेयस्य सर्वप्राणिकरणोपाधिद्वारेण त**

रा॥क्षिशिरोमुखं सर्वतश्श्रुतिमत्—सर्वतश्चक्षुरादिकार्यकृत्,*'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुस्स शृणोत्यकर्णः'इति परस्य ब्रह्मणोऽपाणिपादस्यापि सर्वतः पाणिपादादिकार्यकृत्त्वं श्रूयते, प्रत्यगात्मनोऽपि परिशुद्धस्य तत्साम्यापत्त्या सर्वतः पाणिपादादिकार्यकृत्त्वं श्रुतिसिद्धमेव, †'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति हि श्रूयते, ‡'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति च वक्ष्यते; लोके सर्वमावृत्य तिष्ठति—लोके यद्वस्तुजातं तत्सर्वं व्याप्य तिष्ठति, परिशुद्धस्वरूपं देशादिपरिच्छेदरहिततया सर्वगतमित्यर्थः ॥ १३ ॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४

---

ता॥साम्यापत्तिमात्रे सर्वथासाम्यं कथं श्रुतिसिद्धमित्यत्राह—तथेति। इदं हि परमसाम्यं जगद्व्यापारव्यतिरिक्तसर्वविषयमिति फलपादे मीमांसितमिति भावः । सच श्रुत्यर्थोऽत्राप्युपदेक्ष्यते,तद्विवक्षात्र युक्तेत्याह—इदं ज्ञानमिति । 'तिष्ठति'इत्यत्र व्याप्तेरप्रच्युतिर्विवक्षिता । कर्मवेष्टितज्ञानस्याणोः कथं सर्वव्यापिस्थितिरित्यत्राह—परिशुद्धेति । इदं च व्यापकत्वं धर्मभूतज्ञानद्वारेति निरूपितं शारीरके ¹'प्रदीपवदावेशस्तथाहि दर्शयति'इत्यादिना; जीवस्वरूपस्याणुत्वेनैव लक्षणात्, निर्विकारश्रुत्याच स्वरूपविकारायोगात् ॥ १३ ॥

---

प्र-पा ॥ * श्वे. ३-१९ ॥
† मु. ३-१-३ ॥ ‡ गी. १४-२ ॥
१. शारी. ४-४-१५ ॥ ननु आत्मा अणुपरिमाण इत्युक्तम् , कथमनेकशरीरेषु एकस्याणोरात्माभिमानसम्भव इत्यत्राह—प्रदीपवदिति—एकदेशस्थितस्यापि स्वप्रभारूपज्ञानव्याप्त्या सर्वानुभवः सिद्ध्यति । तथा दर्शयति हि श्रुतिः 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवस्स विज्ञेयः स चानन्त्याय कल्पते'इति। अमुक्तस्य कर्म नियामकम् , मुक्तस्य तु स्वेच्छेति विशेषः ॥

---

शं॥दस्तित्वं प्रतिपादयन् तदाशङ्कानिवृत्त्यर्थम् आह—सर्वतः पाणयः पादाश्च अस्य इति सर्वतःपाणिपादं तत् ज्ञेयम् । सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञस्य अस्तित्वं विभाव्यते । क्षेत्रज्ञश्च क्षेत्रोपाधितः उच्यते । क्षेत्रं च पाणिपादादिभिः अनेकधा भिन्नम् । क्षेत्रोपाधिभेदकृतं च विशेषजातं मिथ्यैव क्षेत्रज्ञस्य. इति तदपनयनेन ज्ञेयत्वम् उक्तं 'न सत्तन्नासदुच्यते' इति । उपाधिकृतं मिथ्यारूपमपि अस्तित्वाधिगमाय ज्ञेयधर्मवत् परिकल्प्य उच्यते 'सर्वतःपाणिपादम्' इत्यादि । तथा हि सम्प्रदायविदां वचनम् —'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति । सर्वत्र सर्वदेहावयवत्वेन गम्यमानाः पाणिपादादयः ज्ञेयशक्तिसद्भावनिमित्तस्वकार्याः इति, ज्ञेयसद्भावलिङ्गानि 'ज्ञेयस्य' इति उपचारतः उच्यन्ते । तथा व्याख्येयम् अन्यत् । सर्वतःपाणिपादं तत् ज्ञेयं सर्वतोक्षिशिरोमुखम् , सर्वतः अक्षीणि शिरांसि मुखानि च यस्य तत् सर्वतोक्षिशिरोमुखम् , सर्वतश्श्रुतिमत् - श्रुतिः श्रवणेन्द्रियम् , तत् यस्य तत् श्रुतिमत् लोके प्राणिनिकाये, सर्वम् आवृत्य सर्वं व्याप्य तिष्ठति स्थितिं लभते, न चलति इत्यर्थः ॥ १३ ॥

रा॥**सर्वेन्द्रियगुणाभासं**—सर्वेन्द्रियगुणैराभासो यस्य तत्सर्वेन्द्रियगुणाभासम्, इन्द्रियगुणा इन्द्रियवृत्तयः, इन्द्रियवृत्तिभिरपि विषयान् ज्ञातुं समर्थमित्यर्थः; **स्वभावतस्सर्वेन्द्रियविवर्जितं**—विनैवेन्द्रियवृत्तिभिः स्वत एव सर्वं जानातीत्यर्थः ; **असक्तं**—स्वभावतो देवादिदेहसङ्गरहितं,**सर्वभृच्चैव**—देवादिसर्वदेहभरणसमर्थंच,*'स एकधा भवति त्रिधा भवति'इत्यादिश्रुतेः; **निर्गुणं**—तथा स्वभावतस्सत्त्वादिगुणरहितं; **गुणभोक्तृच**—

ता॥नन्विन्द्रियाण्येव करणभूतानि,नपुनरिन्द्रियगुणा इत्यत्राह—**इन्द्रियगुणा इन्द्रियवृत्तयइति।** स्वयंप्रकाशस्यात्मस्वरूपस्य कथमिन्द्रियवृत्तिभिराभासः? ; विषयाभास विवक्षायामपि परिशुद्धस्वरूपप्रसङ्गे कथमैन्द्रियिकज्ञानोक्तिरित्यत्राह—**इन्द्रियवृत्तिभिरपी**ति। स्वरूपमिन्द्रियगुणैराभासत इत्यादिपरोक्तव्युदासायाह—**इन्द्रियगुणैराभासो यस्ये**ति । योग्यत्वं शुद्धावस्थायामप्यस्तीति भावः । एतेन 'सर्वेन्द्रियव्यापारैः व्यापृतमिव ज्ञेयम्'इति शंकरस्योद्ग्रन्थकल्पना निरस्ता । कदाचिदिन्द्रियवतः कथं सर्वेन्द्रियविवर्जितत्वमित्यत्राह—**स्वभावत**इति । सर्वेन्द्रियनिषेधे तदधीनज्ञानाभावात्परोक्तं पाषाणकल्पत्वप्रसङ्गं प्रागुक्तेन परिहरति—**विनैवे**ति । मुक्तस्यापि जगदाधारत्वाभावात्पर्यायेण सर्वजातीयदेहभृत्त्वाभावाच्च तच्छक्तिरत्रापि विवक्षिता;स्वतस्सङ्गराहित्यं च**'असक्तम्' इत्युच्यत** इत्याह—**स्वभावतो देवादी**ति । सामर्थ्यं परिशुद्धावस्थाभाविना कार्येण दर्शयति—**सएकधे**ति । आत्मस्वरूपस्य भिदुरत्वाभावाज्जक्षणादिश्रुतिवशाच्च विग्रहद्वारैव हि त्रिधा भवनादिकथनमिति भावः। एतेन 'सर्वभृत्त्वं सर्वाध्यासाधिष्ठानत्वम्'इति वदन् प्रत्युक्तः।'निर्गुणम्'इत्यत्र न सत्त्वादिगुणसमवायित्वं प्रतिषिद्ध्यते, तस्याशुद्धावस्थायामपि प्रसङ्गाभावात् ; 'गुणभोक्तृच' इत्येतत्प्रतिपक्षरूपत्वाभावाच्च ; अतोऽत्र कर्मोपाधिकस्य प्राकृतगुणभोगस्य प्रतिक्षेपः क्रियत इति न निर्विशेषवादावकाश इत्यभिप्रायेणाह—**स्वभावतस्सत्त्वादिगुणरहितमि**ति । **स्वभावत इत्यनेन गुणभोक्तृत्वविरोधपरिहारः।**

प्र-पा॥ * छा. ७-२६-२ ॥

शं॥उपाधिभूतपाणिपादादीन्द्रियाध्यारोपणात् ज्ञेयस्य तद्वत्ताशङ्का मा भूत् इत्येवमर्थः श्लोकारम्भः—**सर्वेन्द्रियगुणाभासं** सर्वाणि च तानि इन्द्रियाणि श्रोत्रादीनि बुद्धीन्द्रियकर्मेन्द्रियाख्यानि, अन्तःकरणे च बुद्धिमनसी—ज्ञेयोपाधित्वस्य तुल्यत्वात्—सर्वेन्द्रियग्रहणेन गृह्येते । अपि च, अन्तःकरणोपाधिद्वारेणैव श्रोत्रादीनामपि उपाधित्वम् इत्यतः अन्तःकरणबहिष्करणोपाधिभूतैः सर्वेन्द्रियगुणैः अध्यवसायसङ्कल्पश्रवणवचनादिभिः अवभासते इति सर्वेन्द्रियगुणाभासं, सर्वेन्द्रियव्यापारैः व्यापृतमिव तत् ज्ञेयम् इत्यर्थः, 'ध्यायतीव लेलायतीव' इति श्रुतेः । कस्मात् पुनः कारणात् न व्यापृतमे-

आ॥सर्वेन्द्रियाणि गुणांश्चाभासयतीति सर्वेन्द्रियगुणाभासम्।इन्द्रियवर्जितत्वाद्यर्थ उक्तः पुरस्तात् ॥ १४ ॥

ज॥अहं परा शक्तिर्यस्येति व्याख्यानेऽर्थासम्भवं कश्चिदन्यथा प्राह—'**ब्रह्मणः सर्वविशेषप्रतिषेधे**नैवात्र विजिज्ञापयिषितत्वात् शक्तिमत्त्वप्रतिपादनं विरुद्धम्'—इति;तदसत्,अत्र विशेषवत्त्वस्य दर्शनादिति भावेनाह—**सर्वे**ति । गुणांस्तद्विषयानाभासयति प्रत्याययति प्रत्येतीति वा । भासतेः पचाद्यच्।एवं 'सर्वतःपाणिपादं तत्' 'सर्वभृत्' 'गुणभोक्तृच' इत्यादिकमप्युदाहार्यम्।कथं तर्हि सर्वेन्द्रियविवर्जितं निर्गुणमचरमित्याद्युक्तमित्यत आह—**इन्द्रिये**ति । आदिशब्दात्परं शब्देत्यध्याहार्यम् । **पुरस्तात्** द्वितीये ॥ १४ ॥

रा॥सत्त्वादीनां गुणानां भोगसमर्थं च ॥ १४ ॥

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५

पृथिव्यादीनि भूतानि परित्यज्याशरीरो बहिर्वर्तते;तेषामन्तश्च वर्तते, *'जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा' इत्यादिश्रुतिसिद्धस्वच्छन्दवृत्तिषु: अचरं चरमेवच

ता॥भोगसमर्थमित्यत्रापि पूर्ववदभिप्रायः। औपाधिकं गुणभोक्तृत्वं, स्वभावतस्तदभावः,तत्सामर्थ्यमात्रं तु नित्यमित्यविरोधः ॥ १४ ॥

सशरीरत्वावस्थायां हि भूतान्तर्वृत्तिरिति मुक्तस्याशरीरत्वात्तद्बहिर्वृत्तिर्युक्ता; तदन्तर्वृत्तिस्तु कथमित्यत्राह—जक्षदिति । स्वच्छन्दवृत्तिषु तेषामन्तश्च वर्तत इत्यन्वयः । नचैतत्कर्मकृतं सशरीरत्वं 'स्वेन रूपेणाभिनिष्पद्यते'इत्याविर्भूतस्वरूपस्य तदुक्तेः, तस्यच विधूतपुण्यपापत्वात्.'स्वराड्भवति'इति वचनाच्च । तदेतदभिप्रेत्य—स्वच्छन्दवृत्तिष्वित्युक्तम् । 'स यदि पितृलोककामो भवति' 'इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्'इत्यादिकमादिशब्देन गृह्यते । स्वरूपतो निर्विकारस्यात्मनस्त्रिधाभावादिकं जक्षणादिकं पितृलोकादिकं च शरीरपरिग्रहमन्तरेण नोपपद्यते : शरीरं चास्य प्राकृतानामप्राकृतानां वा भूतानां संघात एवेति भूतान्तर्वर्तित्वं सिद्ध्यतीत्यभिप्रायः। अचरत्वचरत्वयोर्न चराचरान्तरत्वे शुद्धावस्थायामन्वयः: अतो 'बहिरन्तः'इत्युक्तसशरीरत्वाशरीरत्वे तत्र हेतू इति दर्शयति—

प्र-पा ॥ * छा. ८-१२-३ ॥

१. छा. ८-१२-२ ॥

२. छा. उप. ७-२५-२ ॥ 'सवा एष एवं पश्यन्नेवम्मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति' ॥—रतिः-स्रक्चन्दनादिजन्या प्रीतिः, क्रीडा-उद्यानादिजन्या, स्त्रीसम्भवा प्रीतिः-मिथुनम्, विभूतिजन्या प्रीतिः - आनन्दः, आत्मन्येव रतिर्यस्य स तथोक्तः-आत्मरतिः,-सर्वविधसुखानुभवो ह्यात्मसुखानुभवान्तर्गत इत्यर्थः । स्वराट्-स्वयमेव राजा, 'स्वराट् स्वतन्त्रो विज्ञेयः' इति कोशात् । अकर्मवश्य इत्यर्थः । विधिनिषेधकिङ्करो नभवति इति यावत् । 'अतएवचानन्याधिपतिः' इति सूत्रे 'अतएवच सत्यसङ्कल्पत्वादेव, अनन्याधिपतिः-अन्याधिपतित्वं-विधिनिषेधयोग्यत्वम्, विधिनिषेधयोग्यत्वे हि - प्रतिहतसङ्कल्पत्वं - भवेत् ; अतस्सत्यसङ्कल्पत्वश्रुत्यैवानन्याधिपतित्वं सिद्धम् । अत एव 'स स्वराड् भवति इत्युच्यते'इति भाषितम् । 'प्रत्यक्षोपदेशान्नेति चेत्' इति सूत्रे 'अकर्मप्रतिहतज्ञानो मुक्तः, विकारभूतलोकान् ब्रह्मविभूतिभूताननुभूय यथा कामं तृप्यतीत्यर्थः - इति 'तस्य सर्वेषु लोकेषु कामचारो भवति' इत्यस्य वाक्यस्यार्थः'इति भाषितम् ॥

३. शारी. ४-४-१५. ७२२.पुटे व्याख्यातम्॥

४. तै. भृगु. १०. अनु. ५ ॥

शं॥वेति गृह्यते इति ! अतः आह—सर्वेन्द्रियविवर्जितं सर्वकरणरहितमित्यर्थः।अतः न करणव्यापारैः व्यापृतं तत् ज्ञेयम् । यस्तु अयं मन्त्रः—'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिः सर्वेन्द्रियोपाधिगुणानुगुण्यभजनशक्तिमत् तत् ज्ञेयम् इत्येवं प्रदर्शनार्थः,न तु साक्षादेव जवनादिक्रियावत्त्वप्रदर्शनार्थः।'अन्धो मणिमविन्दत्' इत्यादिमन्त्रार्थवत् तस्य मन्त्रस्य अर्थः । यस्मात् सर्वकरणवर्जितं तत् ज्ञेयं तस्मात् असक्तं सर्वसंश्लेषवर्जितम् । यद्यपि एवं, तथापि सर्वभृच्च एव । सदा-

रा॥—स्वभावतोऽचरं चरं च देहित्वे, सूक्ष्मत्वात्तदविज्ञेयम् - एवं सर्वशक्तियुक्तं सर्वज्ञं तदात्मतत्त्वमस्मिन् क्षेत्रे वर्तमानमप्यतिसूक्ष्मत्वाद्देहात् पृथक्त्वेन संसारिभिरविज्ञेयम्, दूरस्थं चान्तिके च तत्—अमानित्वाद्युक्तगुणरहितानां विपरीतगुणानां पुंसां स्वदेहे वर्तमानमप्यतिदूरस्थम्, तथा अमानित्वादिगुणोपेतानां तदेवान्तिके वर्तते ॥ १५ ॥

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६

ता॥स्वभावतोऽचरं चरं च देहित्वइति।पादाद्यधीनसंचारतदभावाविह विवक्षितौ।योग्यानुपलम्भबाधपरिहारायोच्यते—सूक्ष्मत्वात्तदविज्ञेयमिति । अहमिति नित्यमुपलभ्यमानस्य अविज्ञेयत्वं केनाकारेणेत्यत्राह—एवं सर्वशक्तियुक्तं सर्वज्ञमिति । तच्छब्दपरामृष्टोऽयमर्थः । योग्यत्वशङ्कासूचनाय दूरत्वाद्यनुपलम्भकारणान्तराभावोपलक्षणतया—अस्मिन् क्षेत्रे वर्तमानमपीत्युक्तम् । पृथिव्याद्यपेक्षया सूक्ष्माणामपि वाय्वादीनां पृथगुपलम्भोऽस्तीति तद्युदासायोक्तम्—अतिसूक्ष्मत्वादिति। 'अहं जानामि' इत्यात्मोपलम्भे सत्यपि विविच्य ज्ञातुमशक्यत्वमविज्ञेयत्वमिति सोपसर्गनिषेधेन विवक्षितमिति दर्शयितुं—देहात्पृथक्त्वेनेत्युक्तम् । पृथक्त्वस्य सर्वदा सर्वैरनुपलम्भे शशशृङ्गादिवदप्रामाणिकत्वमेव स्यात्, योगाभ्यासविधानस्य च निरर्थकत्वं स्यादित्यत्रोक्तं—संसारिभिरिति । योगिनामपि मुक्तवदविच्छिन्नविशदतमप्रत्ययाभावात्—संसारिभिरिति सामान्येनोक्तम् । यद्वा योगविरहिता इह संसारिशब्देन विवक्षिताः, योगिनामासन्नमोक्षत्वेन मुक्तप्रायत्वात् । 'दूरस्थं चान्तिके च तत्' इत्यनेन न व्याप्तिर्विवक्षिता, तस्याः 'सर्वमावृत्य तिष्ठति' इति प्रागेवोक्तत्वात्; अतोऽत्र सूक्ष्मत्वात्संसारिभिरविज्ञेयस्य कथं तैरेव विज्ञातव्यत्वविधिरिति शङ्काव्युदासायाधिकारिभेदेन दुर्ग्रहत्वसुग्रहत्वपरत्वमाह—अमानित्वादीति ॥ १५ ॥

---

शं॥स्पदं हि सर्वं, सर्वत्र सद्बुद्ध्यनुगमात् । न हि मृगतृष्णिकादयोऽपि निरास्पदाः भवन्ति।अतः सर्वभृत् सर्वं बिभर्ति इति । स्यात् इदं च अन्यत् ज्ञेयस्य सत्त्वाधिगमद्वारं—निर्गुणं सत्त्वरजस्तमांसि गुणाः तैः वर्जितमपि सत् गुणभोक्तृ च गुणानां सत्त्वरजस्तमसां शब्दादिद्वारेण सुखदुःखमोहाकारपरिणतानां भोक्तृ च उपलब्धृ तत् ज्ञेयम् इत्यर्थः ॥ १४ ॥

किंच—बहिः त्वक्पर्यन्तं देहम् आत्मत्वेन अविद्याकल्पितम् अपेक्ष्य तमेव अवधिं कृत्वा बहिः उच्यते।तथा प्रत्यगात्मानम् अपेक्ष्य देहमेव अवधिं कृत्वा अन्तः उच्यते।'बहिरन्तश्च' इत्युक्ते मध्ये अभावे प्राप्ते इदम् उच्यते—अचरं चरमेव च, यत् चराचरं देहाभासमपि, तदेव ज्ञेयं, यथा रज्जुसर्पाभासः । यदि अचरं चरमेवच स्यात् व्यवहारविषयं सर्वं ज्ञेयम्, किमर्थम् 'इदम्' इति सर्वैः न विज्ञेयम् इति ? उच्यते—सत्यं सर्वाभासं; तथाऽपि व्योमवत् सूक्ष्मम् । अतः सूक्ष्मत्वात् स्वेन रूपेण तत् ज्ञेयमपि अविज्ञेयम् अविदुषाम् । विदुषां तु—'आत्मैवेदं सर्वम्' 'ब्रह्मैवेदं सर्वम्' इत्यादिप्रमाणतः नित्यविज्ञातम् । अविज्ञाततया दूरस्थं, वर्षसहस्रकोट्यापि अविदुषाम् अप्राप्यत्वात्। अन्तिके च तत्, आत्मत्वात् विदुषाम् ॥ १५ ॥

**रा॥**देवमनुष्यादिभूतेषु सर्वत्र स्थितमात्मवस्तु वेदितृत्वैकाकारतया अविभक्तम्; अविदुषां देवाद्याकारेण 'अयं देवो मनुष्यः' इति विभक्तमिव च स्थितम्; 'देवोऽहं मनुष्योऽहम्' इति देहसामानाधिकरण्येनानुसन्धीयमानमपि वेदितृत्वेन देहादर्थान्तरभूतं ज्ञातुं शक्यमिति आदावुक्तमेव *"एतद्यो वेत्ति" इति; इदानीं प्रकारान्तरैश्च ज्ञातुं शक्यमित्याह—भूतभर्तृचेति। भूतानां पृथिव्यादीनां देहरूपेण संहतानां यद्भर्तृ तद्भर्तव्येभ्यो भूतेभ्योऽर्थान्तरं ज्ञेयम्, अर्थान्तरमिति ज्ञातुं शक्यमित्यर्थः; तथा ग्रसिष्णु - अन्नादीनां भौतिकानां ग्रसिष्णु, ग्रस्यमानेभ्यो भूतेभ्यो ग्रसितृत्वेनार्थान्तरभूतमिति ज्ञातुं शक्यम्, प्रभविष्णु च—प्रभवहेतुश्च, ग्रस्तानामन्नादीनामाकारान्तरेण परिणतानां प्रभवहेतुः, तेभ्योऽर्थान्तरमिति ज्ञातुं शक्यमित्यर्थः; मृतशरीरे ग्रसनप्रभवादीनामदर्शनान्न भूतसंघातरूपं क्षेत्रं ग्रसनप्रभवभरणहेतुरिति निश्चीयते ॥ १६ ॥

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७**

**ता॥**स्वरूपभेदवत्स्वविग्रहक्षेत्रादिष्वविभक्तशब्दप्रयोगात् '[2]पण्डिताःसमदर्शिनः' इति प्रागुक्तं साम्यमिहापि विवक्षितमित्याह—**देवमनुष्यादीति** । **अविभक्तं**-स्वरूपेण देवत्वादिविभागरहितमित्यर्थः । 'विभक्तमिव' इतीवशब्देन भ्रान्तोपलम्भविषयाकारसूचनमाह—**अविदुषामिति** । एवं शुद्ध्यवस्थोक्ता, तत्र 'भूतभर्तृ' इत्यादिना जगद्व्यापारभ्रमव्युदासाय प्रकरणस्य भोक्तृव्यतिरेकपरतामेव वदन् पूर्वोक्तपुनरुक्तिं च परिहरति—**देवोऽहमित्यादिना** ग्रन्थद्वयेन। अहंत्वानहंत्वज्ञातृत्वाज्ञत्वादिरूपो भेदः प्रागुक्तः; अत्र त्वाधाराधेयभावभोक्तृत्वभोग्यत्वविकार्यत्वविकारहेतुत्वैर्विवेकः क्रियत इत्यर्थः। अत्र जीवभर्तव्यविषयो भूतशब्दोऽचिन्मात्रपरः, तत्रापि प्रसिद्ध्यनुरोधेन महाभूतविषयत्वेऽपि क्षेत्रप्रकरणात्तादृशपरिणामवद्भूतविषय इत्याह—**भूतानामिति**। ज्ञेयशब्दश्च 'ज्ञेयं यत्तत्प्रवक्ष्यामि' इत्युपक्रान्तत्वेऽपि पुनरिहोच्यमानत्वात्तदतिरिक्तार्थतया व्याख्यातः । भर्तृत्वभर्तव्यत्वफलितमाह—**अर्थान्तरमिति** । **प्रभवहेतुरिति**—देहव्यतिरिक्तत्वोपपादने तात्पर्यादयमेवार्थ उचित इति भावः । प्रभवोऽत्र रेतोगर्भादिरूपेण परिणामः । **आकारान्तरेण**—रसमलधात्वादिरूपेणेत्यर्थः । ननु शरीरेणैव ग्रासादिकं क्रियमाणं दृश्यते, न च कार्यकरणसंघातमन्तरेण निरवयवस्य ग्रसनादिसंभवः, तत्कथमात्मधर्मत्वेन व्यपदिश्यत इति शङ्कायामुक्तमर्थं व्यतिरेकेण द्रढयति—**मृतशरीरइति** । क्षेत्रं शरीरत्ववेषेण ग्रसनादिकारणम्? उत भूतसंघातमात्रेण; आद्ये शरीरत्वस्यात्मप्रतियोगिकत्वादात्मसापेक्षत्वं ग्रसनादेस्सिद्धम्; द्वितीये मृतशरीरादिष्वदर्शनादयुक्तिः । यद्यपि मृतशरीरेऽपि केचिद्विशेषा दृश्यन्ते; तथापि जीवज्ञानपूर्वकग्रसनभरणाद्यभावान्न ते जीवापेक्षाः। ईश्वरापेक्षा तु सार्वत्रिकीति न तत्र विशेष इति भावः। अत्र भरणग्रसनादिकं रज्ज्वादिषु सर्पादेरिवेति वदन्तश्श्रुतहानाश्रुतकल्पनादिभिर्निरस्ताः ॥ १६ ॥

**प्र-पा ॥** * गी. १३-१ ॥ | १. गी. ५-१८ ॥

**शं॥**किञ्च—अविभक्तं च प्रतिदेहं व्योमवत् एकम् । भूतेषु सर्वप्राणिषु विभक्तमिव च स्थितं, देहेष्वेव विभाव्यमानत्वात् । भूतभर्तृ च—भूतानि बिभर्तीति तत् ज्ञेयं भूतभर्तृ च स्थितिकाले । प्रलयकाले च ग्रसिष्णु ग्रसनशीलम् । उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलं, यथा रज्ज्वादिः सर्पादेः मिथ्याकल्पितस्य ॥ १६ ॥

रा॥ज्योतिषां-दीपादित्यमणिप्रभृतीनामपि तदेव ज्योतिः-प्रकाशकम्, दीपादित्यादीनामप्यात्मप्रभारूपं ज्ञानमेव प्रकाशकम्, दीपादयस्तु विषयेन्द्रियसन्निकर्षविरोधिसन्तमसनिरसनमात्रं कुर्वते ; तावन्मात्रेण तेषां प्रकाशकत्वम्; तमसः परमुच्यते—तमश्शब्दस्सूक्ष्मावस्थप्रकृतिवचनः, प्रकृतेः परमुच्यत इत्यर्थः; अतो ज्ञानं ज्ञेयं ज्ञानैकाकारमिति ज्ञेयम्, तच्च ज्ञानगम्यम् अमानित्वादिभिर्ज्ञानसाधनैरुक्तैः प्राप्यमित्यर्थः ; हृदि सर्वस्य विष्ठितं—सर्वस्य मनुष्यादेः हृदि विशेषेणावस्थितं सन्निहितम् ॥ १७ ॥

ता॥ननु स्वरूपमात्रप्रकाशरूपस्य आत्मस्वरूपस्य कथं मण्यादिप्रकाशकत्वमित्यत्राह—**दीपादित्यादीनामपीति** । दीपादित्यादीनां यथा विषयसंबन्धिप्रभाद्वारा प्रकाशकत्वं, न स्वरूपतः, तद्वदत्रापि प्रभास्थानीयेन ज्ञानाख्यधर्मेण प्रकाशकत्वमिति भावः। अन्यप्रकाशकानामपीतिअपिशब्दार्थः । प्रकाश्यभूतघटादिवत्तत्प्रकाशकज्ञानाश्रयभूते प्रत्यगात्मनीति भावः । विषयेन्द्रियसन्निकर्षशब्देनात्र सामग्रीमध्यपातिसन्निकर्षोऽभिप्रेतः ; तन्मूलप्रकाशो वा लक्षितः, संतमसस्य कुड्यादिवदिन्द्रियसन्निकर्षविरोधित्वाभावात् ; अन्यथा संतमसवर्तिनः पुरुषस्य संतमसान्तरितप्रकाशमध्यवर्तिनां पदार्थानां कुड्यान्तरितपदार्थवदप्रकाशप्रसङ्गात् । एतेन दीपादेश्चाक्षुषपदार्थमात्रप्रतिनियततया ज्ञानवन्न सर्वव्यापकं प्रकाशकत्वमिति सूचितम्। **तावन्मात्रेण**—न तु साक्षात्प्रकाशजनकत्वेनापीत्यर्थः।ज्योतिस्सन्निकर्षात्प्रसिद्धिप्राचुर्याच्चात्र तमश्शब्दस्य तिमिरविषयत्वधीव्युदासायाह—**तमश्शब्द** इति । ज्योतिषामपि प्रकाशकतया कैमुत्यसिद्धस्य तिमिरात्परत्वस्याभिधाने प्रयोजनाभावात्प्रकृतेः परत्वस्य चावश्यवक्तव्यत्वात्तमश्शब्दस्य च 'यस्य तमश्शरीरं' 'तम आसीत्तमसा गूढमग्रे प्रकेतं' 'यदा तमस्तत्' 'तम एकीभवति' 'आसीदिदं तमोभूतम्' इत्यादिषु मूलप्रकृतिविषयतया श्रौतस्मार्तप्रयोगप्राचुर्याच्चेति भावः। परम्- अन्यदित्यर्थः ; भोक्तृतया प्रधानभूतमिति वा।प्रागपि हि ते परावरतया प्रकृती विभक्ते।**उच्यत** इति-'निर्गुणः प्रकृतेः परः' इत्यादिष्विति शेषः।एतेन जडवैलक्षण्यं विवक्षितमित्यभिप्रायेणाह—**अत** इति । पूर्ववद्वैधर्म्यानुसंधानशक्यतायां ज्ञेयशब्दस्य तात्पर्यम् ; अन्यथा पौनरुक्त्यादित्यभिप्रायेणाह—**ज्ञानैकाकारमिति ज्ञेयमिति**। 'ज्ञानगम्यम्' इत्यत्र सर्वसाधारणज्ञानविषयत्वमात्राभिधाने प्रयोजनाभावात् 'ज्ञेयम्' इत्यनेन पौनरुक्त्याद्गम्यशब्दस्य प्राप्यपर्यायत्वप्रसिद्धेश्च प्रकृतसंगतं विवक्षितमाह—**अमानित्वादिभिरिति**। 'एतज्ज्ञानम्' इतिवदत्रापि करणव्युत्पत्तिं व्यनक्ति—**ज्ञानसाधनैरुक्तैरिति**। **मनुष्यादेरिति** । पिण्डस्येति शेषः । भोक्तृत्वादिरूपेणावस्थानं विशेषेणावस्थानम् । यद्वा हृदि स्वरूपेणावस्थानम् ; अवयवान्तरेषु तु स्वधर्मभूतज्ञानेनेति विशेषः। स्थितिशब्दस्यात्र मुख्यार्थायोगात्सन्निधिमात्रपरत्वमुक्तम् ; 'सर्वस्य गृहेऽप्ययमेव व्रीहिः' इतिवज्जात्यैक्यविवक्षया सर्वस्य हृदि स्थितिनिर्देशः ॥

प्र-पा ॥ १. बृ. ५-७-१३ ॥ २. अष्ट. २. प्र. ८. अनु. ९-४ ॥ ३. श्वे. ४-१८ ॥ ४. सुबा. २. खं ॥ ५. मनु. १ ६ ॥ ६ ॥

शं॥किञ्च—सर्वत्र विद्यमानमपि सत् न उपलभ्यते चेत्, ज्ञेयं तमः तर्हि ? न । किं तर्हि ?—ज्योतिषाम् आदित्यादीनाम् अपि तत् ज्ञेयं ज्योतिः।आत्मचैतन्यज्योतिषा इद्धानि हि दीप्यन्ते, 'येन सूर्यस्तपति तेजसेद्धः' 'तस्य भासा सर्वमिदं विभाति' इत्यादिमन्त्रेभ्यः, स्मृतेश्च इहैव—'यदादित्यगतं तेजः' इत्यादेः । तमसः अज्ञानात् परम् असंस्पृष्टम् उच्यते।ज्ञानादेः दुःखसम्पादनबुद्ध्या प्राप्तावसादस्य उत्तम्भनार्थम् आह—ज्ञानम् अमानित्वादि; ज्ञेयं 'ज्ञेयं यत् तत् प्रवक्ष्यामि' इत्यादिना उक्तम्; ज्ञानगम्यं, ज्ञेयमेव ज्ञातं

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८

रा॥एवं 'महाभूतान्यहङ्कारः' इत्यादिना 'सङ्घातश्चेतनाधृतिः' इत्यन्तेन क्षेत्रतत्त्वं समासेनोक्तम्; 'अमानित्वम्' इत्यादिना 'तत्त्वज्ञानार्थचिन्तनम्' इत्यन्तेन ज्ञातव्यस्यात्मतत्त्वस्य ज्ञानसाधनमुक्तम्; 'अनादि मत्परम्' इत्यादिना 'हृदि सर्वस्य विष्ठितम्' इत्यन्तेन ज्ञेयस्य क्षेत्रज्ञस्य याथात्म्यं च सङ्क्षेपेणोक्तम्; मद्भक्त एतत् क्षेत्रयाथात्म्यं, क्षेत्राद्विविक्तात्मस्वरूपप्राप्त्युपाययाथात्म्यं क्षेत्रज्ञयाथात्म्यं च विज्ञाय,मद्भावायोपपद्यते-मम यो भावः-स्वभावः असंसारित्वम्, असंसारित्वप्राप्तये उपपन्नो भवतीत्यर्थः ॥ १८ ॥

अथात्यन्तविविक्तस्वभावयोः प्रकृत्यात्मनोस्संसर्गस्यानादित्वं संसृष्टयोर्द्वयोः कार्यभेदस्संसर्गहेतुश्चोच्यते—

ता॥ उपसंहरन्नुक्तयाथात्म्यज्ञानस्य फलं चाह—'इति'इतिश्लोकेन । प्रकृतपरामर्शिन एतच्छब्दस्य विशेषकाभावात्प्रकृतार्थत्रयविषयत्वमाह—क्षेत्रयाथात्म्यमित्यादिना । 'मद्भावाय'इत्यत्र साम्यश्रुत्यादिविरुद्धतादात्म्यभ्रमव्युदासायाह —मम यो भावः स्वभावइति । नित्यसिद्धज्ञानत्वादिस्वभावव्यवच्छेदायाह—असंसारित्वमिति । 'उपपद्यते' इत्यस्य ज्ञानजन्ययोग्यतायां तात्पर्यमुपपन्नशब्देन दर्शितम् ॥ १८ ॥

अथ 'बन्धहेतुः'इत्यनेन संगृहीतं'प्रकृतिं पुरुषम्'इत्यारभ्य विवेकानुसंधानात्पूर्वस्यार्थं विविनक्ति—अथेति । संसर्गहेतुश्चेति प्रवाहानादेस्संसर्गस्य निमित्तमित्यर्थः । 'उभावनादी'इत्यत्र प्रकृतिं

शं॥सत् ज्ञानफलमिति ज्ञानगम्यम् उच्यते; ज्ञायमानं तु तत् ज्ञेयम् । तत् एतत् त्रयमपि हृदि बुद्धौ सर्वस्य प्राणिजातस्य विष्ठितं विशेषेण स्थितम् । तत्रैव हि एतत् त्रयं विभाव्यते ॥ १७ ॥

यथोक्तार्थोपसंहारार्थः अयं श्लोकः आरभ्यते—इति एवं क्षेत्रं महाभूतादि धृत्यन्तं, तथा ज्ञानम् अमानित्वादि तत्त्वज्ञानार्थदर्शनपर्यन्तं, ज्ञेयं च 'ज्ञेयं यत् तत्' इत्यादि 'तमसः परमुच्यते' इत्येवमन्तम्, उक्तं समासतः संक्षेपतः । एतावान् हि सर्वः वेदार्थः गीतार्थश्च उपसंहृत्य उक्तः । अस्मिन् सम्यग्दर्शने कः अधिक्रियते इति? उच्यते—मद्भक्तः मयि परमेश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावः, यत् पश्यति शृणोति स्पृशति वा 'सर्वमेव भगवान् वासुदेवः' इत्येवंग्रहाविष्टबुद्धिः मद्भक्तः सन्, एतत् यथोक्तं सम्यग्दर्शनं विज्ञाय, मद्भावाय मम भावः मद्भावः तस्मै मद्भावाय उपपद्यते, मोक्षं गच्छति ॥ १८ ॥

आ॥विकारान्तर्भावाज्ज्ञानसाधनं प्रथमत उक्तम् । बहुत्वात्साधनात्युपयोगात्प्रभावः॥

ज॥ननु ब्रह्मणि प्रतिपादिते केन साधनेनेदं बुद्ध्यारूढं भवेदित्याकाङ्क्षायां साधनं पश्चाद्वक्तव्यम्, तत्कुतः प्रथमत उक्तमित्यत आह—विकारेति । विकारेष्वन्तर्भावं ज्ञापयितुं तदनन्तरमुपोद्घातप्रक्रिययोक्तमिति भावः।उद्देशक्रमानुसारेण'यतश्च यत्'इति प्रथममनुक्त्वा 'स च यो यत्प्रभावश्च' इत्येतत्कुत उक्तमित्यत आह—बहुत्वादिति।सूचीकटाहनिर्माणादौ बहुत्वस्य प्राथम्यव्यभिचाराद्धेत्वन्तरोक्तिः।अलौकिकस्य प्रभावस्य बुद्ध्यारोहे हि साधनानामत्युपयोगः,नतु तावान् लौकिकस्य प्रेरकत्वस्यानुभवारोह इति ज्ञापयितुं ज्ञानसाधनानन्तरमेव प्रभाव उक्तः, तत्प्रसङ्गेन चेति भावः ॥ १८ ॥

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥** १९

रा॥प्रकृतिपुरुषावुभावन्योन्यसंसृष्टावनादी इति विद्धि ; बन्धहेतुभूतान् विकारान्— इच्छाद्वेषादीन्, अमानित्वादिकांश्च गुणान् मोक्षहेतुभूतान् प्रकृतिसंभवान् विद्धि; पुरुषेण

ता॥'च'इतीतरेतरयोगपरचकारेण लब्धं विशेषं दर्शयति—**प्रकृतिपुरुषावुभावन्योन्यसंसृष्टाविति**। तदपेक्षया द्विवचनान्तप्रयोग उपपन्नः । **प्रकृतिपुरुषावि**त्यत्र 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति पुल्लिङ्गत्वम्।तद्विशेषणत्वात्'उभावनादी'इत्यनयोरपि तल्लिङ्गतैव। 'इच्छाद्वेष'इत्यादिना'अमानित्वम्'इत्यादिना च निर्दिष्टा यथाक्रमं विकारगुणशब्दाभ्याम् अनूद्यन्त इति दर्शयति —**बन्धहेतुभूतानिति**। 'तत्क्षेत्रं...यद्विकारि' इति प्रकरणोपक्रमे विकारशब्दः क्षेत्रकार्यमात्रपरः: तत्प्रत्यभिज्ञानाच्चात्रापि विकारशब्दस्तद्विषयः । अतः प्रकरणबलान्न महदादिविकारपरत्वम्; तत्साहचर्याच्च गुणशब्दस्यापि प्राकरणिकार्थविषयत्वौचित्यात्सत्त्वादिगुणविषयत्वमयुक्तमिति भावः।'विकारांश्च गुणांश्च' इति भेदोक्तिनिदानज्ञापनाय बन्धमोक्षहेतुत्वेन वचनम्। हेयोपादेयगुणवर्गद्वयोपदेशो हानोपादानार्थतया सप्रयोजनः तस्य प्रकृतिसंभवत्वोपदेशस्तु किमर्थ इति शङ्कायामुच्यमानतया ज्ञातव्यार्थे 'विद्धि' इत्यधिकोक्त्यभिप्रेतमाह—**पुरुषेणेति** । प्रकृतेरेवाकारभेदेन हेयत्वोपादेयत्वज्ञापनार्थस्तत्संभवत्वोपदेश इति भावः ।

प्र-पा॥ १. अष्टा-२-४-२६. एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धपिप्पली ॥ २. गी. १३-६ ॥ ३. गी. १३-७ ॥ ४. गी. १३-३ ॥

शं॥तत्र सप्तमे अध्याये ईश्वरस्य द्वे प्रकृती उपन्यस्ते परापरे क्षेत्रक्षेत्रज्ञलक्षणे ; 'एतद्योनीनि भूतानि' इति च उक्तम् । क्षेत्रक्षेत्रज्ञप्रकृतिद्वययोनित्वं कथं भूतानाम् इति ? अयम् अर्थः अधुना उच्यते—प्रकृतिं पुरुषं चैव ईश्वरस्य प्रकृती, तौ प्रकृतिपुरुषौ उभावपि अनादी विद्धि, न विद्यते आदिः ययोः तौ अनादी । नित्यत्वात् ईश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम् । प्रकृतिद्वयवत्त्वमेव हि ईश्वरस्य ईश्वरत्वं , याभ्यां प्रकृतिभ्याम् ईश्वरः जगदुत्पत्तिस्थितिप्रलयहेतुः। ते अनादी सत्यौ संसारस्य कारणम् ॥

'न आदी अनादी' इति तत्पुरुषसमासं केचित् वर्णयन्ति । तेन किल ईश्वरस्य कारणत्वं सिध्यति । यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्यातां, तत्कृतमेव जगत्, न

आ॥'यतश्च यत्'इति वक्तुं प्रकृतिविकारपुरुषान् संक्षिप्याह। गुणाः सत्त्वादयः ।

ज॥ननु 'प्रकृतिं पुरुषं चैव विद्धि'इत्यादिकमप्रतिज्ञातं किमित्युच्यते, मैवम्,'यादृक्च'इति प्रतिज्ञातस्य सप्रकारस्य क्षेत्रस्य कथनात् तत्प्रतिज्ञाक्रमेण प्रागेव कुतो नोक्तमित्यत आह—**यतश्चेति** । यतश्च यदिति प्रतिज्ञातं प्रेरकस्वरूपं तावत्प्रभावानन्तरं वक्तव्यं प्राप्तम्; तत्र प्रेरकस्य स्वरूपनिरूपणं प्रेर्यज्ञानमपेक्षते , प्रेर्यं च सप्रकारं क्षेत्रम् । प्रेरकस्वरूपं वक्तुम् अनेन प्रेरणीयं सप्रकारं क्षेत्रमुच्यते । तस्य प्रागपि वचने गौरवं स्यादिति भावः । तर्हि प्रकृतीत्यादि कथमुच्यते ? ईश्वरातिरिक्तः सर्वोऽपि चेतनाचेतनवर्गः क्षेत्रमित्युच्यते । तत्र प्रकृतिशब्देन 'महाभूतानि'इत्यादिनोक्तानि चतुर्विंशतितत्त्वानि गृह्यन्ते। विकारशब्देनेच्छाद्युपलक्षिताः क्षेत्रान्तर्भूता अपि गुणत्रयाद्याः सर्वे विकारा विवक्षाविशेषवशेन पृथगुपात्ताः;पुरुषशब्देन जीव इति। 'यावत्संजायते'इत्यादिना पुनर्वक्ष्यमाणत्वात्पुनरुक्तिदोषं परिहर्तुं—**संक्षिप्येत्युक्तम्**।**आह**-सप्रकारान्निरूपयति।गुणाः सुखदुःखमोहा इति कश्चित्। कार्यकारणलक्षणा इत्यन्वयः। तदुभयं निराकर्तुं व्याचष्टे—**गुणा**इति।ननु सत्त्वरजस्तमसामपि प्रकृतिविकारत्वात्'विकारांश्च गुणांश्च'

रा॥संसृष्टेयमनादिकालप्रवृत्ता क्षेत्राकारपरिणता प्रकृतिः स्वविकारैरिच्छाद्वेषादिभिः पुरुषस्य बन्धहेतुर्भवति; सैवामानित्वादिभिस्स्वविकारैः पुरुषस्यापवर्गहेतुर्भवतीत्यर्थः ॥

*कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २०

कार्यं-शरीरम्, कारणानि-ज्ञानकर्मात्मकानि समनस्कानीन्द्रियाणि, तेषां क्रियाका

ता॥स्वविकारैरित्यमानित्वादीनां विकारत्वभाषणं 'प्रकृतिसंभवान्' इत्युक्तप्रकृतिकारणत्वाविशेषाद्गोबलीवर्दनयसूचनार्थम् ॥ १९ ॥

अथान्योन्यसंसृष्टयोः प्रकृतिपुरुषयोस्संसर्गविशेषनिबन्धनो व्यापारभेद उच्यते—'कार्यकारण' इति श्लोकेन। कार्यं शरीरमिति-प्रकरणात् कारणशब्दस्य समभिव्याहाराच्च अत्र कार्यशब्दो भोगायतनाख्यकार्यविशेषपर इति भावः।'इन्द्रियाणि दशैकञ्च'इति इन्द्रियादिप्रकृतविषयोऽत्र कारणशब्द इत्याह—ज्ञानकर्मात्मकानीति । एतेन 'कार्यं भूततन्मात्ररूपेण दशविधम्; कारणं बुद्ध्यहंकाररूपेण त्रयोदशविधम्; तेषां स्वरूपोत्पत्तौ प्रतिक्षणपरिणामे च हेतुर्मूलप्रकृतिः' इत्यादिव्याख्यानान्तराणि निरस्तानि। 'कार्यकरणकर्तृत्वे' इति परोक्तं पाठान्तरमप्रसिद्धेरनादृतम् । कर्तृशब्दोऽत्र न प्रयत्नाद्याश्रयत्वपरः, अचेतने तदसंभवात्; अतो यथास्वं व्यापाराश्रयत्वं विवक्षितमित्याह—तेषां क्रियाकारित्वइति। य-

प्र-पा॥ *कार्यकरण. इति शाङ्करः पाठः॥ १. गी. १३-५ ॥

शं॥ईश्वरस्य जगतः कर्तृत्वम् इति ॥

तत् असत्; प्राक् प्रकृतिपुरुषयोः उत्पत्तेः ईशितव्याभावात् ईश्वरस्य अनीश्वरत्वप्रसङ्गात्, संसारस्य निर्निमित्तत्वे अनिर्मोक्षप्रसङ्गात्,शास्त्रानर्थक्यप्रसङ्गात्, बन्धमोक्षाभावप्रसङ्गाच्च । नित्यत्वे पुनः ईश्वरप्रकृत्योः सर्वम् एतत् उपपन्नं भवेत् । कथम्?—

विकारांश्च बुद्ध्यादिदेहपर्यन्तान् गुणांश्च सुखदुःखमोहप्रत्ययाकारपरिणतान् वक्ष्यमाणान् विद्धि जानीहि प्रकृतिसम्भवान्, प्रकृतिः ईश्वरस्य विकारकारणशक्तिः त्रिगुणात्मिका माया, सा सम्भवो येषां विकाराणां गुणानां च तान् विकारान् गुणांश्च विद्धि जानीहि प्रकृतिसम्भवान् प्रकृतिपरिणतान् ॥ १९ ॥

के पुनः ते विकाराः गुणाश्च प्रकृतिसम्भवाः इति? आह—कार्यकरणकर्तृत्वे—कार्यं शरीरं, करणानि तत्स्थानि त्रयोदश। देहारम्भकाणि भूतानि पञ्च। विषयाश्च प्रकृ-

आ॥तेषामत्यल्पो विशेषो लयात्सर्गे इति विकाराः पृथगुक्ताः । 'कार्याकार्यगुणास्तिस्रो यतः स्वल्पोद्भवो जनौ' इति माधुच्छन्दसशाखायाम् ॥ १९ ॥

कार्यं शरीरं 'शरीरं कार्यमुच्यते' इत्यभिधानम्।कारणानीन्द्रियाणि।भोगोऽनुभवः।

ज॥इति पृथगुक्तिः किमर्थेत्यत आह—तेषामिति। इति ज्ञापयितुमिति शेषः । विकाराः पृथगुक्ता इति विकाराश्च गुणाश्च पृथगुक्ता इत्यर्थः। कार्याश्च तेऽकार्याश्च।तिस्रस्त्रयः।अनेन सुखाद्यङ्गीकारे विकारेभ्यः पृथग्ग्रहणमयुक्तमित्यपि सूचितम् ॥ १९ ॥

कारणानामपि कार्यत्वात् पृथगुक्तिर्व्यर्थेत्यतो रूढिमाश्रित्य कार्यकारणशब्दौ व्याख्याति—कार्यमिति । 'भोक्तृत्वे' इत्यत्र प्रकृत्यर्थो भोगोऽभ्यवहारादिः सुखादिविषयो न संभवति, अत आह—भोगइति । स्वीयतया साक्षात्कार इत्यर्थः । भोगः प्रकृतेरेव, न पुरुषस्य, अतः 'पुरुषः सुखदुःखानां

रा॥रित्वे पुरुषाधिष्ठिता प्रकृतिरेव हेतुः पुरुषाधिष्ठितक्षेत्राकारपरिणतप्रकृत्याश्रया भोगसाधनभूताः क्रिया इत्यर्थः पुरुषस्याधिष्ठातृत्वमेव; तदपेक्षया *'कर्ता शास्त्रार्थवत्त्वात्' इत्यादिकमुक्तम्; शरीराधिष्ठानप्रयत्नहेतुत्वमेव हि पुरुषस्य कर्तृत्वम्; प्रकृतिसंसृष्टः

ता॥यद्यप्यबुद्धिपूर्वेषु केषुचिन्मनश्श्रोत्रादिव्यापारेषु पुरुषेच्छाधीनत्वं नास्ति, तथापि तेषां पुरुषभोगार्थत्वात् भोक्तृत्वदशापन्नपुरुषसन्निधानरूपमधिष्ठानमपेक्षितम्; बाहुल्येनच प्रयत्नाधीनत्वमस्तीत्यभिप्रायेणाह—**पुरुषाधिष्ठितेति**। विभज्य व्यापारनिर्देशात्—**प्रकृतिरेवे**त्यवधारणलाभः। ननु पुरुषाधिष्ठिता प्रकृतिरित्ययुक्तं, प्रलयदशायां करणकलेबरविधुरस्य संसारिणः स्वेच्छया प्रकृत्यधिष्ठानासंभवादित्यत्राह—**पुरुषाधिष्ठितक्षेत्राकारपरिणतेति**। भोगतत्साधनयोराश्रयत्वलक्षणं हेतुत्वमिह विविच्यत इत्यभिप्रायेण प्रकृत्याश्रयत्वादिकथनम्। प्रकृतेः कर्तृत्वे 'कर्ता शास्त्रार्थवत्त्वात्' इत्यादिभिस्सूत्रैर्विरोधस्स्यादित्यत्राह—**पुरुषस्याधिष्ठातृत्वमेवे**ति। यदि पुरुषस्याधिष्ठातृत्वमात्रं, तदा साक्षात्कर्तृत्वं प्रकृतेरेवेति पुरुषस्य कर्तृत्वमौपचारिकं स्यादित्यत्राह—**शरीराधिष्ठाने**ति। अयमाभिप्रायः—नहि प्रयत्नाधीनपरिस्पन्दाश्रयत्वलक्षणं कर्तृत्वं पुरुषस्य सूत्र्यते; तत्र शास्त्रार्थवत्त्वादिहेतूनामन्यथासिद्धेः; नच शरीरादिप्रेरकप्रयत्नाश्रयत्वे कर्तृशब्दस्यौपचारिकता, कृतिप्रयत्नयोः पर्यायत्वात्कृत्याश्रयत्वरूपत्वाच्च कर्तृत्वस्य। ततश्चान्यत्रैव कर्तृत्वमौपचारिकमिति फलितम्। यदि पुनर्यथास्वं व्यापाराश्रयत्वमेव सर्वेषां कर्तृत्वमित्युच्यते; तथापि पुरुषस्य कर्तृत्वं मुख्यमेव। ननु 'पुरुषस्सुखदुःखानां भोक्ता' इत्ययुक्तम्, शुद्धस्य पुरुषस्य प्रियाप्रियविधुरत्वश्रुतेः। यद्यपि मोक्षे विलक्षणं सुखमनुभूयते, तथापि दुःखप्रसङ्गस्तु नास्त्येवेत्यत्राह—**प्रकृतिसंसृष्ट**इति। 'नह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इत्यपि श्रूयत इति

प्र-पा॥ *१. शारी. २-३-३३॥ २ छा. ८-१२-१॥

शं॥तिसम्भवाः विकाराः पूर्वोक्ताः इह कार्यग्रहणेन गृह्यन्ते। गुणाश्च प्रकृतिसम्भवाः सुखदुःखमोहात्मकाः करणाश्रयत्वात् करणग्रहणेन गृह्यन्ते। तेषां कार्यकरणानां कर्तृत्वम् उत्पादकत्वं यत् तत् कार्यकरणकर्तृत्वं, तस्मिन् कार्यकरणकर्तृत्वे हेतुः कारणम् आरम्भकत्वेन प्रकृतिः उच्यते। एवं कार्यकरणकर्तृत्वेन संसारस्य कारणं प्रकृतिः। 'कार्यकारणकर्तृत्वे' इत्यस्मिन्नपि पाठे—कार्यं, यत् यस्य परिणामः तत् तस्य कार्यं विकारः, विकारि कारणं, तयोः विकारविकारिणोः कार्यकारणयोः कर्तृत्वे—इति तान्येव कार्यकारणानि उच्यन्ते। अथवा—षोडश विकाराः कार्यं, सप्त प्रकृतिविकृतयः कारणं, तेषां कर्तृत्वे हेतुः प्रकृतिः उच्यते, आरम्भकत्वेनैव। पुरुषश्च संसारस्य कारणं यथा स्यात् तत् उच्यते—पुरुषः जीवः क्षेत्रज्ञः भोक्ता इति पर्यायः, सुखदुःखानां भोग्यानां भोक्तृत्वे उपलब्धृत्वे हेतुः उच्यते॥

कथं पुनः अनेन कार्यकारणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च प्रकृतिपुरुषयोः संसारकारणत्वम् उच्यते इति? अत्र उच्यते—कार्यकरणसुखदुःखरूपेण हेतुफलात्मना प्रकृतेः परिणामाभावे, पुरुषस्य च चेतनस्य असति तदुपलब्धृत्वे, कुतः संसारः स्यात्? यदा पुनः कार्यकरणसुखदुःखरूपेण हेतुफलात्मना परिणतया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य भोक्तृत्वेन अविद्यारूपः संयोगः स्यात्, तदा संसारः स्यात् इति। अतः यत् प्रकृतिपुरुषयोः कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च संसारकारणत्वम् उक्तं, तत् युक्तम् उक्तम्॥

रा॥पुरुषः *सुखदुःखानां भोक्तृत्वे हेतुः, सुखदुःखानुभवाश्रय इत्यर्थः ॥ २० ॥

ता॥भावः। विषयेन्द्रियादिरूपेण परिणतायाः प्रकृतेरपि भोक्तृत्वे हेतुत्वमस्ति; तत्कथं पुरुषो विशिष्य निर्दिश्यत इत्यत्राह— सुखदुःखानुभवाश्रय इति। तत्कालस्वसमवेतसुखदुःखसाक्षात्कारो भोग इति भोगलक्षणमप्यनेन सूचितम्। एतेन निर्विकारपुरुषसन्निधानात् प्रकृतेरेव भोक्तृत्वमिति पक्षो निरस्तः। तदा 'पुरुषोऽस्ति भोक्तृभावात्' 'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य' इत्यादिस्वग्रन्थविरोधश्च। अयं हि पक्षः शारीरके 'रचनानुपपत्तेश्च' इत्यारभ्य 'विप्रतिषेधाच्चासमञ्जसम्' इत्यन्तैस्सू-

प्र· पा॥ * सुखानां दुःखानां च. पा ॥

१. सांख्यतत्त्वकौमुद्याम्. कारिका. 'सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थप्रवृत्तेश्च॥१७॥तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य।कैवल्यम्माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च॥१९॥ तस्मात्तत्संयोगात् अचेतनश्चेतनावदिव लिङ्गम्। गुणकर्तृत्वेच तथा कर्तेव भवत्युदासीनः॥२०॥पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतस्सर्गः॥२१

२. शारीरकसूत्राणि - २२ - रचनानुपपत्तेश्च नानुमानम्प्रवृत्तेश्च॥१॥—पयोऽम्बुवच्चेत्तत्रापि॥ २॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ३ ॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ४ ॥ पुरुषाश्मवदिति चेत्तथापि ॥५॥ अङ्गित्वानुपपत्तेश्च ॥ ६ ॥ अन्यथानुमितौच ज्ञशक्तिवियोगात् ॥ ७ ॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ८ ॥ विप्रतिषेधाच्चासमञ्जसम् ॥ ९ ॥ अनुमीयत इत्यनुमानं - प्रधानम् । तस्याचेतनस्य प्राज्ञानधिष्ठितस्य विचित्रसन्निवेशजगद्रचनानुपपत्तेः तन्न कारणम्। चकारात्सत्त्वादीनां द्रव्यगुणत्वेन शौक्ल्यादेरिवोपादानकारणत्वासम्भवं समुच्चिनोति। सत्त्वादयोहि कार्यगतलाघवप्रकाशादिहेतुभूताः, कारणभूतपृथिव्यादिगताः, तत्स्वभावविशेषाः। प्रवृत्तेश्च— अनुपपत्तेरित्यनुवर्तते। प्राज्ञानधिष्ठितस्य प्रधानस्य विचित्रजगद्रचनानुगुणाप्यपरिस्पन्दरूपप्रवृत्त्यनुपपत्तेश्च न प्रधानङ्कारणमिति प्रथमसूत्रार्थः॥१॥ अथ द्वितीयसूत्रार्थः—यथा पयः, अम्बुच दध्यादिभावेऽनपेक्षम्; तथा प्रधानमपीतिचेत्—तत्रापि - यत् क्षीरजलादि दृष्टान्ततया निदर्शितम्, तत्रापि - प्राज्ञानधिष्ठाने प्रवृत्तिर्नोपपद्यते। तदपि पूर्वत्र ( २-१-२४ ) पक्षीकृतमित्यभिप्रायः॥२॥—सर्गव्यतिरेकेण प्रतिसर्गावस्थयानवस्थितिप्रसङ्गाच्च केवलम्प्रधानं न कारणम्। अन्यानपेक्षत्वात्प्रधानस्य सर्वदैवहि सृष्टिः प्रसज्यते ॥ ३॥क्षीरीभवद्धेनूपयुक्ततृणादिवत् प्रधानमपीति नयुक्तं वक्तुम्, अनडुदादिष्वदर्शनात्। तद्धि प्राज्ञाधिष्ठितम्, ॥४॥ पुरुषः स्वसन्निधानात् प्रधानम्प्रवर्तयति, अन्धपङ्गुपुरुषवत्, अश्मवत्-अयस्कान्ताश्मवत्, इति न प्राज्ञापेक्षेतिचेत् न — तथाप्न प्रधानप्रवृत्तिसम्भवः, अविकृतत्वात्पुरुषस्य।पङ्ग्वन्धादेः-मार्गोपदेशदेशान्तरगमनादिः कादाचित्को विकारो ह्यस्ति । अन्धस्य चाक्षुषव्यापारविरहेऽपि पङ्गुपदेशग्रहणादिश्चेतनधर्मोऽस्ति। अयस्कान्तमणेरपि अयःप्रवृत्तौ कादाचित्कम्, अयस्सन्निधानं विद्यते। इहतु सन्निधिमात्रातिरेकी तादृशः कश्चिद्विशेष उभयत्रापि न विद्यते। पुरुषसन्निधानस्य नित्यत्वेन नित्यसर्गप्रसक्तिः, तथा सति प्रतिसर्गाभावोऽपवर्गाभावप्रसङ्गश्च॥ ५ ॥—इतश्च-गुणानामुत्कर्षापकर्षरूपाङ्गाङ्गिभावाद्धि जगत्प्रवृत्तिः, प्रतिसर्गावस्थायां साम्यावस्थानां वैषम्यकृताङ्गाङ्गित्वानुपपत्तेश्च न जगदारम्भः। तत्राप्युत्कर्षोऽस्ति चेत्-सर्वदा सर्गप्रसङ्गः ॥६॥—दूषितप्रकारातिरिक्तप्रकारान्तरेण प्रधानानुमितौच प्रधानस्य ज्ञातृत्वशक्तिवियोगात् तएव दोषाः-प्रादुः ष्युः,अतो नकथञ्चिदप्यनुमानेन प्रधानसिद्धिः ॥७॥—प्रधानाभ्युपगमेऽपि प्रयोजनाभावात् न तदनुमेयम्। पुरुषस्य निर्विकारस्य प्रधानदर्शनरूपविकारासम्भवात्, प्रकृतिधर्माध्यासनिमित्तभोगः, तद्विवेकानुसन्धानकृतकैवल्यञ्च न सम्भवति ॥ ८ ॥— विप्रतिषिद्धश्चेदं साङ्ख्यदर्शनम् ;—'प्रकृतेः परार्थतया पुरुषो द्रष्टा भोक्ता अधिष्ठाता' इत्याहुः। 'प्रकृतेश्च पुरुषस्य भोगापवर्गार्थतया सप्रयोजनत्वञ्च, प्रकृत्यैव साधनभूतया पुरुषो भोगमपवर्गञ्चाश्नुते' इतिचाहुः।'सच पुरुषः चैतन्यमात्रवपुः, नित्यो निर्विकारो

रा॥एवमन्योन्यसंसृष्टयोः प्रकृतिपुरुषयोः कार्यभेद उक्तः ; पुरुषस्य स्वतस्स्वानुभवैक-सुखस्यापि वैषयिकसुखदुःखोपभोगहेतुत्वमाह—

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।**

ता॥त्रैर्विस्तरेण प्रतिक्षिप्तः।अत्र च श्लोके यदि प्रकृतेरेव भोक्तृत्वमपि विवक्षितं स्यात्,तदा कर्तृत्वे भोक्तृत्वे च प्रकृतिरेव हेतुरिति वक्तव्यम् ; नतु विवेक्तव्यम्. भोक्तृत्वस्यापि कर्तृत्वविशेषत्वात्, 'शास्त्रफलं प्रयोक्तरि' इति न्यायाच्च । नच वाच्यं कर्तृत्वं प्रकृतेस्स्वतस्सिद्धं, भोक्तृत्वे तु तस्याः पुरुषो हेतुरिति प्रदर्शनाय विवेक इति. पुरुषनिरपेक्षायाः केवलायाः प्रकृतेः कर्तृत्वस्याप्ययोगादनभ्युपगमाच्च। अन्यथा विशुद्धकेवलज्ञानोदयेऽपि 'तेन निवृत्तिप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम्' इत्युक्तसप्तरूपविनिवृत्तिभङ्गप्रसङ्गात् । तथाच मुक्तावपि यथापूर्वमेव प्रकृतिप्रवृत्तिस्स्यात् । 'संघातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थप्रवृत्तेश्च' 'जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्च'इत्यधिष्ठानायुगपत्प्रवृत्तिभ्यां पुरुषतद्बहुत्वकल्पनं च भज्येत। अत्र 'पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान्'इत्यनन्तरोक्तिश्च व्याहन्येतेति भावः॥२०॥

उक्तैकदेशे शङ्कोदयार्थमुक्तवक्ष्यमाणपुनरुक्तिपरिहारार्थं चोक्तं विविच्यानुभाषते—**एवमिति**। परिशुद्धस्यानुभवसुखैकतानस्य प्रत्यगात्मनो वैषयिकबाह्यसुखदुःखोपभोगो न तात्त्विकः स्यात्, अपि तु स्फटिकमणौ जपाकुसुमपाटलिमवदासक्तिविशेषादारोपित एव स्यादिति शङ्का पु॰षः' इत्यर्धेन परिह्रियत इत्याह—**पुरु॰स्थेति** । सत्त्वादिगुणा न साक्षाद्भोक्तव्याः, सुखदुःखमोहकार्यैर्नियतयातीन्द्रियत्वात्;तत्सुखदुःखानां भोक्तृत्वं च प्रसक्तमुपपादनीयम् , तच्च हिशब्देन द्योतितम् । अत्र तु 'प्रकृ-

प्र-पा॥ न द्रष्टा.न भोक्ता, न कर्ता' इतिच। 'अतएव पुरुषो न बध्यते, नच मोक्षसाधनमनुतिष्ठति, नच-मुच्यते ' इति च वदन्ति । 'प्रकृतिरचेतनभूतैव पुरुषसन्निधानात् पुरुषधर्मं चैतन्यं स्वस्मिन्. स्वधर्मं कर्तृत्वं पुरुषेऽनुसन्धाय बध्यते, मोक्षसाधनमनुतिष्ठति, मुच्यते ' इति चाहुः । अध्यासरूपमनुसन्धानं हि चेतनधर्मः । तथा 'प्रकृतिरनुपकारिणः पुरुषस्य भोगापवर्गस्वरूपं प्रयोजनं साधयतीत्युपकारिणी ' इति चाहुः । अध्यासरूपबन्धादयः, पुरुषस्य नसन्तीतिचेत्, कस्योपकारः, एवमन्योन्यविरुद्धभाषणात् असमञ्जसम् ॥ ९ ॥

१ पूर्वमीमा. ३-७-१८॥ २॥

३. साङ्ख्यतत्त्वकौमुद्याम् . १७-कारिका. ७३२.पुटे. व्याख्याता॥ ४. सांख्य.१८. का॥

शं॥**कः पुनः अयं संसारो नाम?**

**सुखदुःखसम्भोगः संसारः । पुरुषस्य सुखदुःखानां सम्भोक्तृत्वं संसारित्वम् इति ॥ २० ॥**

**यत् पुरुषस्य सुखदुःखानां भोक्तृत्वं संसारित्वम् इति उक्तं,तस्य तत् किं निमित्तम्**

आ॥**स हि चिद्रूपत्वादनुभवति । प्रकृतिश्च जडत्वात्परिणामिनी । 'कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः। भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम्' इति भागवते॥२०॥**

अ॥भोक्तृत्वे हेतुः'इति कथमुक्तमिति सांख्याः;तत्राह-**सहीति**।न तु प्रकृतिः,अचैतन्यादिति शेषः।ननु 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिः'इत्युक्तम्; कर्तृत्वं च ज्ञानेच्छाप्रयत्नयोगः,तत्कथं प्रकृतेर्भोगासंभव इत्यत आह—**प्रकृतिश्चेति** । चस्त्वर्थः । परिणामिकारणत्वात्कर्तृत्वमित्युपचर्यत इति भावः । श्लोकार्थे पुराणसंमतिमाह—**कार्येति** । कारणं विदुरित्युत्तरार्धेऽनुवर्तते ॥ २० ॥

रा॥गुणशब्दः स्वकार्येष्वौपचारिकः ; स्वतस्स्वानुभवैकसुखः पुरुषः प्रकृतिस्थः-प्रकृतिसंसृष्टः, प्रकृतिजान् गुणान् --प्रकृतिसंसर्गोपाधिकान् सत्त्वादिगुणकार्यभूतान् सुखदुःखादीन्, भुङ्क्ते—अनुभवति ॥

प्रकृतिसंसर्गहेतुमाह—

**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥** २१

पूर्वपूर्वप्रकृतिपरिणामरूपदेवमनुष्यादियोनिविशेषेषु स्थितोऽयं पुरुषस्तत्तद्योनिप्र-

---

ता॥तिजान् गुणान् भुङ्क्ते ' इति गुणभोक्तृत्वं कथमुच्यत इत्यत्राह—**गुणशब्द**इति। **स्वकार्येष्व**िति लक्षणानिमित्तकथनम् । स्वशब्देन गुणस्वरूपग्रहणम्। यद्यपि गुणशब्दस्सुखदुःखेष्वपि मुख्यः, तथापि प्रकृतिगुणत्वस्य विवक्षितत्वादौपचारिक इत्युक्तम्। उत्तरत्रापिहि बहुशो गुणशब्दस्सत्त्वादिविषय एव। यथावस्थिताकारोऽत्र पुरुषशब्देनानूदित इत्याह—**स्वतस्स्वानुभवैकसुख**इति। प्रकृतिस्थशब्दस्स्वास्थ्यादिपरोऽपि प्रयुज्यत इति तद्व्युदासाय--**प्रकृतिसंसृष्ट**इत्युक्तम् । 'प्रकृतिजान्' इत्यनेन प्रकृत्याश्रयत्वं न विवक्षितम्, 'सुख्यहं दुःख्यहम् इति स्वाश्रिततयैव तदुपलम्भात्, अन्तःकरणविकाराणां सुखादीनां स्वात्मन्यारोप इति पक्षस्य निर्दिष्टप्रमाणविरुद्धत्वात् । अतस्तदुपाधिकत्वमेव विवक्षितमिति ज्ञापनाय प्रकृतिसंसर्गोपाधिकत्वोक्तिः । आदिशब्देन पूर्वसमभिव्याहृतेच्छाद्वेषादिसंग्रहः । तेऽपि हि कर्मफलभूता भोक्तव्याः । आत्मनेपदान्तत्वादर्थानन्वयाच्चात्र पालनार्थत्वमयुक्तम् ; अभ्यवहारार्थोऽप्यत्रानौचित्यादेव त्यक्तः ; अतोऽत्र भुङ्क्त इति प्रस्तुतानुभवमात्रं विवक्षितम् । स्वसमवेतवर्तमानसुखदुःखसाक्षात्कारो भोग इत्यपि हि लक्षयन्तीत्यभिप्रायेणाह—**अनुभवती**ति ॥

स्वानुभवैकतानस्य वैषयिकसुखदुःखोपभोगे प्रकृतिसंसर्गो हेतुरुक्तः,परिशुद्धस्यात्मनस्सोऽपि प्रकृतिसंसर्गः कथमिति शङ्कामनन्तरं परिहरतीत्यभिप्रायेणाह-**प्रकृतिसंसर्गहेतुमाहे**ति।बीजाङ्कुरन्यायेन प्रवाहानादित्वादन्योन्याश्रयणचक्रकादिपरिहारस्सिद्धः; अनवस्था च न दोषः;प्रवाहेषु च पूर्वहेतुवैचित्र्याद्युत्तरोत्तरवैचित्र्यसिद्धिः । गुणसङ्गस्य विहितनिषिद्धकर्मद्वारा तत्फलानुभवार्थविचित्रजन्महेतुत्वाच्छास्त्रसाफल्यं, 'कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्...रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्' इति सदसद्योनिप्राप्तेः कर्ममूलत्वश्रुत्यविरोधं चाह--**पूर्वपूर्वे**ति । सत्त्वादीनां

प्र-पा ॥ १. छा. ५-१०-७ ॥

---

शां॥इति?उच्यते—पुरुषः भोक्ता प्रकृतिस्थः प्रकृतौ अविद्यालक्षणायां स्थितः प्रकृतिस्थः—प्रकृतिम् आत्मत्वेन गतः इत्येतत्—हि यस्मात्, तस्मात् भुङ्क्ते—उपलभते इत्यर्थः—प्रकृतिजान् प्रकृतितः जातान् सुखदुःखमोहाकाराभिव्यक्तान् गुणान् 'सुखी, दुःखी, मूढः, पण्डितः, अहम्' इत्येवम्। सत्यामपि अविद्यायां सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः सङ्गः आत्मभावः, सः प्रधानं कारणम् अस्य पुरुषस्य जन्मनः, 'स यथाकामो भवति तत्क्रतुर्भवति' इत्यादिश्रुतेः । तदेतत् आह—कारणं हेतुः गुणसङ्गः गुणेषु सङ्गः अस्य भोक्तुः सदसद्योनिजन्मसु, सच्च असच्च सदसती, तयोः योनयः सदसद्योनयः, तासु सदसद्योनिषु जन्मानि सदसद्योनिजन्मानि, तेषु सदसद्योनिजन्मसु विषयभूतेषु निमित्तं कारणं गुणसङ्गः । अथवा—सदसद्योनिजन्मसु अस्य संसारस्य कारणं गुणसङ्गः, इति संसारपदम् अध्याहार्यम् ; सदसद्योनिजन्मसु गुणसङ्गः अस्य संसारस्य कारणम् इत्यर्थः।

रा॥युक्तसत्त्वादिगुणमयेषु सुखादिषु सक्तस्तत्साधनभूतेषु पुण्यपापकर्मसु प्रवर्तते; ततस्तत्पुण्यपापफलानुभवाय सदसद्योनिषु साध्वसाधुषु योनिषु जायते : ततश्च कर्मारभते; ततश्च जायते ; यावदमानित्वादिकानात्मप्राप्तिसाधनभूतान् गुणान् सेवते, तावदेव संसरति ; तदिदमुक्तं 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इति ॥ २१ ॥

**उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।**

**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥** २२

अस्मिन् देहेऽवस्थितोऽयं पुरुषो देहप्रवृत्त्यनुगुणसङ्कल्पादिरूपेण देहस्योपद्रष्टा अ-

---

ता॥साक्षात्सङ्गास्पदत्वायोगादत्रापि गुणशब्दस्य पूर्ववदौपचारिकत्वाभिप्रायेण—**सत्त्वादिगुणमयेषु सुखदुःखादिष्वित्युक्तम्** । दुःखसङ्गो नाम दुःखे सुखभ्रान्त्या सङ्गः ; दुःखहेतुषु हि सागरतरणादिषु सुखलवसङ्गात्सज्जते; 'भ्रान्तिज्ञानवतां पुंसां प्रहारोऽपि सुखायते' इति चाहुः। यो हि यदिच्छति, तस्य तस्मिन् तत्साधने वा कार्यताबोध इति स्थिते सुखस्य स्वरूपेण कर्तुमशक्यत्वात्तत्साधनेष्वेव पुरुषप्रवृत्तिरित्यभिप्रायेण—**तत्साधनभूतेष्वित्युक्तम्** । श्रूयते च 'स यथाकामो भवति तत्क्रतुर्भवति' इति; अस्तिनास्तीत्याद्यर्थतायामनन्वयात्. 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा ...अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' इत्यादिश्रुत्यनुसाराच्च. साध्वसाधुशब्दः साध्वसाधुषु योनिष्विति वदता 'सदसतोर्योनिषु जन्मसु'इति परव्याख्या निरस्ता।बहुवचनेनैकस्यैव पुरुषस्य प्रवाहरूपेण विचित्रानन्तसदसद्योनिसंबन्धो विवक्षित इत्यभिप्रायेण—**ततश्च कर्मारभते, ततो जायत**इत्यादिकमुक्तम् । एवं प्रवाहतोऽनादित्ववदविच्छेदात्प्रवाहानन्तत्वमपि किं स्यादिति शङ्कां परिहरति—**यावदिति**।प्रकृतिसंसर्गस्य गुणसंसर्गः कारणमित्युक्ते सति अर्थात्'कारणाभावे कार्याभावः' इति न्यायादमानित्वादिभिर्गुणसङ्गनिवृत्त्या सदसद्योनिजन्मप्रवाहोऽप्युच्छिद्येतेत्युक्तं भवतीत्याह—**तदिदमुक्तमिति** । अत्र कण्ठोक्त्यभावेऽपि गुणसङ्गस्य पूर्वपूर्वदेहसंबन्धप्रयुक्तत्वं कर्मद्वारा योनिप्राप्तिहेतुत्वादिकं च श्रुतिस्मृत्यन्तरानुसारादभिप्रायत उक्तमिति भावः ॥ २१ ॥

सदसद्योनिजन्मसमनन्तरभाविनः पुरुषस्वभावानाह—'उपद्रष्टा'इति श्लोकेन।द्रष्टा प्रमाणादिवशेन दृश्यानां प्रदर्शकः; उपद्रष्टा यथावत्स्वयमप्रवृत्तः प्रवर्तमानस्यानुसंधाता ; तत्तत्साधर्म्यादिहोपद्रष्टृशब्द इत्याह—**देहप्रवृत्त्यनुगुणसंकल्पादिरूपेणेति**।आदिशब्देन प्रेरणं संगृहीतम्। यद्वा प्रवृ

---

प्र-पा ॥ १ ॥ २ ॥ ३. छा. ५-१०-७ ॥ ४. वैशेषिकसू. १-२-१ ॥

---

शं॥सद्योनयः देवादियोनयः।असद्योनयः पश्वादियोनयः। सामर्थ्यात्, सदसद्योनयः मनुष्ययोनयोऽपि अविरुद्धाः द्रष्टव्याः ॥

एतत् उक्तं भवति—प्रकृतिस्थत्वाख्या अविद्या, गुणेषु च सङ्गः कामः, संसारस्य कारणमिति । तच्च परिवर्जनाय उच्यते। अस्य च निवृत्तिकारणं—ज्ञानवैराग्ये ससंन्यासे गीताशास्त्रे प्रसिद्धम् । तच्च ज्ञानं पुरस्तात् उपन्यस्तं क्षेत्रक्षेत्रज्ञविषयं 'यज्ज्ञात्वामृतमश्नुते' इति । उक्तं च अन्यापोहेन अतद्धर्माध्यारोपेण च ॥ २१ ॥

तस्यैव पुनः साक्षात् निर्देशः क्रियते—उपद्रष्टा समीपस्थः सन् द्रष्टा स्वयम् अव्यापृतः । यथा ऋत्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तटस्थः अन्यः अव्यापृतः यज्ञविद्याकुशलः

**रा॥नुमन्ता च भवति; तथा देहस्य भर्ता च भवति: तथा देहप्रवृत्तिजनितसुखदुःखयोर्भोक्ता च भवति : एवं देहनियमनेन, देहभरणेन, देहशेषित्वेन च देहेन्द्रियमनांसि प्रति महेश्वरो भवति : तथाच वक्ष्यते *'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्' इति ; अस्मिन् देहे देहेन्द्रियमनांसि प्रति परमात्मेति**

**ता॥**तस्य प्रवर्तकोऽनुमन्तेति भेदमभिप्रेत्य आदिशब्दः। उपद्रष्टृत्वानुमन्तृत्वादेः प्रतिसंबन्धिसापेक्षत्वादधिकरणतया सन्निहितोऽपि देहः प्रतिसंबन्धितयाप्यर्थादन्वयमर्हतीत्यभिप्रायेण-देहस्येत्युक्तम्। नियन्तृत्वधारकत्वशेषित्वानां शरीरप्रतिसंबन्ध्यात्मलक्षणानां विभागप्रदर्शनाय प्रवृत्तिविषयोपद्रष्टृत्वानुमन्तृत्वयोरेकवाक्यकरणं, तथेत्यादिवाक्यभेदश्च। भर्ता धारकः।उक्तहेतुकं सन्निहितदेहादिविषयमेवास्य महेश्वरत्वमित्याह- **एवमिति** । देहजन्यफलभोक्तृत्वकथनेन देहस्य तदर्थतया देहिनश्शेषित्वं फलितमित्यभिप्रायेणाह – **देहशेषित्वेनचेति** । कर्माधीनजननमरणभागिनि जीव एवेश्वरशब्दस्य परिच्छिन्नविषयतया प्रयोगं दर्शयति --**तथाचेति** । जीवात्मन्येव ज्ञानतो व्याप्तया परमात्मशब्दप्रयोगोपपत्तये सन्निहितसंकोचकान्वयमाह —**अस्मिन्देह**इति। साक्षात्परमात्मविषयत्वे सति अस्मिन् देहे'इत्यसंङ्गतमिति भावः । अत्र देहेन्द्रियमनांसीति मनसः पृथगुपादानं तस्यात्मशब्दप्रयोगविषयत्वप्रदर्शनार्थम्। परमशब्दव्यवच्छेद्याभावाज्जीवविषयत्वानुपपत्तिरित्यत्राह **देहे मनांसिचेति** । अयं प्रयोगः प्रबन्धान्तरे प्रदेशान्तरे वा न मृग्यः : अपित्वेतत्प्रकरणे श्लोकमात्रव्यवधानेन । अतो व्यवच्छेद्यसन्निधान-

**प्र-पा** ॥ *गी. १५-८ ॥

---

**शं॥ऋत्विग्यजमानव्यापारगुणदोषाणाम् ईक्षिता, तद्वत् च कार्यकरणव्यापारेषु अव्यापृतः अन्यः तद्विलक्षणः तेषां कार्यकरणानां सव्यापाराणां सामीप्येन द्रष्टा उपद्रष्टा।अथवा—देहचक्षुर्मनोबुद्ध्यात्मनः द्रष्टारः; तेषां बाह्यः द्रष्टा देहः, ततः आरभ्य अन्तरतमश्च प्रत्यक् समीपे आत्मा द्रष्टा, यतः परः अन्तरतमः नास्ति द्रष्टा ; सः अतिशयसामीप्येन द्रष्टृत्वात् उपद्रष्टा स्यात् । यज्ञोपद्रष्टृवद्वा सर्वविषयीकरणात् उपद्रष्टा । अनुमन्ता च—अनुमोदनम् अनुमननं, कुर्वत्सु तत्क्रियासु परितोषः, तत्कर्ता अनुमन्ता च । अथवा,**

**आ॥'यतश्च यत्'इत्याह—उपद्रष्टेति।अनुमन्ता अन्वनु विशेषतो निरूपकः।'पुरुषः सुखदुःखानाम्'इति जीव उक्तः। 'पुरुषं प्रकृतिम्'इति जीवेश्वरौ सहैवोच्येते।अन्यत्र महा-**

**ज॥**'यतश्च यत्' इति वक्तुमित्युक्तम् . तत्केनोच्यत इत्यत आह—**यतश्चेति** । इति प्रतिज्ञातमिति शेषः । अनुमन्ता अनुज्ञातेति कश्चित् । तदसत्, औदासीन्यप्राप्तौ भर्ता भोक्तेत्यादिविरोधादिति भावेन व्याचष्टे—**अनुमन्तेति** । अनुशब्दः पुनरर्थे । क्रियावृत्तिश्च तदर्थ इति ज्ञापनाय द्विरुक्तिः । **विशेषत इति** तृतीयोऽर्थः । निरूपकः कर्तव्यस्यालोचकः । 'य एनं वेत्ति पुरुषम्' इत्यत्र पुरुषशब्दं व्याख्यातुमुपोद्घातमाह—**पुरुषइति** । सुखदुःखभोक्तृलिङ्गादिति भावः । सुखदुःखानां भोक्तृत्वे भोगे हेतुः कर्तेति व्याख्यानमाश्रित्येदमुक्तम् । व्याख्यानान्तरेतु भगवानेवात्र पुरुषः: 'पुरुषप्रकृतिस्थो हि'इति जीवः।उपलक्षणमेतत्, उपद्रष्टेतीश्वर उक्त इत्यपि द्रष्टव्यम्।ततः किमित्यत आह—**पुरुषमिति** । यत एवमुभावपि प्रकृतौ, अतो 'य एनं वेत्ति पुरुषम्' इत्यत्र पुरुषशब्देन जीवेश्वरौ द्वावपि गृह्येते, द्वयोरपि परामर्शसंभवात् । तर्हि द्वयोर्द्विवचनेन भाव्यमित्यत उक्तं—**सहैवेति** । तन्त्रेणेत्यर्थः। अत्र कश्चित्—य एनं वेत्ति पुरुषं साक्षादहमस्मीत्येवमध्याहारेण जीवेश्वरैक्यं व्याख्यातवान्; तद्दूषयति—**अन्यत्रेति** । जीवेश्वरैक्ये सर्ववेदानां प्राधान्येन यत्प्रतिपादकत्वं तद्विरोधः कथमित्यत आह --

रा॥चाप्युक्तः;देहे मनसि चात्मशब्दोऽनन्तरमेवप्रयुज्यते-*'ध्यानेनात्मनि पश्यन्ति केचि

ता॥मपि तद्यवच्छेदमात्रार्थत्वस्य व्यवस्थापकमित्यभिप्रायेण-अनन्तरमेवेत्युक्तम्। परमात्मशब्दवन्महे-श्वरशब्दस्यापि सन्निहितसंकोचकावच्छिन्नविषयत्वं चकारातिरिक्तविषयेणापिशब्देनापिप्रतीतमित्याह—प्र-पा ॥ *गी. १३-२४ ॥

शं॥अनुमन्ता कार्यकरणप्रवृत्तिषु स्वयम् अप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलः विभाव्यते,

आ॥तात्पर्यविरोधः।उत्कर्षे हि महातात्पर्यम्।तथा हि सौकरायणश्रुतिः—'अवाच्योत्कर्षे महत्त्वात्सर्ववाचां सर्वन्यायानां च महत्तत्परत्वम्। विष्णोरनन्तस्य परात्परस्य तच्चापि ह्यस्त्येव न चात्र शङ्का ॥ अतो विरुद्धं तु यदत्र मानं तदक्षजादावथवापि युक्तिः। न तत्प्रमाणं कवयो वदन्ति न चापि युक्तिर्ह्यूनमतिर्हि दृष्टेः' इति। अतो युक्तिभिरप्येतद्-पलापो न युक्तः। अतो यया युक्त्या अविद्यमानत्वादि कल्पयति, साप्याभासरूपेति सदैव माहात्म्यं वेदैरुच्यत इति सिध्यति। अवान्तरं च तात्पर्यं तत्रास्ति। उक्तं च तत्रैव 'अवान्तरं तत्परत्वं च सत्त्वे महद्वाप्येकत्वात्तयोरनन्ते' इति। श्यामत्वाद्यभि

ज॥उत्कर्षे हीति।सर्वागमानामीश्वरस्य सर्वोत्कर्षेहि महातात्पर्यमित्यर्थः।तत्कुतः?,प्रागुक्तयुक्तेः श्रुतेश्चेत्याह-तथाहीति।विष्णोर्महत्त्वादेवावाच्यत्वेनोक्ते सर्वोत्कर्षे सर्वासां वेदवाचां सर्वन्यायानां न्यायव्युत्पादकस्य मीमांसाशास्त्रस्येति यावत्। महत्तत्परत्वं महातात्पर्यम्। अस्तूत्कर्षे महातात्पर्यम्, तथाप्युत्कर्षस्य सत्त्वं कुतः?, न हि जैनवाक्यस्य क्वचिन्महातात्पर्येऽपि तत्सत्त्वमस्तीत्यत आह—तच्चापीति। न केवलं तत्र तात्पर्यं, किं तु तन्महत्त्वमपि चास्त्येव। धियां स्वतः प्रामाण्यादिति हेत्वर्थः। स्वतः प्रामाण्येऽपि बाधकाद्विषयासत्त्वं भवति, तदप्यत्र नास्तीत्याह—न चात्रेति। शङ्केति—शङ्काहेतुर्बाधकमिति यावत्। कथं बाधकाभाव इत्यत आह—अतइति। अत इत्यस्योत्तरत्रान्वयः। तत्रेश्वरस्य सर्वोत्कर्षे तु यद्विरुद्धं मानं शङ्क्यते,तदपि किम्? अक्षजादौ—अक्षजागमयोरन्यतरत्। अथवा युक्तिः। आद्यं निराकरोति—नतदिति। कवयो न्यायविदः। कुतः? अत उपजीव्यवेदविरोधात्। एतेन द्वितीयोऽपि निरस्तः। तथाऽपि विशेषं वक्तुमाह—नचेति। युक्तिरपि नैव मानं, यतो दृष्टेः श्रुतेरूनमतिर्जात्यैव दुर्बलज्ञानोत्पादिका। भगवदुत्कर्षे सर्वागमानां महातात्पर्यमित्यत्र पठितायाः श्रुतेः शेषेण योऽर्थो लब्धः, सोऽपि प्रकृतोपयुक्त एव। उत्कर्षस्य सत्त्वाभावे जीवेश्वरैक्यस्य तद्विरोधाभावात्; अतस्तं स्ववाक्येनाप्याह—अतइति। युक्तिभिरित्युपलक्षणम्। एतदपलापो भगवदुत्कर्षस्याविद्यमानत्वादिकल्पनम्। अत इत्युक्तमेवार्थं विशदयति—अतइति। वेदविरोधादित्यर्थः। आदिपदेनानिर्वाच्यत्वं गृह्यते। भगवदुत्कर्षस्येति शेषः। सापीत्यपिशब्देन प्रत्यक्षादेः समुच्चयः। इतिशब्दो हेतौ; बाधकाभावादित्यर्थः। उत्कर्षस्य प्रकृतत्वेऽपि तच्चापीति श्रौततच्छब्दव्याख्यानाय-माहात्म्यमित्युक्तम्। ननु प्रतिपन्नस्य विद्यमानत्वादिकं बाधकाभावेन कल्प्यम्, स्वतः प्रामाण्यात्; नचोत्कर्षस्य सत्त्वं वेदात्प्रतिपन्नम्; उत्कर्षे तत्सत्त्वे च तात्पर्याङ्गीकारे वाक्यभेदप्रसङ्गादित्यत आह—अवान्तरंचेति। चशब्दस्य तत्र सत्त्वे चेत्यन्वयः। उभयत्र महातात्पर्याभावान्न दोषः।एतत्कुत इत्यत आह—उक्तंचेति।तत्रैव—तस्यामेव श्रुतौ। अङ्गीकृत्य चेदमुक्तम्। वस्तुतस्तूत्कर्षसत्त्वे महदपि तत्परत्वम्। कुतः? अनन्तसंबन्धिनोस्तयोरुत्कर्षस्य तत्सत्त्वस्य चैकत्वात्। अनन्त इति प्रकृतत्वादेवोक्तम्। एतदुक्तं भवति—प्रमाणं हि प्रवर्तमानं विधिरूपं निषेधरूपं वा;न तूदासीनं, तस्य च बाधाभावे स्वत एव सत्त्वासत्त्वलक्षणौ विधिनिषेधौ सिध्यतः, किं तत्र तात्पर्यान्तरकल्पनया—इति।नन निराकारमेव ब्रह्म श्रूयते,तत्कथं तद्गुणोत्कर्षे सर्वश्रुतीनां महातात्पर्यं स्यादित्यत आह—श्यामत्वेति। एतच्चानन्तरातीताध्याये प्रपञ्चितम्। वेदविरोधाद्युक्त्यादेराभासत्व-

रा॥दात्मानमात्मना'इति; अपिशब्दान्महेश्वर इत्यप्युक्त इति गम्यते; पुरुषः परः 'अनादि

ता॥अपिशब्दादिति।'उक्तः'इत्यनेनापरमात्मन्ययमापेक्षिकः परमात्मादिशब्द इति सूचितम्। 'पुरुषः परः' इत्यत्र परशब्दस्यापि पूर्ववदवच्छिन्नविषयत्वानुग्राहकं देहव्यपदेशस्यापेक्षिकमहेश्वरत्वादिव्यपदेशस्य च तात्पर्यं, श्लोके चोद्देश्योपादेयविभागं, पिण्डितार्थं च दर्शयति—अनादीति।'अनादिम-

शं॥तेन अनुमन्ता। अथवा प्रवृत्तान् स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयति इति अनुमन्ता। भर्ता—भरणं नाम देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपारार्थ्येन निमित्तभूतेन चैतन्याभासानां यत् स्वरूपधारणं तत् चैतन्यात्मकृतमेव इति भर्ता आत्मा उच्यते। भोक्ता—अग्न्युष्णवत् नित्यचैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहात्मकाः प्रत्ययाः सर्वविषयाः चैतन्यात्मग्रस्ता इव जायमानाः विभक्ताः विभाव्यन्ते इति भोक्ता आत्मा उच्यते। महेश्वरः—सर्वात्मत्वात् स्वतन्त्रत्वाच्च महांश्च असौ ईश्वरश्च इति महेश्वरः।

आ॥धानाच्च। युक्तं च पुरुषमतिकल्पितयुक्त्यादेराभासत्वम्, अज्ञानसंभवात्।न तु स्वतः प्रमाणस्य वेदस्याभासत्वम्। अदर्शनं च संभवत्येव पुंसाम्, बहूनामप्यज्ञानात्। तर्ह्यस्मदनधीतश्रुत्यादौ विपर्ययोऽपि स्यादिति न वाच्यम्, यतस्तत्रैवाह—'नैव तद्विरुद्धा वाचो नैव तद्विरुद्धा युक्तय इति ह प्रजापतिरुवाच प्रजापतिरुवाच' इति। तद्विरुद्धं च जीवसात्म्यम्। 'आभास एव च' इति चोक्तम्। जनमेजय उवाच—'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु। को ह्यत्र पुरुषश्रेष्ठस्तं भवान्वक्तुमर्हति।श्रीवैशंपायन उवाच—'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह। बहूनां पुरुषाणां हि यथैका योनिरुच्यते॥ तथा त पुरुषं विश्वमाख्यास्यामि गुणाधिकम्' इति मोक्षधर्मे। न च तत्सर्वं स्वप्नेन्द्रजालवत्। 'वैधर्म्याच्च न स्वप्नादिवत्' इति भगवद्वचनम्। न च स्वप्नवदेकजीवकल्पितत्वे

ज॥संभवात्।अज्ञानं चोपाधिव्यभिचारादिविषयम्। स्वतः प्रमाणस्यापौरुषेयतया पुरुषगुणानपेक्षप्रमाणत्वमित्युक्तम्। तदयुक्तं,नियामकाभावात्, विपर्ययस्यापि सुवचनादित्यत आह—युक्तं चेति। युक्तं—सम्भावितम्। अज्ञानसम्भवात्—अज्ञानमूलत्व संभवात्। अज्ञानं चोपाधिव्यभिचारादिविषयम्। स्वतः प्रमाणस्यापौरुषेयतया पुरुषगुणानपेक्षप्रमाणभावस्य युक्तेरज्ञानमूलत्वसंभावना निर्बीजेत्यत आह—अदर्शनंचेति। संभवति शङ्कार्हमित्यर्थः। एतदुक्तं भवति—वेदस्य युक्त्यादेश्च परस्परविरोधे द्वयोः प्रामाण्यानुपपत्तावन्यतरस्याभासत्वे कल्पनीये युक्त्यादेरेव तत्कल्प्यं, संभवात्; न तु वेदस्य,असंभवात्; निरवकाशेन सावकाशस्य बाधदर्शनात्—इति। पुरुषेष्वदर्शनमाशङ्कमानानामतिप्रसङ्गमाशङ्क्य निषेधति—तर्हीति। विपर्ययो भगवद्गुणोत्कर्षस्य। 'सर्ववाचाम्' इति श्रुत्यैवोक्तत्वादिति परिहारे स्थितेऽन्यमप्याह—यतइति। तस्यामेव श्रुतावाह वेदपुरुषः। एतद्विरुद्धाः भगवद्गुणोत्कर्षविरुद्धाः। उत्कर्षे हीत्यादिनोक्तमुपसंहरति—यदिति। सर्ववेदानां यद्भगवद्गुणोत्कर्षे महातात्पर्यमुक्तं, तद्विरुद्धं जीवसात्म्यमीश्वरेण जीवस्यैकात्म्यं सूत्रेतिहासविरुद्धं चेत्याह—आभास इति। बहव इति पक्षेऽपि किं सर्वे समा उतैकः श्रेष्ठः;द्वितीये कोऽसावत्र पुरुषेषु श्रेष्ठः? कथं च श्रेष्ठः? तं तथा वक्तुमर्हतीति। एतत् एतस्मिन् जगति। किं तु बहवः। तेषां बहूनां पुरुषाणां मध्ये यो योनिः यः कारणभूतः श्रेष्ठः। तथा च तं पुरुषं तथा व्याख्यास्यामि। विश्वं व्याप्तम्। स्यादेतत्, सर्वं जगत्स्वप्नवदेकाज्ञानपरिकल्पितमित्येके; इन्द्रजालवदनेकाज्ञानकल्पितमित्यपरे; अपकृष्टापेक्षश्चोत्कर्षः; तथा चापकृष्टस्य विश्वस्य मिथ्यात्वादुत्कर्षस्य सत्त्वं कथं स्यात्? कथं च तत्र सर्ववेदानां महातात्पर्यमित्यत आह—नचेति। भगवद्वचनं यत इति शेषः। इतोऽप्येवमित्याह—नचेति। कल्पितत्वे विश्वस्य

रा॥मत्परम्' इत्यादिनोक्तोऽपरिच्छिन्नज्ञानशक्तिरयं पुरुषोऽनादिप्रकृतिसंबन्धकृतगुणसङ्गादेतद्देहमात्रमहेश्वरो देहमात्रपरमात्मा च भवति ॥ २२ ॥

---

ता॥ त्परम्' इत्यादिनोक्त इति परमत्वाभावोक्तिः।अपरिच्छिन्नज्ञानशक्तिरिति तु परत्वमात्रप्रदर्शनम् अयम् इत्यनेन तन्मध्यपतितः 'उपद्रष्टा'इति श्लोकोऽपि तद्विषय एवेति प्रकरणस्य जीवविषयत्वं प्रदर्शितम्। 'देहेऽस्मिन्'इत्यनेन प्रागुक्तो हेतुर्विवक्षित इत्यभिप्रायेण—अनादिप्रकृतिसंबन्धकृतगुणसङ्गादित्युक्तम् ॥ २२ ॥

---

शं॥परमात्मा-देहादीनाम् अव्यक्तान्तानां, प्रत्यगात्मत्वेन परिकल्पितानाम् अविद्यया,परमः

---

आ॥मानं पश्यामः । विपर्यये माश्चोक्ताः द्वितीये । उक्तं चायास्यशाखायां—'स्वप्नो ह व अयं चञ्चलत्वान्न स्वप्नो न हि विच्छेद एतदिति ' इति । नायं दोषः ; नह्यीश्वरस्य जीवैक्यमुच्यते । जीवस्य हीश्वरैक्यं ध्येयम् । तदपि न निरुपाधिकम् । अतो न प्रतिबिम्बत्वस्य विरोध्यैक्यम् । तथा च माधुच्छन्दसश्रुतिः—'ऐक्यं चापि प्रतिबिम्बेन विष्णोः जीवस्यैतद्दृषयो वदन्ति'इति । अहंग्रहोपासने च फलाधिक्यमग्निवेश्यश्रुतिसिद्धम्—'अहंग्रहोपासकत्वस्य साम्यमभ्याशो ह्यवाऽश्नुते नात्र शङ्का'इति।'तदीयोऽहमिति ज्ञानमहंग्रह इतीरितः ' इति वामने । 'तद्वशत्वात् सोऽस्मीति भृत्यैरेव न तु स्वतः '

---

ज॥एवं बहुजीवकल्पितत्वेऽपीति वाच्यम्। विपर्यये सत्यत्वे। तर्हि कथं विश्वस्य पुराणेषु स्वप्नादिसाम्यमुच्यत इत्यत आह—उक्तंचेति । अयं प्रपञ्चः स्वप्न इवोच्यते, चञ्चलत्वादनित्यत्वात् विकारित्वाच्च। न तु स्वप्नः, साक्षान्मिथ्येति यावत्।कुतः;एतत् एतस्य विच्छेदो बाधो न हीत्यर्थः।यद्यपि स्वप्नः सत्यः, तथाप्यङ्गीकारवादोऽयं,मिथ्यार्थप्राचुर्याद्वा । ननु जीवस्य ब्रह्मणि 'अहं ब्रह्मास्मि' इत्यहंग्रहोपास्तिस्तावत्कर्तव्या। जीवश्च न सर्वोत्कृष्टः । ततश्च तेनैकीभूतस्येश्वरस्य कथं सर्वोत्कर्ष इत्यत आह—नायमिति । बुद्धिस्थस्यायमिति परामर्शः कुत इत्यत आह—नहीति । किं तर्ह्युच्यत इत्यत आह—जीवस्यहीति।स्यादयं दोषः,यदि'अहं ब्रह्मास्मि'इत्यादिनेश्वरमुद्दिश्य तस्यानुत्कृष्टजीवैक्यमुच्येत।नचैवं, किं तु जीवमुद्दिश्य तस्येश्वरैक्यम् ; 'अन्यथा ब्रह्म मदात्मकं भवति'इति निर्देशप्रसङ्गादिति। सत्यमेतत् जीवस्येश्वरैक्यमुच्यत इति, तथाऽपि नोक्तदोषपरिहारः । यदीश्वरो वस्तुतः सर्वोत्कृष्टः स्यात्, तदा कथं जीवस्य तदैक्यं स्यात्, तस्यानुत्कृष्टत्वेनानुभवात्। अतो जीवस्य ब्रह्मणि श्रुतस्याहंग्रहोपासनस्यान्यथानुपपत्त्येश्वरस्य सर्वोत्कृष्टत्वं मिथ्येत्यङ्गीकार्यमित्यत आह—तदिति । यज्जीवस्येश्वरेणैक्यमुच्यते, तदपि न निरुपाधिकं निरुपचरितम्; किंतूपचारेणैवोच्यते।उपचारबीजं सहेतुकमाह—अतइति । यतः साक्षादैक्यं नार्थः,अतः 'अहं ब्रह्मास्मि'इत्यादावुच्यमानमैक्यं प्रतिबिम्बत्वविरोधि प्रतिबिम्बत्वादन्यत् न भवति, किंतु प्रतिबिम्बत्वमेवेत्यर्थः। ननु साक्षादैक्यं कुतो नार्थः, कुतश्चोपचारोऽपि प्रतिबिम्बत्वनिमित्त इत्यत आह—तथा चेति। जीवस्यापि विष्णोरैक्य यदृषयो वदन्ति तत्प्रतिबिम्बेनैव निमित्तेन हीत्यर्थः। इतश्चोपचारेणैवाहंग्रहोपासनमित्याह—अहमिति । फलाधिक्यं मुख्यं फलमहंग्रहोपासनस्य हि परमं प्रयोजनमीश्वरसारूप्यापत्तिरेव श्रुत्योच्यते । यदि च निरुपचरितमैक्यमुपास्यं स्यात्, तदा तन्नोपपद्येत । 'तं यथा यथोपासते तदेव भवति' इतिश्रुतेरिति भावः। अभ्याशः समीपम्। अल्पेनैव कालेनेत्यर्थः । इतोऽप्युपचारेणैवाहंग्रह इत्याह—तदीय इति । भृत्यैरेवोपास्यत इति शेषः । स्वतः साक्षादैक्यात् । ननु ' अग्निर्माणवकः' इत्याद्युपचारो भेदज्ञानसहचरितो दृष्टः। न च प्रकृते तदस्ति।

**य एनं वेत्ति पुरुषं प्रकृतिं च गुणैस्सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥** २३

रा॥एनम्-उक्तस्वभावं पुरुषम्, उक्तस्वभावां च प्रकृतिं वक्ष्यमाणस्वभावयुक्तैस्सत्त्वादिभिर्गुणैस्सह, यो वेत्ति-यथावद्विवेकेन जानाति, स सर्वथा-देवमनुष्यादिदेहेष्वतिमात्र-

ता॥अथ विवेकानुसंधानप्रकारं वक्तुं तत्रात्यादराय तत्फलं प्रथमं प्रदर्श्यते 'य एनम्' इति श्लोकेन । अन्वादेशः प्रागुक्तविविक्ताकारपरामर्शीत्याह—**उक्तस्वभावमिति** । प्रकृतेरपि प्रागेवोक्तत्वात्- 'एनाम्'इति विपरिणामः—**उक्तस्वभावामित्युक्तः**।गुणानां तु प्राक्प्रदर्शनमात्रम्; प्रपञ्चनं तु चतुर्दशाध्याय इत्यभिप्रायेणाह—**वक्ष्यमाणस्वभावैरिति**। प्रकृतिपुरुषयोरेव प्रधानत्वाद्गुणानां चाप्रधानत्वात्—**गुणैस्सह**ेत्युक्तम् । पुरुषस्य प्रकृत्या समुच्चित्य सहनिर्देशेऽपि गुणशब्दोऽत्र पूर्वोक्तप्रपञ्चितप्रकृतिगुणमात्रविषय इति ज्ञापनाय—**सत्त्वादिभिरित्युक्तम्** । प्रकृतितद्गुणसहितवेदनमशुद्धवेदनं स्यादिति शङ्कायाम्'एनं वेत्ति'इत्यनेनाभिप्रेतमाह—**यथावद्विवेकेनजानातीति** । [१]उच्छास्त्रप्रवृत्तित्वशङ्काव्युदासाय 'सर्वथा' इत्यनेन नानाविधदेहसंसर्गप्रयुक्तो योगविरोधिविचित्रक्लेशान्वयो विवक्षित इत्यभिप्रायेणाह—**देवमनुष्यादीति**।एतदुक्तं भवति—तत्त्वविदः प्रारब्धकर्मवशात्तदानीन्तनक्लेशानुभवेऽपि नेतरपुरुषसाधर्म्येण जन्मान्तरमनुमातुं शक्यम्—इति । अपिशब्दादक्लिष्टवृत्तिषु कैमुत्यं सूचितम् । 'नजायते म्रियते' इत्यनेनैव आत्मस्वरूपस्य जन्माभाव उक्तः ; अतोऽत्र तत्प्रसङ्गाभावात्तत्र भूयश्शब्दानन्वयाच 'सदसद्योनिजन्मसु' इति प्रसक्तदेहसंसर्गलक्षणजनिरेव निषिध्यत इत्यभिप्राये-

प्र-पा ॥ १. असच्छास्त्र. पा ॥ २. कठ. १-२-१८ ॥

शं॥उपद्रष्टृत्वादिलक्षणः आत्मा इति परमात्मा । सः अतः 'परमात्मा' इत्यनेन शब्देन च अपि उक्तः कथितः श्रुतौ । क्व असौ ?—अस्मिन् देहे पुरुषः परः अव्यक्तात्, 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति यः वक्ष्यमाणः ॥ २२॥

'क्षेत्रज्ञं चापि मां विद्धि' इति उपन्यस्तः, व्याख्याय उपसंहृतश्च, तम् एतं यथोक्तलक्षणम् आत्मानम्—यः एवं यथोक्तेन प्रकारेण वेत्ति पुरुषं साक्षात् आत्मभावेन 'अयम् अहम् अस्मि' इति, प्रकृतिं च यथोक्ताम् अविद्यालक्षणां गुणैः स्वविकारैः सह निवर्तिताम् अभावम् आपादितां विद्यया,सर्वथा सर्वप्रकारेण वर्तमानोऽपि न सः भूयः पुनः पतिते अस्मिन् विद्वच्छरीरे देहान्तराय न अभिजायते न उत्पद्यते, देहान्तरं न गृह्णाति इत्यर्थः । अपिशब्दात् किमु वक्तव्यं स्ववृत्तस्थो न जायते इति अभिप्रायः ॥

आ॥इति च। प्रातिबिम्ब्येन सोऽस्मि भृत्यश्चेति भावना । तथाह्ययास्यशाखायां—'भृत्यश्चाहं प्रातिबिम्ब्येन सोऽस्मीत्येवं ह्युपास्यः परमः पुमान् सः' इति । प्रातिबिम्ब्यं च तत्साम्यमेव ॥ २२ ॥

ज॥तत्कथमुपचारेणाहंब्रह्मोपासनमित्यतोऽत्रापि भेदज्ञानसाहित्यमस्तीति सप्रमाणकमाह-**प्रतिबिम्बेने**ति।ननु बिम्बत्वमङ्गीकृतं चेदैक्यमेवापन्नमित्यत आह—**प्रातिबिम्ब्यंचेति**। तदधीनत्वं च ग्राह्यम्, तदीयोऽहमित्युक्तत्वात् । एवशब्दस्त्वैक्यस्य व्यवच्छेदार्थः । एतेन 'क्षेत्रज्ञं चापि मां विद्धि' इत्यादेरपव्याख्यानमपास्तं भवति ॥ २२ ॥

रा॥क्लिष्टप्रकारेण वर्तमानोऽपि. न भूयोऽभिजायते-न भूयः प्रकृत्या संसर्गमर्हति,अपरिच्छिन्नज्ञानलक्षणमपहतपाप्मानमात्मानं तद्देहावसानसमये प्राप्नोतीत्यर्थः ॥ २३ ॥

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ २४

ता॥णाह-न भूयः प्रकृत्या संसर्गमर्हतीति। प्रलयाद्यवस्थासु विनष्टदेहस्य देहानन्तरमेव देहसंबन्धलक्षणजन्यभावेऽपि पुनर्देहसंबन्धयोग्यतास्ति, अस्य तु ज्ञानाग्निदग्धकर्मत्वात् सापि नास्तीत्यभिप्रायेणार्हतिशब्दः । अनर्हतामेव व्यञ्जयन् पुनर्भवादिरूपानिष्टनिवृत्तेरर्थादिष्टप्राप्तिपर्यन्ततामाह—**अपरिच्छिन्नेति।** अज्ञानस्य कर्मणश्च निश्शेष विनाशात् नहि देहसंबन्धयोग्यतेत्यभिप्रायेण - **अपरिच्छिन्नज्ञानलक्षणमपहतपाप्मानमिति** विशेषणद्वयम् । भूयश्शब्दाभिप्रेतमाह—**तद्देहावसानसमय** इति॥२३॥

---

शां॥ननु—यद्यपि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माभाव उक्तः, तथापि प्राक् ज्ञानोत्पत्तेः कृतानां कर्मणाम्, उत्तरकालभाविनां च. यानि च अतिक्रान्तानेकजन्मकृतानि तेषां च, फलम् अदत्त्वा नाशो न युक्त इति, स्युः त्रीणि जन्मानि, कृतविप्रणाशो हि न युक्त इति, यथा फले प्रवृत्तानाम् आरब्धजन्मनां कर्मणाम्। न च कर्मणां विशेषः अवगम्यते। तस्मात् त्रिप्रकाराण्यपि कर्माणि त्रीणि जन्मानि आरभेरन् ; संहतानि वा सर्वाणि एकं जन्म आरभेरन् ! अन्यथा कृतविप्रणाशे सर्वत्र अनाश्वासप्रसङ्गः, शास्त्रानर्थक्यं च स्यात् । इत्यतः इदम् अयुक्तम् उक्तं 'न स भूयोऽभिजायते' इति ॥

न ; ' क्षीयन्ते चास्य कर्माणि ' 'ब्रह्म वेद ब्रह्मैव भवति' 'तस्य तावदेव चिरम्' 'इषीकतूलवत् सर्वाणि कर्माणि प्रदूयन्ते' इत्यादिश्रुतिशतेभ्यः । इहापि च उक्तः 'यथैधांसि' इत्यादिना सर्वकर्मदाहः, वक्ष्यति च । उपपत्तेश्च—अविद्याकामक्लेशबीजनिमित्तानि हि कर्माणि जन्मान्तराङ्कुरम् आरभन्ते; इहापि च 'साहङ्काराभिसन्धीनि कर्माणि फलारम्भकाणि न इतराणि' इति तत्रतत्र भगवता उक्तम् । ' बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः' इति च ॥

अस्तु तावत् ज्ञानोत्पत्तेः उत्तरकालकृतानां कर्मणां ज्ञानेन दाहः, ज्ञानसहभावित्वात् । न तु इह जन्मनि ज्ञानोत्पत्तेः प्राक् कृतानां कर्मणाम् अतीतानेकजन्मकृतानां च दाहः युक्तः । न, 'सर्वकर्माणि' इति विशेषणात् । ज्ञानोत्तरकालभाविनामेव सर्वकर्मणाम् इति चेत्—न ; सङ्कोचे कारणानुपपत्तेः । यत्तु उक्तं 'यथा वर्तमानजन्मारम्भकाणि कर्माणि न क्षीयन्ते फलदानाय प्रवृत्तानि सत्यपि ज्ञाने, तथा अनारब्धफलानामपि कर्मणां क्षयो न युक्तः' इति—तत् असत् । कथं ?—तेषां मुक्तेषुवत् प्रवृत्तफलत्वात् । यथा पूर्वं लक्ष्यवेधाय मुक्तः इषुः धनुषः लक्ष्यवेधोत्तरकालमपि आरब्धवेगक्षयात् पतनेनैव निवर्तते, एवं शरीरारम्भकं कर्म शरीरस्थितिप्रयोजने निवृत्तेऽपि, आ संस्कारवेगक्षयात् पूर्ववत् प्रवर्तते एव। यथा स एव इषुः प्रवृत्तिनिमित्तानारब्धवेगस्तु अमुक्तो धनुषि प्रयुक्तोऽपि उपसंह्रियते, तथा अनारब्धफलानि कर्माणि स्वाश्रयस्थान्येव तत्त्वज्ञानेन निर्बीजीक्रियन्ते इति, पतिते अस्मिन् विद्वच्छरीरे 'न स भूयोऽभिजायते' इति युक्तमेव उक्तमिति सिद्धम् ॥ २३ ॥

रा॥केचित्-निष्पन्नयोगा आत्मनि-शरीरेऽवस्थितमात्मानम् आत्मना-मनसा ध्यानेन-योगेन पश्यन्ति; अन्ये अनिष्पन्नयोगाः, सांख्येन योगेन-ज्ञानयोगेन, योगयोग्यं मनः कृत्वा आत्मानं पश्यन्ति ; अपरे - ज्ञानयोगानधिकारिणः तदधिकारिणश्च सुकरोपायसक्ताः, व्यपदेश्याश्च, कर्मयोगेनान्तर्गतज्ञानेन मनसा योगयोग्यतामापाद्यात्मानं पश्यन्ति॥ २४ ॥

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपिचातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५

ता॥उक्तमेवार्थं श्लोकद्वयेन विवृण्वन्नात्मज्ञानस्य पर्वभेदानाह—ध्यानेनेति। अधिकरणतया, कर्मतया, करणतयाच निर्देशादात्मशब्दत्रयमिह भिन्नविषयमिति तत्तदुचितमाह—आत्मनि शरीरइत्यादिना। उत्तरोत्तरापकृष्टपर्वनिर्देशक्रमात् ध्यानशब्दोऽत्र साख्यादप्युत्कृष्टं साक्षाद्योगाख्यं पर्वाभिधत्ते। अनिष्पन्नयोगा इत्यादि पर्वक्रमप्रदर्शनम् आत्मदर्शने स्वतन्त्रोपायत्वशङ्काव्युदासार्थम्। 'ज्ञानयोगेन साख्यानाम्' इति पूर्वोक्तानुसारेण 'साख्येन योगेन' इत्यस्यार्थमाह—ज्ञानयोगेनेति। 'अपरे' इत्यनेन प्रागुक्तकर्मयोगाधिकारिवर्गविवक्षेत्यभिप्रायेणाह—ज्ञानयोगानधिकारिणइत्यादिना॥ २४ ॥

शं॥अत्र आत्मदर्शने बहवः उपायविकल्पाः इमे ध्यानादयः उच्यन्ते—ध्यानेन—ध्यानं नाम शब्दादिभ्यो विषयेभ्यः श्रोत्रादीनि करणानि मनसि उपसंहृत्य, मनश्च प्रत्यक्चेतयितरि, एकाग्रतया यत् चिन्तनं, तत् ध्यानम् ; तथा, 'ध्यायतीव बकः' 'ध्यायतीव पृथिवी...ध्यायन्तीव पर्वताः' इति उपमोपादानात् । तैलधारावत् सन्ततः अविच्छिन्नप्रत्ययो ध्यानं; तेन ध्यानेन आत्मनि बुद्धौ पश्यन्ति आत्मानं प्रत्यक्चेतनम् आत्मना स्वेनैव प्रत्यक्चेतनेन ध्यानसंस्कृतेन अन्तःकरणेन केचित् योगिनः । अन्ये सांख्येन योगेन—सांख्यं नाम 'इमे सत्त्वरजस्तमांसि गुणाः, तद्व्यापारसाक्षिभूतः नित्यः गुणविलक्षणः आत्मा' इति चिन्तनम्; एषः सांख्यो योगः, तेन 'पश्यन्ति आत्मानम् आत्मना' इति अनुवर्तते । कर्मयोगेन—कर्मैव योगः, ईश्वरार्पणबुद्ध्या अनुष्ठीयमानं योगार्थत्वात् योगः उच्यते गुणतः ; तेन सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण च अपरे ॥ २४ ॥

आ॥सांख्येन वेदोक्तभगवत्स्वरूपज्ञानेन । कर्मिणामपि श्रुत्वा ज्ञात्वा ध्यात्वा दृष्टिः । श्रावकाणां च ज्ञात्वा ध्यात्वा । सांख्याना च ध्यात्वा । तथा च गौपवनश्रुतिः—'कर्मकृच्चापि तच्छ्रुत्वा ज्ञात्वा ध्यात्वाऽनुपश्यति । श्रावकोऽपि तथा ज्ञात्वा ध्यात्वा ज्ञान्यपि पश्यति । अन्यथा तस्य दृष्टिर्हि कथंचिन्नोपजायते' इति । अन्य इत्यशक्तानामप्युपायदर्शनार्थम् ॥ २४ ॥

ज॥'अन्ये सांख्येन योगेन' इत्यत्र कापिलतन्त्रोक्तप्रकृतिपुरुषविवेकज्ञानं सांख्यमिति व्याख्यानमसत्, कापिलतन्त्रस्यावैदिकस्यात्र ग्रहणायोगात्, तस्य भगवद्दर्शने प्रधानसाधनत्वायोगाच्चेति भावेनान्यथा व्याचष्टे—सांख्येनेति । ज्ञानेन परोक्षज्ञानेन। ध्यानेनेत्यत्र ध्यानादीनां केवलानामेवेश्वरदर्शनसाधनत्वमुच्यत इत्यन्यथाप्रतीतिनिरासार्थमाह—कर्मिणामिति । दृष्टिः प्राप्येति शेषः । पाठक्रमादर्थक्रमस्य प्राधान्याद्व्युत्क्रमेणोक्तिः । कुत एतदित्यत आह—तथाचेति । ध्यात्वेत्येतज्ज्ञान्यपीत्युत्तरेणापि संबध्यते। ननु सर्वत्र सर्वस्य संयोजने सत्येक एवायं प्रकारः स्यात्; तथा च 'केचिदन्ये परे' इत्युक्तमयुक्तं स्यादित्यत आह—अन्यइति । ध्यानादावुत्तरोत्तरसाधने साक्षादशक्तानामपि तत्तदुपायज्ञानादिप्रदर्शनार्थमवस्थाभेदमाश्रित्यान्य इत्याद्युक्तमित्यर्थः ॥ २४ ॥

रा॥अन्ये तु—कर्मयोगादिष्वात्मावलोकनसाधनेष्वनधिकृता अन्येभ्यः-तत्त्वदर्शिभ्यो ज्ञानिभ्यः श्रुत्वा कर्मयोगादिभिरात्मानमुपासते ; तेऽप्यात्मदर्शनेन मृत्युमतितरन्ति ; ये श्रुतिपरायणाः—श्रवणमात्रनिष्ठाः, एते च श्रवणनिष्ठाः पूतपापाः क्रमेण कर्मयोगादिकमारभ्यातितरन्त्येव मृत्युम् ; अपिशब्दाच्च पर्वभेदोऽवगम्यते ॥ २५ ॥

अथ प्रकृतिसंसृष्टस्यात्मनो विवेकानुसन्धानप्रकारं वक्तुं सर्वं स्थावरं जङ्गमं च सत्त्वं चिदचित्संसर्गजमित्याह—

यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६

ता॥अनिष्पन्नकर्मयोगानां मुमुक्षूणां कर्मयोगोपक्रमदशोच्यते । 'अन्येतु 'इति तुशब्देन, 'एवमजानन्तः ' इत्यनेन च स्वविवेचनशक्त्याद्यभावात्कर्मयोगादिष्वनधिकृतत्वं द्योतितम् । ' अन्येभ्यः 'इत्यनेन उपदेष्टत्वविषयेण ' उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ' इति प्रागुक्ता विवक्षिता इत्यभिप्रायेणोक्तं—तत्त्वदर्शिभ्यो ज्ञानिभ्यइति । ' तेऽपि ' इत्यादिना कर्मयोगोपक्रमेऽप्यसमर्था निर्दिश्यन्त इत्यभिप्रायेणाह—तेप्यात्मेति । यद्वास्य वाक्यस्य पूर्वेणान्वयः ; ' श्रुतिपरायणाश्च ' इत्यन्वयेन वाक्यान्तरम् ; तद्दर्शयति—ये श्रुतिपरायणाइति। श्रुतिः परमयनं निष्ठा येषां ते श्रुतिपरायणाः ; श्रुतिपरायणशब्दश्श्रुत्वोपासीनेभ्यो व्यवच्छेदकः ; अन्यथा श्रुत्वेत्युक्तेऽपि श्रुतिपरायणशब्दस्य नैरर्थक्यप्रसङ्गादित्यभिप्रायेणाह—श्रवणमात्रनिष्ठाइति । अत्र श्रवणनिष्ठायाः पावनत्वरूपं प्राशस्त्यं विवक्षितमित्याह—श्रवणनिष्ठाः पूतपापा इति । क्रमेणेत्यादिना कर्मयोगादिविधिवैयर्थ्यप्रसङ्गपरिहारः। अत्र पृथगुपायान्तरपरत्वं किं न स्यादित्यत्राह—अपिशब्दादिति । अपिशब्देनान्येषां कैमुत्यमेषामपकृष्टपर्वनिष्ठत्वं च सूचितमिति भावः ॥ २५ ॥

एवमात्मदर्शनमुक्तं, तदर्थं ' समं सर्वेषु ' इत्यादिभिःश्लोकैः प्रकृतिपुरुषयोर्विवेकानुसंधानप्रकारो वक्ष्यते । सचाविविक्तप्रतीतौ सत्यामेवोपदेष्टव्यः, अन्यथा निष्प्रयोजनत्वात् । साच न दोषमन्तरेण घटते ; सच दोषोऽत्र भोक्तृत्वभोगायतनत्वनिर्वाहकस्संसर्गविशेषः ; तदिदं ' यावत्संजायते ' इति श्लोकेनोच्यत इति संगतिमाह—अथेति। सर्वशब्देन यावच्छब्दस्यात्र साकल्यपरत्वमुक्तम्। यावच्छब्दस्य यच्छब्दार्थत्वेन व्याख्यानमवाचकत्वान्मन्दप्रयोजनत्वाच्चायुक्तमिति भावः । सत्त्वशब्दोऽत्र जन्तुपर. ; ' द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इति पाठात्। वृक्षगुल्मलतावीरुत्तृणादिषु चैतन्यविकासाभावमात्रेण जैनप्रक्रियया केवलाचेतनत्वशङ्कानिरासायात्र स्थावरशब्दः । स्थावरजङ्गमत्व-

प्र-पा॥ १.गी. ४-३४ ॥ २. नामलिङ्गानुशासने. तृतीयकाण्डे. नानार्थवर्गे ॥

शं॥अन्ये तु एतेषु विकल्पेषु अन्यतमेनापि एवं यथोक्तम् आत्मानम् अजानन्तः अन्येभ्यः आचार्येभ्यः श्रुत्वा'इदम् एवं चिन्तय'इति उक्ताः उपासते श्रद्दधानाः सन्तः चिन्तयन्ति। तेऽपि च अतितरन्त्येव अतिक्रामन्त्येव मृत्युम्—मृत्युयुक्तं संसारम् इत्येतत्—श्रुतिपरायणाः श्रुतिः श्रवणं परम् अयनं गमनं मोक्षमार्गप्रवृत्तौ परं साधनं येषां ते श्रुतिपरायणाः, केवलं परोपदेशप्रमाणाः स्वयं विवेकरहिताः इत्यभिप्रायः । किमु वक्तव्यं 'प्रमाणं प्रति स्वतन्त्राः विवेकिनः मृत्युम् अतिक्रामन्ति' इति ॥ २५ ॥

'क्षेत्रज्ञं चापि मां विद्धि' इति क्षेत्रज्ञेश्वरैकत्वविषयं ज्ञानं मोक्षसाधनं ' यज्ज्ञा-

रा॥यावत् स्थावरजङ्गमात्मना सत्त्वं जायते, तावत् क्षेत्रक्षेत्रज्ञयोरितरेतरसंयोगादेव जायते—संयुक्तमेव जायते, न त्वितरेतरवियुक्तमित्यर्थः ॥ २६ ॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७

ता॥योर्बाल्ययौवनवार्धकादिवदयावच्छरीरभावित्वाभावज्ञापनाय-**स्थावरजङ्गमात्मने**त्युक्तम् । क्षेत्रक्षेत्रज्ञाभ्यां सहान्यस्य संयोगशङ्काव्युदासायोक्तम्—**इतरेतरसंयोगा**दिति । विधेयांशं दर्शयितुं-**संयोगादे**वेत्युक्तम् । मातापितृसंसर्गात्पुत्रोत्पत्तिवत्क्षेत्रक्षेत्रज्ञसंयोगात्ततोऽन्यत्सत्त्वं जायेतेत्यत्राह—**संयुक्तमे**वेति । पृथक्सिद्धप्रसिद्धक्षेत्रक्षेत्रिसंबन्धव्यवच्छेदायाह—**न**त्विति । 'तद्विद्धि' इति तच्छब्देन जन्मनः परामर्शः ॥ २६ ॥

---

शं॥त्वाऽमृतमश्नुते' इत्युक्तम्,तत् कस्मात् हेतोरिति? तद्धेतुप्रदर्शनार्थं श्लोकः आरभ्यते। यस्मात्—यावत् यत् किञ्चित् सञ्जायते समुत्पद्यते सत्त्वं वस्तु—किम् अविशेषेण इति ? नेत्याह—स्थावरं जङ्गमं च, क्षेत्रक्षेत्रज्ञसंयोगात् तत् जायते इत्येवं विद्धि जानीहि हे भरतर्षभ ॥

कः पुनः अयं क्षेत्रक्षेत्रज्ञयोः संयोगः अभिप्रेतः ? न तावत् रज्ज्वेव घटस्य अवयवसंश्लेषद्वारकः सम्बन्धविशेषः संयोगः क्षेत्रेण क्षेत्रज्ञस्य सम्भवति, आकाशवत् निरवयवत्वात् । नापि समवायलक्षणः, क्षेत्रक्षेत्रज्ञयोः इतरेतरकार्यकारणभावानभ्युपगमात् इति ।

उच्यते—क्षेत्रक्षेत्रज्ञयोः विषयविषयिणोः भिन्नस्वभावयोः इतरेतरतद्धर्माध्यासलक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनः, रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावात् अध्यारोपितसर्परजतादिसंयोगवत् । सः अयम् अध्यासस्वरूपः क्षेत्र क्षेत्रज्ञयोः संयोगः मिथ्याज्ञानलक्षणः । यथाशास्त्रं क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राक् दर्शितरूपात् क्षेत्रात्, मुञ्जादिव इषीकां, यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य 'न सत्तन्नासदुच्यते' इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्मस्वरूपेण यः पश्यति, क्षेत्रं च मायानिर्मितहस्तिहर्म्यादिवत् स्वप्नदृष्टवस्तुवत् गन्धर्वनगरादिवत् 'असदेव सदिव अवभासते' इति एवं निश्चितविज्ञानः यः, तस्य यथोक्तसम्यग्दर्शनविरोधात् अपगच्छति मिथ्याज्ञानम् । तस्य जन्महेतोः अपगमात् 'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैस्सह' इत्यनेन 'विद्वान् भूयः न अभिजायते' इति यत् उक्तं तत् उपपन्नम् उक्तम् ॥ २६ ॥

---

आ॥पुनश्च प्रकृतिपुरुषेश्वरस्वरूपं साम्यादिधर्मयुक्तमाह—यावदित्यादिना ॥ २६ ॥

---

ज॥'तत्क्षेत्रं यच्च'इत्यादिना प्रतिज्ञातस्य सर्वस्योक्तत्वात्किमुत्तरेणेत्यत आह—**पुनश्चे**ति । उक्तस्य पुनर्वचने को हेतुरित्यत उक्तं—**साम्यादी**ति । ईश्वरधर्मस्योभयधर्मात्प्राधान्येन साम्यग्रहणम् । तच्च प्रकृतिपुरुषधर्मकथनं यादृगिति प्रतिज्ञातेऽन्तर्भवति।ईश्वरधर्मकथनं च यत्प्रभाव इति ॥ २६ ॥

रा॥एवमितरेतरयुक्तेषु सर्वेषु भूतेषु देवादिविषमाकारात् *वियुक्तं तत्रतत्र तत्तद्देहेन्द्रियमनांसि प्रति परमेश्वरत्वेन स्थितमात्मानं ज्ञातृत्वेन समानाकारं तेषु देहादिषु विन

ता॥अथ समत्वविषमत्वनियन्तृत्वनियाम्यत्वनित्यत्वानित्यत्वैर्द्वयोर्विवेकानुसंधानमभिधाय तदेव तत्त्वाध्यवसायरूपत्वेन परमपुरुषार्थहेतुतया प्रशंसति—'समम्' इति श्लोकेन। 'क्षेत्रक्षेत्रज्ञसंयोगात्' इत्यत्र शंकरेणोक्तम् 'आकाशवन्निरवयवतया अवयवसंश्लेषलक्षणसंयोगासंभवात्क्षेत्रक्षेत्रज्ञयोरितरेतरकार्यकारणभावानभ्युपगमेन समवायासंभवाच्च विषयविषयिणोस्तयोरितरेतरधर्माध्यासलक्षणस्संयोगः . तन्निवर्तनं च सम्यग्दर्शनं 'समं सर्वेषु' इत्यादिनोच्यते' इति, तदेतद्बालिशभाषितम्, निरवयवस्यापि संयोगसंभवात्;युतसिद्धयोस्संबन्धस्संयोगः' इति हि तं लक्षयन्ति ; स च निरवयवयोस्सावयवयोर्निरवयवसावयवयोश्च संभवति । तन्मतेच अध्यासानुपपत्त्यादयः प्रपञ्चिताः । 'सर्वेषु भूतेषु' इति देवमनुष्यादिरूपवैषम्यं विवक्षितम् । यथा मृण्मयहिरण्मयादिघटोपात्तस्यापि गङ्गोदकस्य तत्तत्र स्थितिमात्रमेव, न पुनर्मृण्मयत्वादिसिद्धिः; तथात्मनोऽपि देवमनुष्यादिदेहेषु स्थितिमात्रमेव : नतु क्ष्माप्रतिक्षिप्तकाष्ठादिलवणत्वन्यायेन स्वरूपेण देवमनुष्यत्वादिवैषम्याश्रयत्वमिति 'तिष्ठन्तम्' इत्यस्याभिप्रायमाह—देवादिविषमाकाराद्वियुक्तमिति । यद्वा 'समम्' इति वचनादर्थाक्षिप्तं वैषम्यनिवृत्तिकथनमिदम्: 'तिष्ठन्तम्' इति तु परत्रान्वेतव्यम् । अतोहि भाष्यते—परमेश्वरत्वेन स्थितमिति । अनीश्वरस्याल्पशक्तेः क्षेत्रज्ञस्य कथं परमेश्वरत्वमित्यत्र पूर्ववत्संकोचमाह—तत्रतत्र तत्तद्देहेन्द्रियमनांसि प्रतीति । देहात्माभिमानिनो हि देहनाशादात्मनाशं मन्यन्ते ; नत्वप्रतीतस्य परमात्मनो नाशम् ; तस्मात् 'अविनश्यन्तम्' इति प्रसक्तविनाशप्रतिषेधार्थपदसमानाधिकरणः परमेश्वरशब्दः प्रक्रान्तविषय इति भावः । समशब्देन न बाह्यदेवत्वादिवैषम्यनिवृत्तिमात्रं विवक्षितम्; अपितु 'गवामनेकवर्णानां क्षीरस्य त्वेकवर्णता । क्षीरवत्पश्यति ज्ञानं लिङ्गिनस्तु गवां यथा' इति श्रुत्यनुसारेणात्मनां स्वरूपेषु मिथोवैषम्यनिवृत्तिरपि । तच्च साम्यं कथंभूतमिति शङ्कायाम् 'एतद्यो वेत्ति' इति प्रक्रमानुसारेणाह—ज्ञातृत्वेन समानाकारमिति । ज्ञानत्वादेरप्युपलक्षणमेतत् । 'येन सर्वमिदं ततम्' इत्या-

प्र-पा ॥ *१. विविक्त. पा ॥

२. अमृतबि-न्दूपनिषदि, त्रिपुरातापिन्युपनिषदि च ॥ 'गवामनेकवर्णानां.. लिङ्गिनस्तु गवां यथा ॥ घृतमिव पयसि निगूढं भूतेभूते वसति विज्ञानम्। सततं मनसि मथयितव्यं मनो मन्थानभूतेन'॥ द्रविडोपनिषद्भाष्यकारैस्तु अष्टमशतक व्याख्याने (८ ५. १०)ब्रह्मविदुपनिषदि 'गवाम्' इत्यनुगृहीतम् । 'क्षीरवत्पश्यति ज्ञानम्' इत्यत्र ज्ञानशब्देन जीवात्मोच्यते । लिङ्गिनः देहिनः । वसति विज्ञानं-परमात्मा ॥

३. गी. १३ १ ॥ ४. गी. १८-४६ ॥

शं॥'न स भूयोऽभिजायते' इति सम्यग्दर्शनफलम् अविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्माभावः उक्तः । जन्मकारणं च अविद्यानिमित्तकः क्षेत्रक्षेत्रज्ञसंयोगः उक्तः यतः, अतः तस्याः अविद्यायाः निवर्तकं सम्यग्दर्शनम् उक्तमपि पुनः शब्दान्तरेण उच्यते—समं निर्विशेषं तिष्ठन्तं स्थितिं कुर्वन्तं, क्व? सर्वेषु समस्तेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु, कं? परमेश्वरं देहेन्द्रियमनोबुद्ध्यव्यक्तात्मनः अपेक्ष्य परमश्च असौ ईश्वरश्च ईशनशीलश्च इति परमेश्वरः, तं सर्वेषु भूतेषु समं तिष्ठन्तम् । तानि विशिनष्टि 'विनश्यत्सु' इति तं च परमेश्वरम् 'अविनश्यन्तं' इति, भूतानां परमेश्वरस्य च अत्यन्तवैलक्षण्यप्रदर्शनार्थम् । कथं? सर्वेषां हि भावविकाराणां जनिलक्षणः भावविकारो मूलम्, जन्मोत्तरकालभाविनः अन्ये सर्वे भावविकाराः विनाशान्ताः : विनाशात्

रा॥ इयत्तु विनाशानर्हस्वभावेनाविनश्यन्तं यः पश्यति, स पश्यति—स आत्मानं यथावद्-वस्थितं पश्यति ; यस्तु देवादिविषमाकारेणात्मानमपि विषमाकारं जन्मविनाशादियुक्तं च पश्यति, स नित्यमेव संसरतीत्यभिप्रायः॥ २७॥

**समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८**

सर्वत्र-देवादिशरीरेषु तत्तच्छेषित्वेनाधारतया नियन्तृतयाच स्थितमीश्वरम्-आत्मानं देवादिविषमाकारवियुक्तं ज्ञानैकाकारतया समं पश्यन् आत्मना—मनसा स्वम् आत्मा-

ता॥ दिना प्रपञ्चितानविनाशित्वहेतून् स्मारयति—**विनाशानर्हस्वभावेनेति**। 'यः पश्यति स पश्यति' इत्यनयोरनतिशयितार्थतया नैरर्थक्यम् उद्देश्योपादेयभङ्गश्चेत्यत्राह—**स आत्मानं यथावदवस्थित-मिति**। इतरे तु पीतशङ्खादिदर्शिवद्विपरीतदर्शितया पश्यन्तोऽपि न पश्यन्तीति भावः। 'स पश्यति' इति प्रशंसात्र परमपुरुषार्थलाभादिनिबन्धना । व्यतिरेकनिन्दाचात्र फलितेत्यभिप्रायेणाह—**यस्त्विति** ॥

उक्तमुपपादयति 'समं पश्यन्' इति श्लोकेन। 'हि' इति हेतौ । प्रस्तुतं समदर्शनं ह्यत्र फलद्वारा स्तूयते 'सर्वत्रावस्थितो देहे' इति वक्ष्यमाणावेक्षणेन 'सर्वत्र' इति शब्दस्य विवक्षितमाह—**देवा-दिशरीरेष्विति** । 'भर्ता भोक्ता महेश्वरः' इति पूर्वोक्तानुरोधेन 'समवस्थितम्' इत्यत्रोपसर्गसामर्थ्य-लब्धस्थितिवैशेष्यं व्यनक्ति—**तत्तच्छेषित्वेनेत्या**दिना। अतएव हि 'स्थितम्' इत्येतावद्विभज्य निर्दिष्टम्। ईश्वरशब्देनापि शेषित्वनियन्तृत्वे सिद्धे । अत्रापीश्वरशब्दः पूर्वोक्तन्यायेनावच्छिन्नविषयोऽनुसंधेयः । देहात्माभिमानप्रसक्तदेवादिवैषम्यप्रतिषेधार्थोऽत्र समशब्द इत्यभिप्रायेणाह—**देवादिविषमाकार-वियुक्तमिति** । 'क्षेत्रक्षेत्रज्ञसंयोगात्' 'यदा भूतपृथग्भावम्' इति पूर्वापरपरामर्शाद्देहसंबन्धसिद्ध-वैषम्यनिवृत्तिर्विवक्षितेति भावः। तृतीयान्त आत्मशब्दोऽत्र करणविभक्त्यन्तत्वादौचित्याच्च मनो-विषयः ; द्वितीयान्तस्तु हिंसाकर्मत्वसामर्थ्यात्संसार्यात्मविषय इति ज्ञापयति—**मनसा स्वमात्मानमि-**

प्र·पा ॥ १. गी. १३-३२ ॥ | २. गी. १३-२२ ॥

शं॥ परो न कश्चित् अस्ति भावविकारः, भावाभावात्। सति हि धर्मिणि धर्माः भवन्ति। अतः अन्त्यभावविकाराभावानुवादेन तत्पूर्वभाविनः सर्वे भावविकाराः प्रतिषिद्धा भवन्ति सह तत्कार्यैः। तस्मात् सर्वभूतैः वैलक्षण्यम् अत्यन्तमेव परमेश्वरस्य सिद्धं, निर्विशेषत्वम्, एकत्वं च । यः एवं यथोक्तं परमेश्वरं पश्यति, सः पश्यति ॥

ननु सर्वोपि लोकः पश्यति, किं विशेषणेन ? इति । सत्यं पश्यति ; किन्तु विपरीतं पश्यति । अतः विशिनष्टि—स एव पश्यतीति । यथा तिमिरदृष्टिः अनेकं चन्द्रं पश्यति, तम् अपेक्ष्य एकचन्द्रदर्शी विशिष्यते—स एव पश्यतीति ; तथा इहापि एकम् अविभक्तं यथोक्तम् आत्मानं यः पश्यति, सः विभक्तानेकात्मविपरीतदर्शिभ्यः विशिष्यते—स एव पश्यतीति । इतरे पश्यन्तोऽपि न पश्यन्ति, विपरीतदर्शित्वात् अनेकचन्द्रदर्शिवत् इत्यर्थः ॥ २७॥

यथोक्तस्य सम्यग्दर्शनस्य फलवचनेन स्तुतिः कर्तव्या, इति श्लोकः आरभ्यते—समं पश्यन् उपलभमानः हि यस्मात् सर्वत्र सर्वभूतेषु समवस्थितं तुल्यतया अवस्थितम् ईश्वरम्, अतीतानन्तरश्लोकोक्तलक्षणम् इत्यर्थः, समं पश्यन् किं ? न हिनस्ति हिंसां न करोति आत्मना स्वेनैव स्वम् आत्मानम् । ततः तदहिंसनात् याति परां प्रकृष्टां

रा॥नं न हिनस्ति-रक्षति,संसारान्मोचयति;ततः-तस्मात् ज्ञातृतया सर्वत्र समानाकारदर्शनात्, परां गतिं याति ; गम्यत इति गतिः. परं गन्तव्यं यथावदवस्थितमात्मानं प्राप्नोति ; देवाद्याकारयुक्ततया सर्वत्र *विषममात्मानं पश्यन् आत्मानं हिनस्ति भवजलधिमध्ये प्रक्षिपति ॥ २८ ॥

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथात्मानमकर्तारं स पश्यति ॥** २९

सर्वाणि कर्माणि 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते' इति पूर्वोक्तरीत्या प्रकृत्या क्रियमाणानीति यः पश्यति, तथा आत्मानं ज्ञानाकारमकर्तारं च यः पश्यति,

ता॥ति।समदर्शिनो हिंसकत्वं नास्तीत्यत्र अविहितप्रतिषिद्धकर्तृत्वस्समदर्शकस्याबाधकत्वमात्रमुक्तं स्यात्; तच्चानर्थकम्; अपिच विषमदर्शिनोऽप्यात्मा नित्यत्वान्न हिंसार्हः; अतोऽत्र 'न हिनस्ति' इत्यनेन किमपि समदर्शनसाध्यं पुरुषेष्टमभिप्रेतमित्याह—**रक्षतीति** । प्रकरणतो वाक्यशेषाच्च रक्षां विशिनष्टि—**संसारादिति**। ततश्शब्दोऽत्र न वाक्यार्थादिपरामर्शी,अनिष्टनिवृत्तेरपि स्वयंफलत्वेनेष्टप्राप्तिहेतुत्वनिर्देशानौचित्यात्; अत उभयकारणं समदर्शनमेव परामृश्यत इत्याह—**तस्मादित्यादिना**। 'परां गतिम्' इति प्राप्यविशेषस्य विवक्षितत्वाद्भावार्थमात्रपरत्वे तदसिद्धेस्तदुचितां व्युत्पत्तिमाह—**गम्यतइतीति** । तदेव विशिनष्टि—**यथावदिति** । प्रकरणं हीदं जीवविषयं समर्थितम्; परगतिशब्दश्च 'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्' इत्यादिषु जीवेऽपि प्रयुक्तचर इति भावः । 'आत्मनि वैषम्यदर्शी तु स्वात्मानं हिनस्ति' इति 'विशेषनिषेधश्शेषाभ्यनुज्ञानार्थः' इति न्यायेन सिद्धमित्याह—**देवाद्याकारेति**।.नित्यस्यात्मस्वरूपस्याच्छेद्यत्वादिस्वभावतया 'कं घातयति हन्ति कम्'इति प्रागुक्तस्य कासौ हिंसेत्यत्राह—**भवजलधीति** । अनेनापि श्लोकेन प्रकृतिपुरुषयोस्स्वाकारानुदर्शनद्वारा संसारहेतुत्वमोक्षहेतुत्वाभ्यामपि विवेक उक्तो भवतीत्यभिप्रायः ॥ २८ ॥

अथ साक्षात्क्रियाश्रयत्वतदभावादिवैधर्म्यमुच्यते—'प्रकृत्यैव' इति श्लोकद्वयेन । अत्र कर्माण्याकुञ्चनप्रसारणादीनि। प्रकृत्या क्रियमाणानां कर्मणां स्वरूपदर्शनमात्रं विद्वदविद्वत्साधारणम्; विदुषस्तु प्रकृत्या क्रियमाणत्वदर्शनं विशेष इत्युपादेयांशविशदीकरणाय-**क्रियमाणानीतीति** इति करणम् । अकर्तृत्वमात्मशब्दाभिप्रेतेन शुद्धाकारेण स्थापयति—**ज्ञानाकारमिति**।' ज्ञाताकारम्' इति वा पाठः।

प्र-पा ॥ *विषमाकार- पा ॥ १. गी. ८-२१ ॥ २. गी. २-२१ ॥

शं॥गतिं मोक्षाख्याम्।ननु नैव कश्चित् प्राणी स्वयं स्वम् आत्मानं हिनस्ति। कथम् उच्यते अप्राप्तं 'न हिनस्ति' इति ? यथा 'न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्यः' इत्यादि । नैष दोषः, अज्ञानाम् आत्मतिरस्करणोपपत्तेः । सर्वो हि अज्ञः अत्यन्तप्रसिद्धं साक्षात् अपरोक्षम् आत्मानं तिरस्कृत्य अनात्मानम् आत्मत्वेन परिगृह्य, तमपि धर्माधर्मौ कृत्वा उपात्तम् आत्मानं हत्वा अन्यम् आत्मानम् उपादत्ते नवं, तमपि हत्वा अन्यम्, इत्येवम् उपात्तमुपात्तम् आत्मानं हन्ति, इति आत्महा सर्वः अज्ञः । यस्तु परमार्थात्मा, असावपि सर्वदा अविद्यया हत एव, विद्यमानफलाभावात्, इति सर्वे आत्महनः एव अविद्वांसः। यस्तु इतरः यथोक्तात्मदर्शी, सः उभयथाऽपि आत्मना आत्मानं न हिनस्ति न हन्ति । ततः याति परां गतिं, यथोक्तं फलं तस्य भवति इत्यर्थः ॥ २८ ॥

'सर्वभूतस्थम् ईश्वरं समं पश्यन् न हिनस्ति आत्मना आत्मानम्' इति उक्तम् । तत् अनुपपन्नं स्वगुणकर्मवैलक्षण्यभेदभिन्नेषु आत्मसु, इत्येतत् आशङ्क्य आह—प्रकृत्या—

रा॥तस्य प्रकृतिसंयोगस्तदधिष्ठानं तज्जन्यसुखदुःखानुभवश्च कर्मरूपाज्ञानकृतानीति च यः पश्यति, स आत्मानं यथावदवस्थितं पश्यति ॥ २९ ॥

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥** ३०

**प्रकृतिपुरुषतत्त्वद्वयात्मकेषु देवादिषु सर्वेषु भूतेषु सत्सु तेषां देवत्वमनुष्यत्वह्रस्वत्वदीर्घत्वादिपृथग्भावमेकस्थम्—एकतत्त्वस्थं, प्रकृतिस्थं यदा पश्यति, नात्मस्थम्, तत**

ता॥कथं तर्हि शास्त्रवश्यत्वतत्फलभोक्तृत्वादिकमित्यत्राह—**तस्येति**।सर्वस्यास्य चक्रवत्परिवर्तमानोपाधिप्रवाहनिबन्धनत्वान्न कश्चिद्दोष इति भावः ॥ २९ ॥

अथ परिणामित्वापरिणामित्वलक्षणं वैषम्यमुच्यते—'यदा'इतिश्लोकेन । एकशब्देनान्यतरस्य निर्धारणार्थं भूतशब्दोऽत्र तिलतैलवन्मिथश्श्लिष्टचिदचित्समुदायपर इत्यभिप्रायेणाह—**प्रकृतिपुरुषेति** । पृथग्भावशब्दोऽत्र जातिरूपं गुणादिरूपं च भेदमविशेषात्संगृह्णाति । स च सर्वोऽप्यवस्थान्तरापत्तिरूपतया निर्विकारात्पुरुषाद्भेदः, तदाह—**देवत्वमनुष्यत्वह्रस्वत्वदीर्घत्वादिपृथग्भावमिति** । एकशब्दोऽत्र प्रकृतयोरन्यतरनिर्धारणार्थ इत्याह—**एकतत्त्वस्थमिति** । किं तदेकमित्यत्राह—**प्रकृतिस्थमिति** । यद्यात्मा अत्रैकशब्देन विवक्षितः,तदा तस्यैव देवादिवैषम्यदर्शनमुक्तं स्यात्; तच्च 'समं पश्यन्' इत्याद्युपक्रमेण'पण्डिताःसमदर्शिनः' इत्यादिस्मृत्यन्तरोक्त्याच विरुध्येतेत्यभिप्रायेणाह—**नात्मस्थमिति** । सन्मात्रस्यैकस्यैव ब्रह्मणस्सकलविकल्पसकलपरिणामास्पदत्वमिहोच्यत इति परेषां जल्पाः प्रागेव निरस्ता इतिचाभिप्रायः। 'आत्मा वै पुत्रनामासि'इत्यादिषु योऽयमात्मनः पुत्रादिरूपः परिणामः प्रतीयते, सोऽपि 'अङ्गादङ्गात्सम्भवसि' इत्यादिकमनुसन्दधानस्य प्रकृत्यंशगत एव प्रका-

प्र-पा ॥ १ ॥ ३. मन्त्रप्रश्ने. २. प्रश्ने. १२. खण्डे. ३-वा-

२. कौषीतक्युप ॥ क्यम्; बृ. च. ८ ४-३ ॥

शं॥प्रकृतिः भगवतः माया त्रिगुणात्मिका, 'मायां तु प्रकृतिं विद्यात्' इति मन्त्रवर्णात्, तया प्रकृत्यैव च, न अन्येन, महदादिकार्यकरणाकारपरिणतया कर्माणि वाङ्मनःकायारभ्याणि क्रियमाणानि निर्वर्त्यमानानि सर्वशः सर्वप्रकारैः यः पश्यति उपलभते, तथा आत्मानं क्षेत्रज्ञम् अकर्तारं सर्वोपाधिविवर्जितं,सः पश्यति,सः परमार्थदर्शी इत्यभिप्रायः, निर्गुणस्य अकर्तुः निर्विशेषस्य आकाशस्येव भेदे प्रमाणानुपपत्तिः इत्यर्थः ॥ २९ ॥

पुनरपि तदेव सम्यग्दर्शनं शब्दान्तरेण प्रपञ्चयते—यदा यस्मिन् काले भूतपृथग्भावं भूतानां पृथग्भावं पृथक्त्वम्,एकस्मिन् आत्मनि स्थितम् एकस्थम्,अनुपश्यति शास्त्राचार्योपदेशम् अनु आत्मानं प्रत्यक्षत्वेन पश्यति 'आत्मैव इदं सर्वम्' इति तत एव च विस्तारम् उत्पत्तिं विकासं 'आत्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नम्' इत्येवमादिप्रकारैः

आ॥आत्मानं चाकर्तारं पश्यति ॥ २९ ॥

ज॥प्रकृत्यैव चेत्यत्र यः प्रकृत्यैव च कर्माणि क्रियमाणानि पश्यति, स आत्मानमकर्तारं पश्यतीति कश्चिदन्वयमाह : तदसत्, तथाशब्दवैयर्थ्यापत्तेरिति भावेनान्यथाह—**आत्मानं चेति** । स पश्यति परमेश्वरम् ॥ २९ ॥

रा॥एव—प्रकृतित एवोत्तरोत्तरपुत्रपौत्रादिभेदविस्तारं च यदा पश्यति, तदैव ब्रह्म सम्पद्यते—अनवच्छिन्नं ज्ञानैकाकारमात्मानं प्राप्नोतीत्यर्थः ॥ ३० ॥

**अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१**

अयं परमात्मा देहान्निष्कृष्टस्वभावेन निरूपितः,शरीरस्थोऽपि अनादित्वात्-अनार-

ता॥शेतेत्युच्यते 'तत एव च विस्तारम्' इति । तद्विवृणोति—**प्रकृतितएवे**ति। प्रकृतितत्त्वस्य प्रथमं देवादिरूपविचित्रपरिणामे,तन्मूले च सन्तानव्यपदेशभाजि परिणामे भोक्तुः पुरुषस्य भोगार्थसन्निधिमात्रमपेक्षितम्, न पुनर्भोगायतनादिगतविकारास्पदत्वमपीत्येवकाराभिप्राय । 'ब्रह्म सम्पद्यते' इत्यत्र परमात्मभावस्य विरुद्धत्वाज्जीवात्मभावस्य नित्यसिद्धत्वात् 'परमं साम्यमुपैति' 'मम साधर्म्यमागताः' इत्यादिभिरैकार्थ्यात्परब्रह्मसाम्यापत्तिर्विवक्षितेत्यभिप्रायेणाह—**अनवच्छिन्नमि**ति । यद्वा देहात्मविवेकज्ञानमात्रेण साक्षात्परमात्मप्राप्तिर्न स्यादित्यभिप्रायः । ब्रह्म सम्पद्यते ब्रह्म भवतीत्यर्थः । तत्र फलितार्थकथनम् —**आत्मानं प्राप्नोती**ति। यद्वा ब्रह्मेति द्वितीयान्तम्;सम्पद्यत इति सम्प्राप्नोतीत्यर्थः ॥

आत्मनो नित्यत्वानित्यत्वापरिणामित्वादिभिरुक्तं वैधर्म्यं सहेतुकं स्थिरीकरोति—'अनादित्वात्' इति श्लोकेन । आपेक्षिकपरमात्मत्वविषयेण 'अयं परमात्मा' इत्यनेनाभिप्रेतमाह—**देहान्निष्कृष्टे**त्यादिना । ज्ञानसङ्कोचरूपव्ययस्य देहादिप्रेरणरूपकर्तृत्वस्य च प्रत्यक्षादिसिद्धत्वात्कथमव्ययत्वादिरित्यत्राह —**स्वभावेन निरूपित** इति। अनादित्वादित्यव्ययहेतुरुत्पत्तिराहित्यं विवक्षितमित्याह—

प्र-पा ॥ १ मु ३-१-३ ॥ | २ गी-१४-२ ॥

शं॥विस्तारं यदा पश्यति, ब्रह्म संपद्यते ब्रह्मैव भवति तदा तस्मिन् काले इत्यर्थः॥ ३०॥

एकस्य आत्मनः सर्वदेहात्मत्वे तद्दोषसम्बन्धे प्राप्ते इदम् उच्यते —अनादित्वात्—अनादेः भावः अनादित्वम्, आदिः कारणं,तत् यस्य नास्ति तत् अनादि । यद्धि आदिमत् तत् स्वेन आत्मना व्येति ; अयं तु अनादित्वात् निरवयव इति कृत्वा न व्येति । तथा निर्गुणत्वात् । सगुणो हि गुणव्ययात् व्येति ; अयं तु निर्गुणत्वाच्च न व्येतिः इति परमात्मा अयम् अव्ययः, न अस्य व्ययो विद्यते इति अव्ययः । यत एवं, शरीरस्थोऽपि. शरीरेषु आत्मनः उपलब्धिः भवतीति शरीरस्थः उच्यते ; तथापि न करोति कर्म। तद्करणादेव तत्फलेन न लिप्यते । यो हि कर्ता, सः कर्मफलेन लिप्यते। अयं तु अकर्ता, अतः न लिप्यते इत्यर्थः ॥

आ॥एकस्थम् एकस्मिन् विष्णौ स्थितम् । तत एव च विष्णोर्विस्तारम् ॥ ३० ॥

न च व्ययादिरस्येत्याह —अनादित्वादिति । सादि हि प्रायो व्ययि गुणात्मकं च।

ज॥एकस्थमित्यस्यैकस्थात्मकमिति व्याख्यानं सर्वप्रमाणविरुद्धमिति भावेनाह — **एकस्थमि**ति । 'तत एव च विस्तारम्'इत्यस्य स्वस्मादेव विश्वस्य विस्तारमिति व्याख्यानमसदिति भावेनाह—**ततएवे**ति । विस्तारमुत्पत्तिम् ॥ ३० ॥

अव्यय इत्यनुवादेन लेपाभावमात्रं विधीयत इत्यन्यथाप्रतीतिनिरासार्थमाह—**नचे**ति। एतेनाव्ययत्वमपि साध्यमप्राप्तत्वादित्युक्तं भवति । **तस्य** विष्णोः । अनेन जीवविशेषणमेतत् , तस्य प्राप्तिसद्भावेन प्रतिषेधोपपत्तेरिति निरस्तम्, विष्णोरपि शरीरस्थोऽपीति प्राप्तेरुक्तत्वात् । अनादित्वनिर्गुणत्वयोरव्ययत्वे हेतुत्वमुपपादयितुं व्याप्तिमाह—**सादी**ति । यद्व्ययि, तत्प्रायः सादि, गुणात्मकं चेति योजना। प्रागभावे व्यभिचारपरिहाराय—**प्राय** इत्युक्तम्। सत्साद्येव गुणात्मकमेवेत्यवधारणेन यथास्थि-

रा॥भ्यत्वात् अव्ययः —व्ययरहितः, निर्गुणत्वात्—सत्त्वादिगुणरहितत्वात्, न करोति, न लिप्यते—देहस्वभावैर्न लिप्यते ॥ ३१ ॥

यद्यपि निर्गुणत्वान्न करोति,नित्यसंयुक्तो देहस्वभावैः कथं न लिप्यत इत्यत्राह—

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२**

ता॥अनारभ्यत्वादिति । आरम्भमाणमेव हि व्येतीति दृष्टमिति भावः। 'निर्गुणत्वात्' इति सामान्येन ज्ञानादिगुणनिषेधपरिहारायाह —**सत्त्वादिगुणरहितत्वादिति** । एवं हेतुद्वयशक्त्यनुसारेण यथायोग्यं साध्यद्वयान्वयो दर्शितः । लेपशङ्काप्रतिषेधयोस्सम्भावितविषययोरेव युक्तत्वात्, 'तत्सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरम्' इत्याम्नातस्य शरीरस्य पटादिषु पङ्कादेरिव संसर्गेण लेपकत्वस्वभावात् 'शरीरस्थोऽपि' इत्यनेन सूचितमाह—**देहस्वभावैरिति** ॥ ३१ ॥

'न करोति'इत्युक्तमकर्तृत्वं तु पूर्वत्रोत्तरत्र च विशोधितस्वरूपम्,'शरीरस्थोऽपि न लिप्यते'इत्यस्मिन् साध्यांशे समागतकाष्ठादिन्यायशङ्का अनन्तरश्लोकेन परिह्रियत इत्याह—**यद्यपीति** । '[2]संसर्गजा दोषगुणा भवन्ति ' '[3]शुष्केणार्द्रं दह्यते मिश्रभावात्' इति हि प्रसिद्धमिति भावः। '[4]यं प्राप्यातिपवित्राणि वस्त्राण्याभरणानि च । अशुचित्वं क्षणाद्यान्ति किमन्यदशुचिस्ततः' इति न्यायाद्देहेन क्षणमात्रयोगेऽपि वस्त्रादय उपहन्यन्ते ; किंपुनरनादिसंयुक्त इत्यभिप्रायेणाह—**नित्यसंयुक्त**इति । संसर्गस्य संसर्गिणि संसर्ग्यन्तरस्वभावापादकत्वमनियतमिति व्यभिचारोपपादनार्थो ' यथा सर्वगतम्'इत्य-

प्र-पा ॥ १ ॥
२. 'अहं मुनीनां वचनं शृणोमि गवाशनानां स वचः शृणोति। प्रत्यक्षमेतद्भवतापि दृष्टं संसर्गजा दोषगुणा भवन्ति'॥ अयं श्लोकः श्रीरहस्यत्रयसारेऽपि प्रथमाधिकारे उदाहृतः ॥
३ ॥ ४ ॥

शां॥कः पुनः देहेषु करोति लिप्यते च ? यदि तावत् अन्यः परमात्मनो देही करोति लिप्यते च ततः इदम् अनुपपन्नम् उक्तं क्षेत्रज्ञेश्वरैकत्वं 'क्षेत्रज्ञं चापि मां विद्धि'इत्यादिना । अथ नास्ति ईश्वरात् अन्यो देही, कः करोति लिप्यते च ? इति वाच्यं ; परो वा नास्ति इति । सर्वथा दुर्विज्ञेयं दुर्वाच्यं च इति भगवत्प्रोक्तम् औपनिषदं दर्शनं परित्यक्तं वैशेषिकैः सांख्यार्हतबौद्धैश्च ॥

तत्र अयं परिहारो भगवता स्वेनैव उक्तः—'स्वभावस्तु प्रवर्तते ' इति । अविद्यामात्रस्वभावो हि करोति लिप्यते च इति व्यवहारो भवति, न तु परमार्थत एव तस्मिन् परमात्मनि तत् अस्ति । अत एव, एतस्मिन् परमार्थसांख्यदर्शने स्थितानां ज्ञाननिष्ठानां परमहंसपरिव्राजकानां तिरस्कृताविद्याव्यवहाराणां कर्माधिकारो नास्ति इति तत्रतत्र दर्शितं भगवता ॥ ३१ ॥

आ॥न करोतीत्यादेरर्थ उक्तः पुरस्तात्। न लौकिकक्रियादिलस्य । अतो न प्रज्ञमित्यादिवदिति ॥ ३१ ॥

ज॥तयोजना वा।न करोति निर्गुणत्वादिति ईश्वरस्य क्रियागुणाभावः प्रतीयत इत्यत आह—**नकरोतीति** । पुरस्तादुक्तमेव स्मारयति—**नेति** । इत्यादिवदक्रियत्वादिकं व्याख्येयमिति शेषः । यद्यप्यव्ययत्वमप्यत्र साध्यं, तथापि तद्लोकतो ज्ञातुं शक्यत इति लेपाभावमात्रं यथासर्वगतमित्युपपद्यते ॥

रा॥यथा आकाशं सर्वगतमपि सर्वैर्वस्तुभिस्संयुक्तमपि सौक्ष्म्यात्सर्ववस्तुस्वभावैर्न लिप्यते, तथा आत्मा अतिसौक्ष्म्यात्सर्वत्र—देवमनुष्यादौ देहेऽवस्थितोऽपि तत्तद्देहस्वभावैर्न लिप्यते ॥ ३२ ॥

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**

**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३**

यथैक आदित्यः स्वया प्रभया कृत्स्नमिमं लोकं प्रकाशयति, तथा क्षेत्रमपि क्षेत्री 'ममेदं क्षेत्रमीदृशम्' इति कृत्स्नं—बहिरन्तश्चापादतलमस्तकं स्वकीयेन ज्ञानेन प्रकाशयति; अतः प्रकाश्याल्लोकात्प्रकाशकादित्यवद्वेदितृत्वेन वेद्यभूतादस्मात् क्षेत्रादत्यन्तविलक्षणोऽयमुक्तलक्षण आत्मेत्यर्थः ॥ ३३ ॥

---

ता॥नुवाद इति ज्ञापनायोभयत्र अपिशब्दोपादानम्। सर्वगतत्वानुवादः 'शरीरस्थोऽपि' इति शङ्कोत्थापक इति च भावः । **सर्वैर्वस्तुभिस्संयुक्तमपी**ति—सर्वगतशब्देन परस्परविरुद्धानन्तस्वभावलेपप्रसङ्गोऽभिप्रेत इति भावः। यथा आकाशो भूतान्तरेभ्यस्सूक्ष्मः, तथा आकाशादपि सूक्ष्मतरोऽयमिति ज्ञापनार्थमुक्तम् - **अतिसौक्ष्म्या**दिति । तथेत्यनेन हेतुरप्यतिदिश्यत इति भावः। केचित्पदार्थाः कैश्चित्संसर्गे तत्स्वभावलेपरहिता अपि ततोऽन्यैः कैश्चित्संसर्गे तत्स्वभावलेपवन्तो दृश्यन्ते, यथा कार्पासादावञ्जनादिवासनयापि न श्यामतादियोगः, लाक्षारसवासनया त्वरुणता दृष्टा ; तथेहापि संभवतीति शङ्काव्युदासाय दृष्टान्तदार्ष्टान्तिकयोस्सर्वशब्दः ॥ ३२ ॥

अथाध्यायारम्भे 'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञम्' इति वेद्यत्ववेदितृत्वाभ्यां प्रतिपादितं संघातात्मकत्वासंघातात्मकत्वप्रयुक्तनानात्वैकत्वाभ्यां सिद्धं च भेदं दृष्टान्तपूर्वं स्थिरीकरोति,—' यथा प्रकाशयति' इति श्लोकेन । स्वरूपधर्मभूतयोर्ज्ञानयोरेकजातीययोरपि वैधर्म्यप्रदर्शनार्थं प्रभोदाहरणम्। 'कृत्स्नं क्षेत्रम्' इत्यनेन कृत्स्नशब्देन सर्वेषां शरीराणां संग्रहः प्रतीयते। व्याचख्युश्च परे—'रविदृष्टान्तोऽत्र रविवत्सर्वक्षेत्रेष्वेक आत्मा अलेपकश्चेति ज्ञापनार्थम्' इति. तच्चायुक्तं, प्रतिक्षेत्रमात्मानां भिन्नत्वादेकैकस्य सर्वक्षेत्रप्रकाशनाभावाज्जातिपरत्वे त्वादित्यदृष्टान्तासङ्गतिरित्यभिप्रायेणाह—**बहिरन्तश्चापादतलमस्तकमि**ति । बहिस्त्वगादिः, अन्तर्मांसादिः । एकैकस्य शरीरस्य अवयवभेदप्रयुक्तनानात्वेन आत्मव्यतिरेकप्रदर्शनार्थमवयवेषु कस्यचिद्वेदितृत्वशङ्काव्युदासार्थंच कृत्स्नशब्द इति भावः । अनेकावयवसमुदायात्मकाच्छरीरात्तदखिलज्ञातृत्वेन प्रतिसंधीयमान एक आत्मा भिन्न इत्युपलम्भबलसिद्धमित्युक्तं भवति । न प्रकाशकत्वमात्रप्रतिपादनपरोऽत्र दृष्टान्तः : अपितु तदधीनवैलक्षण्यपर इत्याह—**प्रकाश्या**दिति । कर्मकर्तृभावादिना भेदोऽत्र स्फुट इति भावः ॥ ३३ ॥

---

शं॥किमिव न करोति न लिप्यते इति ? अत्र दृष्टान्तमाह—यथा सर्वगतं सर्वव्यापि सौक्ष्म्यात् सूक्ष्मभावात् आकाशं खं न उपलिप्यते न सम्बध्यते, सर्वत्र अवस्थितः देहे तथा आत्मा न उपलिप्यते ॥ ३२ ॥

किंच—यथा प्रकाशयति अवभासयति एकः कृत्स्नं लोकम् इमं रविः सविता आदित्यः, तद्वत् अव्यक्तादि स्थावरान्तं महाभूतादि धृत्यन्तं क्षेत्रम् एकः सन् प्रकाशयति तथा—कः ?—क्षेत्री परमात्मा इत्यर्थः, भारत । रविदृष्टान्तः अत्र आत्मनः उभयार्थोऽपि भवति—रविवत् सर्वक्षेत्रेषु एक एव आत्मा, अलेपकश्च इति ॥ ३३ ॥

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४

ॐ तत्सदिति.

इति श्रीमद्भगवद्गीतासूपनिषत्सु परब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

श्रीकृष्णाय परब्रह्मणे नमः.

---

**रा॥एवम्**-उक्तेन प्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं विशेषं विवेकविषयज्ञानाख्येन चक्षुषा ये विदुः भूतप्रकृतिमोक्षं च, ते परं यान्ति निर्मुक्तबन्धमात्मानं प्राप्नुवन्ति : मोक्ष्यतेऽनेन

**ता॥**अथैतदध्यायप्रधानार्थभूतहेयोपादेयतदुपायविज्ञानस्य फलमुच्यते— **क्षेत्रक्षेत्रज्ञयोरि**ति । एवंशब्दानूदितमाह —**उक्तेन प्रकारेणे**ति। अज्ञत्ववेदितृत्वधार्यत्वधारकत्वशेषत्वशेषित्वादिप्रकारेणेत्यर्थः। ‘अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये’ इत्यनेकार्थस्यान्तरशब्दस्यात्र विवक्षितमाह—**विशेषमि**ति । ‘ज्ञानचक्षुषा’ इत्यत्र दिव्यज्ञानादिप्रसङ्गव्युदासार्थं विवेकविषयत्वोक्तिः । प्रक्रान्तोपदेशलब्धज्ञानमिह विवक्षितमिति भावः । ज्ञानस्य चक्षुष्ट्वरूपणमपरोक्षज्ञानान्तरहेतुत्वात्। विविच्यतेऽनेनेति विवेकः अत्र व्यावर्तकाकारः । भूतमय्याः प्रकृतेर्मोक्षः भूतप्रकृतिमोक्षः, भूतानां जीवानां प्रकृतेर्मोक्ष इति वा । यत्तु ‘भूतानां प्रकृतिरविद्यालक्षणा अव्यक्ताख्या, तस्याः प्रकृतेर्मोक्षणमभावगमनम्’ इति शंकरेणोक्तम्, तत् ‘ गौरनाद्यन्तवती ’इत्यादिश्रुतिविरोधादवधीरणीयम् । जीवात्मज्ञानफलविषयत्वात्परशब्दोऽत्र परिशुद्धजीवविषयः । तस्य च परत्वं संसारित्वलक्षणस्वकीयपूर्वावस्थापेक्षयेत्यभिप्रायेणाह— **निर्मुक्तबन्धमि**ति । अध्यायारम्भे क्षेत्रक्षेत्रज्ञौ पूर्वमुपपादितौ : परंपरया परिशुद्धात्मप्राप्त्युपायतया अमानित्वादिगुणवर्गश्च ; अत्रोऽत्र निगमनेऽपि क्षेत्रक्षेत्रज्ञाभ्यां सह समुच्चीयमानो भूतप्रकृतिमोक्षस्स एव गुणवर्गो भवितुमर्हतीत्यभिप्रायेणाह—**मोक्ष्यतेऽनेने**ति । लुनाभ्यासे सन्नन्ते वा, मोक्षशब्दप्रकृ-

---

**प्र-पा ॥** [1] एतदध्यायारम्भे ‘प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च । एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव’ इत्ययं श्लोकः केषुचित्कोशेषु दृश्यते। कैश्चित्पठ्यते च। तथापि भगवद्भाष्यकारैर्व्याख्यातत्वात्, तात्पर्यचन्द्रिकायाम् ‘ अपृष्टोऽप्यवसरे प्राप्ते स्वयमेव परिशोधयितुं भगवानुवाच ’ इत्यवतारितत्वात् शंकरभगवत्पादैरानन्दतीर्थभगवत्पादैश्च अस्पृष्टत्वादुपेक्षितः ॥

१. नामलिङ्गानुशासने. ३-काण्डे. नानार्थवर्गान्तेषु १८७ ॥ २. मन्त्रिकोपनिषदि ॥

---

**शं॥समस्ताध्यायार्थोपसंहारार्थः अयं श्लोकः**—**क्षेत्रक्षेत्रज्ञयोः यथाव्याख्यातयोः एवं यथादर्शितप्रकारेण अन्तरम् इतरेतरवैलक्षण्यविशेषं ज्ञानचक्षुषा शास्त्राचार्यप्रसादोपदेशजनितम् आत्मप्रत्यायकं ज्ञानं चक्षुः, तेन ज्ञानचक्षुषा भूतप्रकृतिमोक्षं च, भूतानां प्रकृतिः अविद्यालक्षणा अव्यक्ताख्या, तस्याः भूतप्रकृतेः मोक्षणम् अभावगमनं च ये विदुः**

---

**आ॥भूतेभ्यः प्रकृतेश्च मोक्षसाधनम्**

---

**ज॥**‘भूतप्रकृतिमोक्षम्’ इत्यस्य ‘भूतानां प्रकृतिरविद्या, तस्याः मोक्षमवसानलक्षणम्’ इति व्याख्यानमसत्, भूतशब्दवैयर्थ्यात्, अविद्याध्वंसस्यानुक्तत्वेनैवमिति परामर्शायोगाच्चेति भावेनाह—**भूतेभ्य**इति। अनेन भूतप्रकृतीति द्वन्द्वः । ततः ‘पञ्चमी’ इति योगविभागात्पञ्चमीतत्पुरुष इत्युक्तं भवति । भूतेभ्यः पृथिव्यादिभ्यः । ननु मोक्षो न प्रागुक्त इत्यत उक्तं—**मोक्षसाधनमि**ति। करणे घञित्यर्थः। मोक्ष-

रा॥**नेति मोक्षः,अमानित्वादिकमुक्तं मोक्षसाधनमित्यर्थः;क्षेत्रक्षेत्रज्ञयोर्विवेकविषयेणोक्तेन ज्ञानेन तयोर्विवेकं विदित्वा भूताकारपरिणतप्रकृतिमोक्षोपायममानित्वादिकं चावगम्य य आचरन्ति, ते निर्मुक्तबन्धाः स्वेन रूपेणावस्थितमनवच्छिन्नज्ञानलक्षणमात्मानं प्राप्नुवन्तीत्यर्थः ॥ ३४ ॥**

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये त्रयोदशोऽध्यायः ॥ १३ ॥
श्रीमते रामानुजाय नमः.

---

**ता**॥तिके मोक्षयतीति णिजन्ते वा ' [१]मोक्ष मोक्षणे ' इति धात्वन्तरे वा—**मोक्ष्यत** इति यक्प्रयोगः। तत्र चायं मोक्षशब्दः ' [२]अकर्तरि च कारके संज्ञायाम् 'इति करणार्थघञन्तः । उक्तेषु ज्ञातव्येषु सिद्ध ज्ञातव्यांशं विवृण्वन्वाक्यार्थज्ञानमात्रस्य साक्षान्मोक्षहेतुत्वाभावादनुष्ठानशेषतां च ज्ञापयन् भूतप्रकृतिमोक्षशब्देनानिष्टनिवृत्तेस्सूचनं, ' परं याति ' इत्यनेन चेष्टप्राप्तेर्विवक्षितत्वं दर्शयन् पिण्डितं महावाक्यार्थमाह—**क्षेत्रक्षेत्रज्ञयो**रिति ॥ ३४ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
भगवद्रामानुजविरचितश्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां
त्रयोदशोऽध्यायः ॥ १३ ॥
श्रीमते निगमान्तमहादेशिकाय नमः.

---

**प्र-पा** ॥ १. चुरादिः. ' मोक्ष असने 'इति तत्रत्यः पाठः ॥ २. अष्टा. ३-३-७९ ॥

---

शं॥**विजानन्ति,यान्ति गच्छन्ति ते परं परमात्मतत्त्वं ब्रह्म,न पुनः देहम् आददते इत्यर्थः॥**

इति श्रीपरमहंसपरिव्राजकाचार्य गोविन्दभगवत्पूज्यपादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ
श्रीमद्गीताभाष्ये त्रयोदशोऽध्यायः ॥

---

आ॥**अमानित्वादिकम्** ॥ ३४ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये त्रयोदशोऽध्यायः ॥ १३ ॥

---

ज॥साधनमपि नोक्तमित्यत आह—**अमानित्वादिक**मिति। ज्ञानसाधनमपि परंपरया मोक्षसाधनमिति भावः । मोक्षशब्दस्य नित्यसापेक्षत्वान्नासमर्थत्वम् । यद्वा भूतेभ्यः प्रकृतेश्चेति समासद्वयसूचनार्थं पृथगेव वाक्यम् । ततो मोक्षपदव्याख्यानं—**पृथगेवे**ति ॥ ३४ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां
जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां त्रयोदशोऽध्यायः ॥ १३ ॥

श्रीः

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः.

देहस्वरूपमात्माप्तिहेतुरात्मविशोधनम् ।
बन्धहेतुर्विवेकश्च त्रयोदश उदीर्यते ॥ १७ ॥

श्रीमद्यामुनमुनये नमः.

---

श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा.

अत्र भाष्यं 'तत्र तावत् त्रयोदशे देहात्मनोस्स्वरूपं, देहयाथात्म्यशोधनं, देहवियुक्तात्मप्राप्त्युपायः, विविक्तात्मस्वरूपशोधनं. तथाविधस्यात्मनश्चाचित्संबन्धहेतुः, ततो विवेकानुसंधानप्रकारश्चोच्यते' इति । अत्र **देहस्वरूप**मित्यनेनैवाभिप्रेतं देहात्मनोस्स्वरूपमिति । देहयाथात्म्यशोधनमिति च विवृतम् । **आत्माप्तिहेतुः** 'अमानित्वम्' इत्यादिभिरुक्तः। **आत्मविशोधनं** 'ज्ञेयं यत्तत्प्रवक्ष्यामि' इत्युपक्रम्य कृतम् । **बन्धहेतुस्तु** 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इत्युक्तः । 'ध्यानेनात्मनि पश्यन्ति' इत्यादिना विवेकानुसंधानप्रकारो यथाधिकारं दर्शितः ॥ १७ ॥

श्रीमते निगमान्तमहादेशिकाय नमः.

---

प्र-पा॥ १. गी. भा. १३. अ. १. श्लो. अव ॥
२. गी. १-३-७ ॥
३. गी. १३-१२ ॥
४. गी. १३-२१ ॥
५. गी. २३-२४ ॥




# चतुर्दशोऽध्यायः

रा॥त्रयोदशे प्रकृतिपुरुषयोरन्योन्यसंसृष्टयोः स्वरूपयाथात्म्यं विज्ञायामानित्वादिभि-र्भगवद्भक्त्यनुगृहीतैर्बन्धान्मुच्यत इत्युक्तम् । तत्र बन्धहेतुः पूर्वपूर्वसत्त्वादिगुणमयसुखादिसङ्ग इति चाभिहितं 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इति । अथेदानीं गुणानां बन्धहेतुताप्रकारो गुणनिवर्तनप्रकारश्चोच्यते—

**श्रीभगवानुवाच—**

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयस्सर्वे परां सिद्धिमितो गताः ॥ १**

**परं**—पूर्वोक्तादन्यत् प्रकृतिपुरुषान्तर्गतमेव सत्त्वादिगुणविषयं ज्ञानं भूयः प्रवक्ष्या-

ता॥पूर्वाध्यायप्रकृतविशोधनरूपतयास्य तत्संगतिं प्रदर्शयन् 'गुणबन्धविधा तेषां कर्तृत्वं तन्निवर्तनम्। गतित्रयस्वमूलत्वं चतुर्दश उदीर्यते ' इति संग्रहश्लोकं व्याचष्टे—**त्रयोदश**इति । ' इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते' इत्यारभ्य ' इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः । मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ' इत्यन्तार्थमभिप्रेत्य—**प्रकृतिपुरुषयो**रित्यादि **बन्धान्मुच्यत इत्युक्त**मित्यन्तमभिहितम् । **गुणानां बन्धहेतुताप्रकार**इत्यनेन ' गुणबन्धविधा'इत्येतद्व्याख्यातम् । **गुणनिवर्तनप्रकारश्चे**त्यनेन ' तन्निवर्तनम् 'इत्येतद्व्याख्यातम् । संग्रहोक्तगुणकर्तृत्वगतित्रयस्वमूलत्वयोर्भाष्येऽनुक्तिरन्यार्थानुवादत्वप्रासङ्गिकत्वाभ्यामिति द्रष्टव्यम् । परशब्दस्योत्कृष्टपरत्वे उत्तमशब्देन पौनरुक्त्यं स्यादित्यन्यथा व्याचष्टे—**पूर्वोक्तादन्य**दिति । एवं सत्युक्तस्यैव पुनर्वचनपरं 'भूयः प्रवक्ष्यामि'इत्येतद्विरुध्येतेत्याशङ्कावारणाय तदभिप्रेतमाह—**प्रकृतिपुरुषान्तर्गतमेवे**ति । संग्रहेण पूर्वाध्यायोक्तं गुणानां बन्धहेतुत्वमेव विस्तरेणात्र भूयः प्रवक्ष्यामीत्यर्थ इति न विरोध इति भावः । ' ज्ञानानामुत्तमं ज्ञानं भूयः प्रवक्ष्यामि ' इत्यन्वयसंभवेऽपि तज्ज्ञानस्यावश्यज्ञातव्यत्वसिद्धये ज्ञानानामुत्तमत्वस्य वाक्य-

**प्र-पा** ॥ १. गी. सं १८ ॥ ३. गी. १३-१८ ॥
२. गी. १३-१ ॥

शं॥सर्वम् उत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगात् उत्पद्यते इति उक्तम्। तत् कथमिति? तत्प्रदर्शनार्थं ' परं भूयः ' इत्यादिः अध्यायः आरभ्यते । अथवा—'ईश्वरपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोः जगत्कारणत्वं, न तु सांख्यानामिव स्वतन्त्रयोः'' इत्येवमर्थं,प्रकृतिस्थत्वं गुणेषु च सङ्गः संसारकारणम् इति उक्तम् । कस्मिन् गुणे कथं सङ्गः ? के वा गुणाः ! कथं बध्नन्ति ! गुणेभ्यश्च मोक्षणं कथं स्यात्? मुक्तस्य च लक्षणं वक्तव्यम्, इत्येवमर्थं च भग-

रा॥मि; तच्च ज्ञानं सर्वेषां प्रकृतिपुरुषविषयज्ञानानामुत्तमम् ; यज्ज्ञानं ज्ञात्वा सर्वे मुनयस्तन्मननशीलाः इतः—संसारमण्डलात्परां सिद्धिं गताः-परिशुद्धात्मस्वरूपप्राप्तिरूपां सिद्धिमवाप्ताः ॥ १ ॥

पुनरपि तज्ज्ञानं फलेन विशिनष्टि—

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २

इदं—वक्ष्यमाणं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः-मत्साम्यं प्राप्ताः, सर्गेऽपि

---

ता॥भेदेन विधेयतयान्वयमाह—तच्च ज्ञानमिति। 'ज्ञानानाम्' इति सामान्यनिर्देशेन सर्वज्ञानापेक्षयोत्तमत्वलाभेऽपि भगवद्विषयज्ञानापेक्षयोत्तमत्वासंभवात्तद्व्यवच्छेदाय—सर्वेषां प्रकृतिपुरुषविषयज्ञानानामित्युक्तम् । एतज्ज्ञानविषयज्ञानमात्रस्य परसिद्धिहेतुत्वासंभवात्तदभ्यासरूपानुष्ठानालाभाच्च—सर्वे मुनयस्तन्मननशीलाइत्युक्तम् । 'इतः' इत्यस्य प्रकृतज्ञानहेतुतापरत्वे, तदभावेऽपि भूतभव्यसमुच्चारिन्यायेन तद्धेतुतालाभाद्भगवद्भक्त्यैकलभ्यभगवत्प्राप्तिरूपसिद्धेरेतत्साध्यत्वासंभवेन परत्वप्रतिसंबन्धिविशेषस्य अपेक्षितत्वाच्च तत्परत्वमाह—इतस्संसारमण्डलात्परामिति इयं परा सिद्धिः कीदृशीत्यतः तत्स्वरूपमाह—परां परिशुद्धात्मस्वरूपप्राप्तिरूपामिति ॥ १ ॥

अपौनरुक्त्यं सूचयन् उत्तरश्लोकमवतारयति—पुनरपि तज्ज्ञानमिति। इष्टप्राप्तिः पूर्वत्रोक्ता,अनिष्टनिवृत्तिरत्रोच्यत इति न पौनरुक्त्यमिति भावः।इदंशब्दस्योक्तपरत्वे प्रकृतासंगत्या अन्यथा व्याचष्टे वक्ष्यमाणमिति । 'आगताः' इत्यस्यागमनकर्तृपरत्वे प्रकृतानन्वयात्प्राप्त्यर्थत्वमाह—प्राप्ताइति । 'व्यथन्ति' इत्यस्य दुःखार्थकत्वेऽपि जनिसमभिव्याहारात्संहारलक्षकत्वमुचितमित्यभिप्रायेणाह—

---

शं॥वान् उवाच परं—'ज्ञानम्'इति व्यवहितेन सम्बन्धः—भूयः पुनः, पूर्वेषु अध्यायेषु असकृत् उक्तमपि, प्रवक्ष्यामि । तच्च परं, परवस्तुविषयत्वात् । किं तत्?—ज्ञानं सर्वेषां ज्ञानानाम् उत्तमम्, उत्तमफलत्वात्। 'ज्ञानानाम्' इति न अमानित्वादीनाम्; किं तर्हि?—यज्ञादिज्ञेयवस्तुविषयाणाम् इति। तानि न मोक्षाय, इदं तु मोक्षाय इति परोत्तमशब्दाभ्यां स्तौति श्रोतृबुद्धिरुच्युत्पादनार्थम् । यत् ज्ञात्वा यत् ज्ञानं ज्ञात्वा प्राप्य मुनयः संन्यासिनः मननशीलाः सर्वे परां सिद्धिं मोक्षाख्याम् इतः अस्मात् देहबन्धनात् गताः प्राप्ताः ॥ १ ॥

तस्याश्च सिद्धेः ऐकान्तिकत्वम् उच्यते—इदं ज्ञानं यथोक्तम् उपाश्रित्य ज्ञानसाधनम् अनुष्ठाय इत्येतत्—मम परमेश्वरस्य साधर्म्यं मत्स्वरूपताम् आगताः प्राप्ताः इत्यर्थः।न तु

---

आ॥साधनकृज्ज्ञानदात्रे नमः ॐ साधनं प्राधान्येनोत्तरैरध्यायैर्वक्ति ॥ १ ॥

---

ज॥उत्तरेषां पञ्चानामध्यायानां प्रतिपाद्यमाह—साधनमिति । 'योगे त्विमां शृणु 'इति प्रतिज्ञायाषष्ठपरिसमाप्तेः कामवर्जनादीतिकर्तव्यतासहितं कर्म ध्यानलक्षणं ज्ञानसाधनमुक्तम् । तत्रेतिकर्तव्यतांशमुत्तरैरध्यायैः प्रपञ्चयतीत्यर्थः । 'मम योनिर्महद्ब्रह्म' 'न तद्भासयते सूर्यः' इत्यादिनेश्वरमाहात्म्यस्यापि वचनात्कथमेतदित्यत उक्तं—प्राधान्येनेति । प्राचुर्यापेक्षया संग्राहकमेतदित्यर्थः । अवान्तरप्रतिपाद्यभेदादध्यायभेदः । तत्र 'यावत्संजायते किंचित्' इत्युक्तविवरणपूर्वकं 'कारणं गुणसङ्गोऽस्य' इत्युक्तं गुणसंबन्धं प्रपञ्च्य तदत्ययसाधनमनेनाध्यायेनोच्यते ॥ १ ॥

रा॥नोपजायन्ते—न सृजिकर्मतां भजन्ते. प्रलये न व्यथन्ति च—न च संहृतिकर्मताम्॥

अथ प्राकृतानां गुणानां बन्धहेतुताप्रकारं वक्तुं सर्वस्य भूतजातस्य प्रकृतिपुरुषसंसर्गजत्वं 'यावत्सञ्जायते किञ्चित्' इत्यनेनोक्तं भगवता स्वेनैव कृतमित्याह—

**मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।**
**संभवस्सर्वभूतानां ततो भवति भारत ॥ ३**

कृत्स्नस्य जगतो योनिभूतं मम महद्ब्रह्म यत्, तस्मिन् गर्भं दधाम्यहं 'भूमिरापोऽ

ता॥न च संहृतिकर्मतां भजन्त इति ॥ २ ॥

गुणसंबन्धहेतुताप्रकारतन्निवर्तनप्रकारप्रतिपादकत्वाभावात् 'मम योनिर्महद्ब्रह्म' इति श्लोकः प्रकृतासंगत इति शङ्कापरिहाराय तच्छ्लोकमवतारयति—**अथ प्राकृतानामिति।** वक्ष्यमाणगुणबन्धहेतुत्वमपि स्वकृतमिति द्योतनाय सर्वभूतजातस्य प्रकृतिपुरुषसंसर्गजत्वं स्वकृतमित्यनेनोच्यत इति भावः। **कृत्स्नस्य जगतो योनिभूतमिति** मम योनिभूतमित्यन्वये 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किंचिदस्ति धनंजय' इत्यादिभिर्विरोधः; स्वयोनिभूते तस्मिन् गर्भाधानाभिधानं चानुपपन्नम्; 'तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता' इत्युत्तरश्लोकवैरस्यंच । अतः 'तस्मिन् गर्भं दधाम्यहम्, इत्यस्याङ्गस्याच जगत्पितृत्वेनावस्थितस्य स्वस्य जगद्गर्भाधानक्षमसाक्षाद्विकारिद्रव्यमिह योनिशब्देन विवक्षितमिति भावः। 'मम योनिः' 'इत्येतत् 'भूमिरापः' इत्यादिप्रतिपादितार्थविषयत्वादनुवादरूपमिति ज्ञापनार्थं तच्छब्दप्रतिसंबन्धितया यच्छब्दनिर्देशः । ननु जगद्योनिभूतं महद्ब्रह्म परमात्मैव; 'वासुदेवः परा प्रकृतिः' 'यद्भूतयोनिं' 'कर्तारमीशं पुरुषंब्रह्मयोनिम्'इत्यादिषु श्रूयते; स कथं 'मम'इति व्यतिरेकेण निर्दिश्यते; ब्रह्मशब्दस्य च न प्रकृतिवाचकत्वं, 'महद्ब्रह्म' इति विशेषणं च तत्प्रतिकूलमेव ; अतः परमात्मस्वरूपमेव 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यादिष्विवात्रापि भेदेनोपचर्यत इति योज्यम् । तत्राह—**भूमिरापइति** । अयमभिप्रायः—षट्कद्वयोक्तवै-

प्र-पा ॥ १. गी. ७-६९ ॥

२ ॥

३ मु.उप-१-१-६.'यत्तदद्रेश्यमग्राह्यम गोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मन्तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः'॥—अद्रेश्यम्—अदृश्यम्. ज्ञानेन्द्रियाविषयम् । अग्राह्यं - पाण्यादिकार्यहानोपादानाद्यविषयः । अगोत्रं-कुलरहितम् । अवर्णम् - अपेतब्रह्मक्षत्रादिकम् । अचक्षुश्श्रोत्रं - ज्ञानेन्द्रियरहितम् । तत् - प्रसिद्धम् । अपाणिपादं - कर्मेन्द्रियरहितम् । नित्यं-कालापरिच्छिन्नम् । विभुं-देशापरिच्छिन्नम् । सर्वगतं - सर्वस्यान्तः प्रविश्यावस्थितम् । तत्रहेतुमाह—सुसूक्ष्ममिति । उक्तविशेषणविशिष्टं यत्, तत्-अव्ययम् 'अथ परा यया तदक्षरम्' इत्यत्राक्षरशब्दनिर्दिष्टमित्यर्थः । धीराः - प्रज्ञाशालिनः, यत्-सर्वभूतोपादानतया पश्यन्तीत्यर्थः । 'योनिशब्दस्योपादानवचनत्वं' 'यथोर्णनाभिस्सृजते गृह्णते च' इति वाक्यशेषादवगम्यते' इति प्रकृत्यधिकरणे (१-४- ) भाषितम् ॥

४. मुण्ड. उप. ३-१-३. 'यदापश्यः पश्यते रुक्मवर्णंकर्तारमीशम्पुरुषम्ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ (१८६. पुटे. ३. पं.) व्याख्यातम् ॥

५. तै आन ॥

शं॥समानधर्मता साधर्म्यं. क्षेत्रज्ञेश्वरयोः भेदानभ्युपगमात् गीताशास्त्रे। फलवादश्च अयं स्तुत्यर्थः उच्यते।सर्गेऽपि सृष्टिकालेऽपि न उपजायन्ते न उत्पद्यन्ते।प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति च व्यथां न आपद्यन्ते, न चलन्ति इत्यर्थः ॥

रा॥नलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयम्मे भिन्ना प्रकृतिरष्टधा॥ अपरेयम्' इति निर्दिष्टा अचेतनप्रकृतिर्महदहङ्कारादिविकाराणां कारणतया महद्ब्रह्म' इत्युच्यते; श्रुतावपि कचित्प्रकृतिरपि 'ब्रह्म' इति निर्दिश्यते—'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इति 'इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्।

ता॥शयाय हि तृतीयषट्कप्रवृत्तिः। ततश्च 'भूमिरापः' इत्यादौ स्वशेषतया निर्दिष्टा प्रकृतिरेवात्रापि संबन्धिविभक्तिवशात्प्रकृतिशब्दपर्याययोनिशब्दादिभिश्च तद्गर्भशब्दाभिहितचेतनप्रकृत्याधानक्षेत्रत्वेन भोगायतनत्वप्रतीतेश्च प्रत्यभिज्ञायते। 'एतद्योनीनि' इति योनिशब्दोऽपि पूर्वं तत्र प्रयुक्तः। तस्याश्च महतां भूतानां तत्कारणस्याहंकारस्य तत्कारणस्य महत्तत्त्वस्य च कारणतया तत्तत्कार्यापेक्षया महत्त्व-विशेषितब्रह्मत्वमप्युपपन्नम्। ब्रह्मशब्दश्च कारणत्वबृहत्त्वादिसादृश्यादब्रह्मण्यपि प्रयोक्तुं युज्यते, तथाच श्रौतप्रयोगोऽप्यस्ति। प्रकृतेर्जगद्योनित्ववचनं तु न परमात्मनो जगदुपादानत्वविरुद्धम्; अपि-त्वनुगुणमेव, प्रकृतिविशिष्टवेषेणैव निर्विकारस्य तस्य जगद्योनित्वात्। अतो हि पूर्वम् 'एतद्योनीनि भूतानि सर्वाणीत्युपधारय' इत्युक्त्वा तदनन्तरम् 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इत्युक्तम्—इति। प्रसिद्धगर्भासंभवात् गर्भशब्दाभिलप्यत्वमत्र जीवस्य कथमित्यत्राह—**इतस्त्वन्यामिति**। 'मम

**प्र-पा॥** १. गी ७-६॥ २. गी ७ ६९॥

शं॥क्षेत्रक्षेत्रज्ञसंयोगः ईदृशः भूतकारणम् इत्याह—मम स्वरूपभूता मदीया माया त्रिगु-णात्मिका प्रकृतिः योनिः सर्वभूतानां कारणम्। सर्वकार्येभ्यो महत्त्वात् कारणत्वात् बृंहणत्वाच्च स्वविकाराणां, महत् ब्रह्म इति योनिरेव विशिष्यते। तस्मिन् महति ब्रह्मणि योनौ गर्भं हिरण्यगर्भजन्मनः बीजं, सर्वभूतजन्मकारणं बीजं, दधामि निक्षिपामि

आ॥महद्ब्रह्म प्रकृतिः, सा च श्रीर्भूर्दुर्गेति भिन्ना। उमासरस्वत्याद्यास्तु तदंशयुता अन्यजीवाः। तथाच काषायणश्रुतिः—'श्रीर्भूर्दुर्गा महती तु माया सा लोकसूतिर्जगतो बन्धिका च। उमा वागाद्या अन्यजीवास्तदंशास्तदात्मना सर्ववेदेषु गीताः' इति। 'मम योनिः' इति गर्भाधानार्था योनिः, न तु माता, वाक्यशेषात्। तथाहि सामवेदे शार्के

ज॥अत्र महद्ब्रह्मेति जडाविद्योच्यत इति प्रतीतिनिरासार्थमाह—**महदिति**। प्रकृतिर्महालक्ष्मीः। ननु 'सत्त्वं रजस्तमः' इति जडा प्रकृतिर्वक्ष्यते; तत्संनिधानादत्रापि सैव युक्तेति चेत्, न, तत्रापि चेतनप्रकृत्यभिधानात्। कथमस्याः सत्त्वादिभेदभिन्नत्वमित्यत आह—**साचेति**। जडप्रकृतेरभिमानिनी तत्कार्यसत्त्वादिगुणाभिमानिन्येतद्रूपत्रयवतीत्यर्थः। ननु भगवती माहेश्वरी ब्राह्मी कौमारी मा-हेन्द्री श्रीर्भूर्दुर्गेति सप्तधाभिन्ना आगमेषूच्यते। तत्कथं त्रिधा भिन्नोच्यत इत्यत आह—**उमेति**। आद्याश्चतस्रो भगवत्या अन्याः। कुतः? जीवाः। कथं तद्रूपत्वोक्तिः? तदंशयुतास्तत्संनिधानोपेताः। कुत एतदित्यत आह—**तथाचेति**। मम योनिरित्येतत्परे व्याचक्षते—'मम स्वरूपभूता योनिः कारणं विश्वस्य, प्रतीत एवान्वये मम मातेत्यापत्तेः' इति। तन्निरासार्थमाह—**ममेति**। भार्येत्यर्थः। ममे-त्यनुवादेनान्यथा प्रतीतावन्वयबाधः स्यादिति सूचयति। प्रतीतान्वयाङ्गीकारे मातेत्यपि प्रतीयेत; तत्र कथं भार्येति निश्चय इत्यत आह—**न त्विति**। इति प्रतीतिः प्रसज्यत इति शेषः। कुतो नेत्यत आह—**वाक्येति**। 'तस्मिन् गर्भं दधाम्यहम्' इति वाक्यशेषाद्भार्यार्थतानिश्चयात्, श्रुतिबलाच्चे-त्याह—**तथाहीति**। प्रकाशयन्ती प्रवर्तते। अनयैव श्रुत्याऽन्यदपि लब्धमिति प्रसङ्गादाह—**अत-**

रा॥जीवभूतां'इति चेतनपुञ्जरूपा या परा प्रकृतिर्निर्दिष्टा,सेह सकलप्राणिबीजतया गर्भशब्देनोच्यते ; तस्मिन्नचेतने योनिभूते महति ब्रह्मणि चेतनपुञ्जरूपं गर्भं दधामि ; अचेतनप्रकृत्या भोगक्षेत्रभूतया भोक्तृवर्गपुञ्जभूतां चेतनप्रकृतिं संयोजयामीत्यर्थः । ततस्तस्मात्प्रकृतिद्वयसंयोगान्मत्संकल्पकृतात्सर्वभूतानां ब्रह्मादिस्तम्बपर्यन्तानां संभवो भवति॥

ता॥ योनिः' इत्यनेन प्रत्यभिज्ञापितस्वकीयप्रकृतिद्वयविषयप्राचीनवचनपरामर्शादनन्तरग्रन्थसामञ्जस्याच्च गर्भशब्दोऽत्र परप्रकृतिशब्दनिर्दिष्टचित्समष्टिपर इति भावः।'गर्भम्' इत्येकवचनं समुदायैक्यपरमिति ख्यापनाय पुञ्जशब्दः । अन्वितार्थमाह—**तस्मिन्निति** । ननु पूर्वं ' ययेदं धार्यते जगत्' इति चेतनप्रकृतेराधारत्वमचेतनस्य च धार्यत्वमुक्तम् । इह तु ' तस्मिन् गर्भं दधाम्यहम् ' इति तद्विपरीतमुच्यत इत्यत्राह —**अचेतनेति** । नात्र तादधीन्यपर्यन्ताधाराधेयभावोऽभिमतः: अपित्वभेदनिर्देशमात्रयोग्यस्संयोगः तथाविधसंयोगकरणस्य कर्मवश्यानां पुंसां कर्मानुरूपभोगप्रदानं प्रयोजनमित्युक्तं भवति। अत्र तत इति नानन्तर्यपरः,मन्दप्रयोजनत्वात्: आनन्तर्येण हेतुभावस्य फलितत्वादपि तत्कण्ठोक्तेर्युक्तत्वात्। अतः '[1] क्षेत्रक्षेत्रज्ञसंयोगात् ' इति पूर्वाध्यायोक्त एव हेतुरिह सांख्यमतशङ्कानिरासाय स्वाधीनत्वेन विशेष्यत इत्यभिप्रायेणाह—**प्रकृतिद्वयसंयोगान्मत्संकल्पकृतादिति** । अतएव तस्य कार्यकरत्वं चोपपन्नमिति भावः । अत्र 'सर्वभूतानाम् 'इति न महदादितत्त्वपरं,भूतशब्दस्य महदादिष्वरूढत्वात्; नापि महाभूतादिविवक्षा,क्षेत्रज्ञानां बन्धहेतुप्रकारपरत्वात् : तच्च क्षेत्रज्ञतत्त्वं भूतशब्दविवक्षितसृज्यत्वाविशेषात् '[2] आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितसंसारवशवर्तिनः । [3] ब्रह्माद्यास्सकला देवा मनुष्याः पशवस्तथा।विष्णुमायामहावर्तमोहान्धतमसावृताः' '[4] हिरण्यगर्भो भगवान्' इत्यादिभिश्च ब्रह्मेशानादेरपि समानमित्यभिप्रायेण सर्वशब्द इति दर्शयितुं—**ब्रह्मादिस्तम्बपर्यन्तानामित्युक्तम्** । ' अबुद्धिपूर्वकस्सर्गः प्रादुर्भूतस्तमोमयः ' इत्यादिषु चतुर्मुखसंकल्पमन्तरेणैव स्थावरादिसृष्टिवचनाद्धिरण्यगर्भवत्तत्सृष्टानामपि स्तम्बपर्यन्तानां परमात्मसृज्यत्वं स्पष्टम् ॥ ३ ॥

**प्र-पा** ॥ १. गी. १३-२६ ॥ ३. वि. पु. ५-३०-१७ ॥
२. वि. ध. १०४-२३ ॥ ४. वि. पु. ६-७-५६ ॥

शं॥क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिमान् ईश्वरः अहम्-अविद्याकामकर्मोपाधिस्वरूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण संयोजयामि इत्यर्थः। सम्भवः समुत्पत्तिः सर्वभूतानां हिरण्यगर्भोत्पत्ति-

आ॥राक्षश्रुतौ-' विष्णोर्योनिर्गर्भसंधारणार्था महामाया सर्वदुःखैर्विहीना। तथाऽप्यात्मानं दुःखिवन्मोहनार्थं प्रकाशयन्ती सह विष्णुना सा'इति। अतः सीतादुःखादिकं मृषाप्रदर्शनमेव । तथा कूर्मपुराणे । न चेयं भूः । तथाच सौकरायणश्रुतिः—' अन्या भूर्भूरियं तस्य छाया भूतावमा सा हि भूतैकयोनिः ' इति । ' अवाप स्वेच्छया दास्यं जगतां

ज॥इति।मृषा अयथार्थं प्रदर्शनं यस्य तत्तथा। इतश्चैवमेवेत्याह—**तथेति**।तत्र ह्येवमुक्तं—'दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः । रामायादर्शयत्सीतां पावकोऽसौ सुरप्रियः ' इत्यादि । ननु महालक्ष्मीः श्रीर्भूर्दुर्गेति भिन्नेत्युक्तम्, भुवश्च ' गौर्भूत्वाश्रुमुखी खिन्ना ' इति दुःखं प्रतीयते; तत्कथं तदित्यत आह—**नचेति** । इयं भूताभिमानिनी प्रसिद्धा भूः । भगवत्या रूपं न भवति । किं त्वियमन्यैव । कुत इत्यत आह—**तथाचेति** । महालक्ष्मीरूपं भूरन्या इयं प्रसिद्धा। तस्य तस्याः । छाया प्रतिमा। ननु रावणहरणादिकं भवतु मायासीतायाः, वाल्मीकिदास्यं तावन्मत्स्यपुराणे साक्षात्सीताया एवोक्तम् । दास्ये च दुःखमवर्जनीयमित्याशङ्कां प्रमाणपूर्वकमपाकरोति—**अवापेति** । श्रुतिरस्ति

कार्यावस्थोऽपि चिदचित्प्रकृतिसंसर्गो मयैव कृत इत्याह—

सर्वयोनिषु कौन्तेय मूर्तयस्संभवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४

रा॥सर्वासु देवगन्धर्वयक्षराक्षसमनुष्यपशुमृगपक्षिसरीसृपादिषु योनिषु तत्तन्मूर्तयो याः संभवन्ति-जायन्ते,तासां ब्रह्म महत् योनिः—कारणं मया संयोजितचेतनवर्गा महदादिविशेषान्तावस्था प्रकृतिः कारणमित्यर्थः ; अहं बीजप्रदः पिता-तत्रतत्र च तत्तत्कर्मानुगुण्येन चेतनवर्गस्य संयोजकश्चाहमित्यर्थः ॥ ४ ॥

---

ता॥एवमनेन श्लोकेन प्राकृतनैमित्तिकसृष्ट्योस्स्वाधीनत्वमुक्तम् ; अथ नित्यसृष्टिरपि स्वेनैव कृतेत्युच्यते—'सर्वयोनिषु' इति श्लोकेन । श्लोकयोः पुनरुक्तिपरिहारमभिप्रेत्याह—कार्यावस्थोऽपीति। नित्यसर्गावच्छिन्नोऽपीत्यर्थः । हिरण्यगर्भमूलचतुर्विधसृष्टेस्समनन्तरमप्याप्रलयात्क्षुद्रेष्वपि जन्तुषु या संततिः, तत्रापि नेश्वरस्स्वयमुदासीनस्सन्नन्यैः कारयतीत्यभिप्रायेण सर्वयोनिशब्द इत्याह—देवगन्धर्वेत्यादिना । प्रमाणसिद्धं प्रतिनियतकारणवस्तुवैजात्यलक्षणं वैचित्र्यं स्रष्टुस्स्वस्य विचित्रशक्तियोगज्ञप्तये 'याः' इति प्रसिद्धवन्निर्देशेनानूद्यत इत्यभिप्रायेणाह—तत्तन्मूर्तयइति । 'संभवन्ति' इत्यस्य संभावनार्थताव्युदासार्थमुपादानोपादेयभावज्ञापनार्थं चाह-जायन्तइति।अव्यवहितोपादानत्वाद्यभावात्—कारणमित्युक्तम्। चित्संपर्कविरहे सर्वेश्वराधिष्ठानविरहे च केवलस्याचिन्मात्रस्य हेतुत्वायोगमभिप्रेत्याह—मया संयोजितचेतनवर्गेति । 'सर्वयोनिषु' इत्यादिना निर्दिश्यमानचरमव्यष्टिसृष्टौ बहुयोनिकतया प्रतीयमानायां च कथमेकस्या मूलप्रकृतेर्योनित्वमित्यत्राह—महदादिविशेषान्तावस्थेति । विशेषाः पञ्चभूतानि । अत्र को बीजशब्दार्थः ? किं च पितृत्वव्यपदेशहेतुभूतं तत्प्रदानं 'तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता'इत्यनेन च सेश्वरसांख्यवत्प्रकृतेरेवोपादानत्वम्,ईश्वरस्य च केवलनिमित्तत्वं प्रतीयते ; तच्च श्रुतिविरुद्धम्,एकस्यामेव च योनावेकस्मिन्नेवाविषमे पितरि जायमानानां वैचित्र्यं किंनिबन्धनमित्यत्राह—तत्रतत्रेति। महद्ब्रह्म योनिरिति पूर्वश्लोकोक्ता प्रकृतिरत्रापि स्वशब्देनोपात्ता । तत्र गर्भशब्दस्थानीयो बीजशब्दस्तत्तत्सृष्ट्यनुगुणचेतनवाचीति भावः ॥ ४ ॥

---

शं॥द्वारेण ततः तस्मात् गर्भाधानात् भवति हे भारत ॥ ३ ॥

देवपितृमनुष्यपशुमृगादिषु सर्वयोनिषु कौन्तेय ! मूर्तयः देहसंस्थानलक्षणाः मूर्च्छिताङ्गावयवाः मूर्तयः सम्भवन्ति याः, तासां मूर्तीनां ब्रह्म महत् सर्वावस्थं योनिः कारणम् , अहम् ईश्वरः बीजप्रदः पिता गर्भाधानस्य कर्ता ॥ ४ ॥

---

आ॥प्रपितामही' इत्यनभिम्लानश्रुतिः। मत्स्यपुराणोक्तमपि स्वेच्छयैव । महद्ब्रह्मशब्दवाच्यापि प्रकृतिरेव 'महती ब्रह्मणी द्वे तु प्रकृतिश्च महेश्वरः' इति तत्रैव ॥ ३ ॥

---

ज॥यतोऽत इति शेषः।महद्ब्रह्म प्रकृतिरित्युक्तम् ;तत्र प्रमाणं वक्तुं व्यवहितत्वात्पुनः प्रतिजानीते—महदिति । महत् ब्रह्मेति भिन्ने पदे ; ततः परमितिशब्दोऽध्याहार्यः । कुत इत्यत आह—महतीति। तत्रैव मत्स्यपुराणे । अर्थक्रमेण 'मम योनिर्महद्ब्रह्म' इत्यत्र व्युत्क्रमेण व्याख्यानम्। मत्स्यपुराणोदाहरणप्रसङ्गादत्रोपपादनमिति ॥ ३ ॥४॥

रा॥एवं सर्गादौ प्राचीनकर्मवशादचित्संसर्गेण देवादियोनिषु जातानां पुनःपुनर्देवादिभावेन जन्महेतुमाह—

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥** ५

**सत्त्वरजस्तमांसि त्रयो गुणाः प्रकृतेः स्वरूपानुबन्धिनः स्वभावविशेषाः प्रकाशादिकार्यैकनिरूपणीयाः प्रकृत्यवस्थायामनुद्भूतास्तद्विकारेषु महदादिषूद्भूता महदादिविशे-**

ता॥ननु नैमित्तिकसर्गादौ प्राचीनकर्मानुरूपपरमपुरुषसंकल्पकृताचित्संसर्गाज्जन्मोपपद्यते : प्राचीनं च कर्म तेनैव दत्तफलं, तदारम्भककर्मावसाने च तच्छरीरं विनश्येत्;स्वतश्चात्मा विशुद्धः;कुतः पुनरस्य नित्यसृष्टिविषयतेत्यत्र गुणबन्धप्रकरणमवतारयति—**एवमिति**। **एवं** समष्टिव्यष्टिविषयश्लोकद्वयोक्तप्रकारेणेत्यर्थः । स्वरूपनि[illegible]र्मा हि धर्मिणं कदाचिदपि न त्यजन्ति, अतः प्रकृतिसंभवत्वमिह कार्यदशायां विषमतयोद्भवमात्रमित्यभिप्रायेणाह-**प्रकृतेस्स्वरूपानुबन्धिन**इति। निरुपधिका इत्यर्थः। कार्यावस्थप्रकृतिगतेभ्यश्शब्दादिगुणेभ्यस्स्वरूपनिरूपकत्वनित्यानुबन्धित्वलक्षणवैषम्यप्रकाशनाय इतिशब्दः । सत्त्वादीनामेव प्रकृतिद्रव्यतां वदतस्सांख्यान् प्रतिक्षिपति—**स्वभावविशेषा**इति। असाधारणधर्मविशेषा इति यावत् । चेतनासाधारणत्वेऽप्यौपाधिकास्सुखदुःखादयः ; स्वाभाविका अपि साधारणाद्रव्यत्वादयः : तदुभयव्यवच्छेदाय—**स्वरूपानुबन्धिनस्स्वभावविशेषा** इति पदद्वयम् । एतेन 'गुणा' इति पारिभाषिकश्शब्दः,न रूपादिवद्द्रव्याश्रिता इत्यादि शंकरोक्तं निरस्तम्। गुणशब्दप्रसिद्धिस्तन्मते विरुद्धेति भावः । ननु शब्दादिवन्न सत्त्वादिसंज्ञा गुणाः प्रत्यक्षेण दृश्यन्ते ; न च नित्यातीन्द्रियेऽनुमानं क्रमत इति शारीरके स्थापितम् ; नचानुपलब्धेषु प्रकृतिगुणेषु वायसरदनवदुपदेशस्य प्रयोजनं पश्यामः ; अतो वैशेषिकादिवदन्यपरत्वम् इह वक्तु युक्तमित्यत्राह—**प्रकाशादी**ति। अयमभिप्रायः—प्रकाशप्रवृत्तिमोहरूपाणि कार्याणि तावत्प्रत्यक्षाणि;तत्कारणविशेषाश्च कार्यभूतैस्तैरेव सामान्यतोऽनुमीयन्ते, कारणविशेषमन्तरेण कस्यापि कार्यस्यानुत्पत्तेः ; सच विशेषस्सत्त्वादिरूप इत्यागमसिद्धम् ; नचात्र निष्प्रयोजनता, अतीन्द्रियविषभेषजशक्तिविशेषोपदेशवद्धानोपादानपर्यवसानात्— इति । कार्यैकनिरूपणीयाश्चेत्प्रतिसर्गदशायां सुखदुःखादिकार्याभावात्सत्त्वादिगुणानामभावः प्राप्नोति ; अतः कथं स्वरूपानुबन्धित्वमित्यत्राह—**प्रकृत्यवस्थायामनुद्भूता**इति । कार्यहेतुरुद्भवस्तदानीं नास्तीति भावः। **तद्विकारेष्वित्या**दिपरिणामवशात्पुष्पफलादिषु गन्धाद्युद्भववदिति भावः। प्रकृतितद्विकारस्था गुणास्स्वतोऽव्ययत्वाद्गुणसंबन्धानर्हं कथं बध्नन्तीत्यस्योत्तरं देहिशब्द इत्याह—**मह-**

शं॥**के गुणाः ? कथं बध्नन्तीति ? उच्यते—सत्त्वं रजः तमः इति एवंनामानः 'गुणाः' इति पारिभाषिकः शब्दः, न रूपादिवत् द्रव्याश्रिताः गुणाः । न गुणगुणिनोः अन्यत्वं अत्र विवक्षितम् तस्मात् गुणा इव नित्यपरतन्त्राः क्षेत्रज्ञं प्रति, अविद्यात्मकत्वात् क्षेत्रज्ञं निबध्नन्तीव । तं आस्पदीकृत्य आत्मानं प्रतिलभन्ते इति 'निबध्नन्ति' इति उच्यते । ते च प्रकृतिसम्भवाः भगवन्मायासम्भवाः निबध्नन्ति इव हे महाबाहो, महान्तौ समर्थतरौ आजानुप्रलम्बौ बाहू यस्य सः महाबाहुः, हे महाबाहो देहे शरीरे देहिनं देहवन्तं अव्ययं अव्ययत्वं च उक्तं 'अनादित्वात्' इत्यादिश्लोकेन ॥**

रा॥ षान्तैरारब्धदेवमनुष्यादिदेहसंबन्धिनमेनं देहिनमव्ययं—स्वतोगुणसंबन्धानर्हं देहे वर्तमानं निबध्नन्ति, देहे वर्तमानत्वोपाधिना निबध्नन्तीत्यर्थः ॥ ५ ॥

सत्त्वरजस्तमसामाकारं बन्धनप्रकारंचाह—

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६

तत्र सत्त्वरजस्तमस्सु सत्त्वस्य स्वरूपमीदृशं निर्मलत्वात्प्रकाशकम्; प्रकाशसुखावरणस्वभावरहितता निर्मलत्वम्; प्रकाशसुखजननैकान्तस्वभावतया प्रकाशसुखहेतुभूतमित्यर्थः; प्रकाशो-वस्तुयाथात्म्यावबोधः; अनामयम्-आमयाख्यकार्यं न विद्यत

---

ता॥दार्दीति। अव्ययशब्दोऽत्र गुणसंबन्धकृतज्ञानसकोचरूपव्ययनिषेधपरः इत्यभिप्रायेणाह—अव्ययं स्वतोगुणसंबन्धानर्हमिति। तथापि 'शरीरस्थोऽपि कौन्तेय न ... नलिप्यते' इत्युक्तस्य कथं बन्धाख्यो लेप इत्यत्र आमोक्षादविच्छिन्नदेहसंबन्धोपाधिकत्वं 'देहे' इत्यनेन अभिप्रेतमित्याह—देहे वर्तमानत्वोपाधिनेति। एतेन 'क्षेत्रज्ञं बध्नन्ती' वतमास्पदीकृत्य आत्मानं प्रति लभन्त इति शंकरदुरुक्तिर्निरस्ता। नह्येष गुणबन्धः प्रकोष्ठबलेन हन्तुं शक्यत इत्यभिप्रायेण महाबाहुशब्दः। 'दीर्घौ बुद्धिमतो बाहूयाभ्यां हिंसाति हिंसितः' इति भावः। यथा त्वद्भुजबलेन परेषां बन्ध इति वा॥

'तत्र' इत्यादिश्लोकत्रयस्य प्रकृतसंगतिमाह—सत्त्वेति। आकारं—निरूपकस्वभावमित्यर्थः। 'तत्र' इति-निर्धारणार्थः समुदायनिर्देश इत्याह—सत्त्वरजस्तमस्स्विति। ननु निर्मलानां स्फटिकमण्यादीनां न प्रकाशकत्वं दृश्यत इत्यत्राह—प्रकाशेति। मलशब्दोऽत्र तमस्स्वभावभूतप्रकाशविरोध्याकारपर इत्यर्थः। वक्ष्यमाणपरामर्शादिह सुखोपादानम्। आवरणस्वभावरहितानामप्याकाशवाय्वादीनां न प्रकाशकत्वमित्यत्राह—प्रकाशसुखजननैकान्तस्वभावतयेति। सत्त्वामिश्ररजस्तमसोरपि भ्रान्तिबुद्धिविशेषहेतुत्वस्य वक्ष्यमाणत्वात्कथमिह सत्त्वस्यैव प्रकाशजनकत्वमित्यत्राह—प्रकाशो वस्तुयाथात्म्यावबोधइति। राजसतामसधियोरप्यधिष्ठानस्वरूपप्रकाशादिकं सत्त्वस्यांश इति भावः। सत्त्वस्यामयप्रसङ्गाभावात्तन्निषेधो न युक्त इत्यत्राह—आमयाख्यं कार्यं न विद्यतइति। अत्र सह-

---

शं॥ननु "देही न लिप्यते" इत्युक्तम्। तत्, कथं इह 'निबध्नन्ति' इति अन्यथा उच्यते? परिहृतं अस्माभिः इवशब्देन 'निबध्नन्ति इव' इति ॥ ५ ॥

तत्र सत्त्वादीनां सत्त्वस्यैव तावत् लक्षणं उच्यते—निर्मलत्वात् स्फटिक इव मणिः प्रकाशकं अनामयं निरुपद्रवं सत्त्वं बध्नाति। कथं? सुखसङ्गेन "सुखी अहं" इति विषयभूतस्य सुखस्य विषयिणि आत्मनि संश्लेषापादनेनैव। "ममैव सुखं जातं" इति

---

आ॥बन्धप्रकारं दर्शयति साधनानुष्ठानाय—सत्त्वमित्यादिना ॥ ५ ॥

---

ज॥ननु प्रतिज्ञातं ज्ञानं श्लोकद्वयेनोक्तं, तत्किमुत्तरेण ग्रन्थेनाध्यायासंगतमुच्यत इत्यत आह—बन्धेति। यो हि बद्धोऽस्मीति जानाति, स एव तन्निवृत्तिसाधनं विजिज्ञास्य ज्ञात्वाऽनुतिष्ठति; अतो बन्धोच्छेदसाधनानुष्ठानाय तज्ज्ञापनार्थं जिज्ञासामुत्पादयितुं गुणत्रयकृतबन्धप्रकारमादौ तावद्दर्शयतीति नासंगतिरित्यर्थः ॥ ५ ॥

रा॥इत्यनामयम्, अरोगताहेतुरित्यर्थः; एष सत्त्वाख्यो गुणो देहिनमेनं सुखसङ्गेन ज्ञानसङ्गेन च बध्नाति—पुरुषस्य सुखसङ्गं ज्ञानसङ्गं च जनयतीत्यर्थः ; ज्ञानसुखयोस्सङ्गे हि जाते तत्साधनेषु लौकिकवैदिकेषु प्रवर्तते ; ततश्च तत्फलानुभवसाधनभूतासु योनिषु जायत इति सत्त्वं सुखज्ञानसङ्गद्वारेण पुरुषं बध्नाति ; ज्ञानसुखजननं पुनरपि तयोस्सङ्गजननं च सत्त्वमित्युक्तं भवति ॥ ६ ॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७

रजो रागात्मकं—रागहेतुभूतम् ; रागो योषित्पुरुषयोरन्योन्यस्पृहा; तृष्णासङ्गस-

---

ता॥पठिते गुणान्तरे कार्यत्वेनामयस्य संबन्धोऽस्ति,सोऽत्र प्रसक्तः प्रतिषिध्यत इति भावः।आमयाख्यकार्यनिषेधोऽत्र फलतस्तद्विपरीतकार्यान्तरविध्यभिप्रायेणेत्याह—अरोगताहेतुरिति । 'तन्निबध्नाति' इत्युत्तरश्लोकयोरिवात्रापि स्वरूपनिर्देशेन बन्धहेतुत्वनिर्देशेन च वाक्यभेदमाह—एषइति। अन्यतस्सिद्धस्य सुखादिसङ्गस्य करणतामात्रं तृतीयया प्रतिपादितम् ; नच तद्युक्तं, हेत्वन्तरानुक्तेः; तत्राह—पुरुषस्येति। बन्धावान्तरव्यापारत्वमिह विवक्षितमिति भावः। बन्धो हि कर्मफलानुभवार्थदेहसंबन्धः; स च कर्ममूलः, स कथं सुखादिसङ्गादित्यत्राह—ज्ञानसुखयोरिति । नर्नु वैदिकसाधनानुष्ठानं योनिप्राप्त्यैव भवतीति युक्तम् ; लौकिकं तु साधनं दृष्टफलमात्राय स्याद्वा नवा ? न तु जन्मान्तरादिप्रसाधकम्।प्रवृत्तिदृष्टान्ततयापि लौकिकग्रहणं मन्दप्रयोजनम्।अत्र ब्रूमः—अत्र लौकिकशब्देन स्मार्तग्रहणम्; अथवा निषिद्धग्रहणम्; हिंसादेस्सुखसाधनत्वं हि लौकिकम्; अलौकिक्या तु शक्त्या पापिष्ठजन्मादिप्रसाधकत्वम्—इति । रजसि च वक्ष्यति, 'ताश्च क्रियाः पुण्यपापरूपाः' इति । यदि सत्त्वमेव प्रकाशं सुखं च स्वयं जनयति, ततस्सिद्धयोस्तयोः प्रवृत्तिहेतुस्सङ्गो न जायेतेत्यत्राह—ज्ञानसुखेति । बीजाङ्कुरन्यायेनोत्तरसङ्गतद्विषययोस्सत्त्वं साधकमित्यर्थः । 'न काङ्क्षे विजयम्' इत्यादिवदतस्तव न सङ्ग इत्यभिप्रायेणानघशब्दः ॥ ६ ॥

रजसो लोभ एवच'इति वक्ष्यते:अतः'प्रकाशकं''मोहनाम्'इति पूर्वोत्तरवत्'रागात्मकम्'इत्यत्रापि रागहेतुत्वं विवक्षितमित्याह—रागहेतुभूतमिति। कारणे कार्योपचारः । रज्यतेऽनेनेति व्युत्पत्त्या वा रागहेतुत्वं रागशब्देन विवक्षितमिति भावः । सहप्रयुक्ततृष्णादिशब्दपुनरुक्तिपरिहाराय रागशब्दं प्रयोगप्राचुर्यानुसारेण विषयविशेषे नियच्छति—योषित्पुरुषयोरन्योन्यस्पृहेति । तृष्णासङ्गाभ्यां रजस उत्पत्तिकथनं मन्दम्; रजोगुणात्तयोरुत्पत्त्यभिधान तु बन्धावान्तरव्यापारज्ञापनेन सार्थकमित्य-

---

प्र-पा ॥ १. गी. १-३२ ॥

---

शां॥मृषैव सुखेन सञ्जनम्। सैषा अविद्या। न हि विषयधर्मः विषयिणः भवति। इच्छादि च धृत्यन्तं क्षेत्रस्यैव विषयस्य धर्मः इति उक्तं भगवता । अतः अविद्ययैव स्वकीयधर्मभूतया विषयविषय्यविवेकलक्षणया अस्वात्मभूते सुखे सञ्जयति इव, आसक्तमिव करोति. असङ्गं सक्तमिव करोति, असुखिनं सुखिनमिव । तथा ज्ञानसङ्गेन च, ज्ञानमिति सुखसाहचर्यात् क्षेत्रस्यैव विषयस्य अन्तःकरणस्य धर्मः. न आत्मनः ; आत्मधर्मत्वे सङ्गानुपपत्तेः बन्धानुपपत्तेश्च । सुखे इव ज्ञानादौ सङ्गः मन्तव्यः । अनघ ! अपाप ! ॥ ६ ॥

रा॥मुद्भवं—तृष्णासङ्गयोरुद्भवस्थानं,तृष्णासङ्गहेतुभूतमित्यर्थः;तृष्णा शब्दादिसर्वविषय-स्पृहा ; सङ्गः पुत्रमित्रादिषु संबन्धिषु संश्लेषस्पृहा; तथा देहिनं कर्मसु क्रियासु स्पृहा-जननद्वारेण निबध्नाति ; क्रियासु हि स्पृहया याः क्रिया आरभते देही, ताश्च पुण्यपाप-रूपा इति तत्फलानुभवसाधनभूतासु योनिषु जन्महेतवो भवन्ति; अतः कर्मसङ्गद्वारेण रजो देहिनं निबध्नाति ; तदेवं रजो रागतृष्णासङ्गहेतुः कर्मसङ्गहेतुश्चेत्युक्तं भवति॥ ७॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ।। ८

ज्ञानादन्यदिहाज्ञानमभिप्रेतम्; ज्ञानं वस्तुयाथात्म्यावबोधः;तस्मादन्यत् तद्विपर्य-

ता॥भिप्रायेणाह—तृष्णासङ्गयोरुद्भवस्थानमिति । आत्मधर्मभूतयोस्तयोरात्मैव ह्युद्भवस्थानमित्य-त्राह—तृष्णासङ्गहेतुभूतमित्यर्थ इति। 'क्षुत्तृष्णोपशमम्' इत्यादिप्रयोगात्पिपासामात्रशङ्काव्यावृत्त्य-र्थमाह—तृष्णाशब्दादिविषयेति । सांस्पर्शिकगुणपञ्चकग्रहणमिदम् । पुत्रमित्रादिष्वित्याभिमा-निकपरम्. विषयतृष्णा विषयवैतृष्ण्यमित्यादिप्रयोगात् । तृष्णा सांस्पर्शिकसमस्तविषया ; सङ्गस्तु परि-शेषात् प्रयोगानुसाराच्च आभिमानिकविषय इति भावः । रागादिहेतुकस्तद्विषयोपायसङ्गोऽत्र कर्मसङ्ग इत्याह—तथेति । ननु रागतृष्णासङ्गा अप्यन्यत्र सुखविशेषसङ्गा एव व्याख्याताः । ज्ञानसु-खयोस्सङ्गे जाते तत्साधनेषु प्रवृत्तिवचनात्सत्त्वेनापि क्रियासङ्गो जन्यते ; तत्कथं विवेकः ? इत्थं—सत्त्वगुणस्सुखं प्रधानीकृत्य तदर्थतयान्यत्र सञ्जयति; 'प्रयोजनेषु सजन्ते नविशेषेषु पण्डिताः' इतिवत् रजोगुणस्तु तत्तद्वस्तूनि क्रियास्वरूपं च प्रधानीकृत्य सुखमल्पं प्रभूतं वेत्यत्रोदासीनो भवति । राजदारा-भिलाषदुष्पुत्रादिसंरक्षणवृथानिष्ठादिष्वेतद्व्यक्तम्। इति। कर्मसङ्गस्य कथं बन्धद्वारत्वमित्यत्राह—क्रिया-सुहीति । कर्मसङ्गवद्रागादेरपि बन्धद्वारत्वज्ञापनाय पिण्डितमाह—तदेवमिति । तत्-रागादीनां बन्धे पर्यवसानेन साफल्यादित्यर्थः । एवं—सत्त्वतमोव्यावृत्तस्वभावेनोक्तप्रकारेणेत्यर्थः ॥ ७ ॥

अत्यन्तपरिहरणीयत्वलक्षणवैषम्यद्योतनाय—तमस्त्विति तुशब्दः । अज्ञानशब्दस्य पुण्यपाप-रूपे कर्मणि ज्ञानाभावादिषु च प्रयोगादिह तद्व्यावृत्तं मोहजनकत्वानुरूपं कारणविशेषमाह—ज्ञाना-दन्यदिति । सर्वज्ञानव्यतिरेकव्युदासायाह—ज्ञानं वस्तुयाथात्म्यावबोधइति । विपर्ययज्ञानस्य

प्र-पा ॥ १ ॥

शां॥रजः रागात्मकं—रञ्जनात् रागः गैरिकादिरिव विद्धि जानीहि तृष्णाऽऽसङ्गस-मुद्भवं तृष्णा अप्राप्ताभिलाषः, आसङ्गः प्राप्ते विषये मनसः प्रीतिलक्षणः संश्लेषः, तृष्णाऽऽसङ्गयोः समुद्भवः यस्मात् तत् तृष्णाऽऽसङ्गसमुद्भवम् । तत् रजः निबध्नाति कौन्तेय ! कर्मसङ्गेन, दृष्टादृष्टार्थेषु कर्मसु सञ्जनं तत्परता कर्मसङ्गः, तेन निबध्नाति रजः देहिनम् ॥ ७ ॥

आ॥तृष्णासङ्गयोः समुद्भवं तयोः कारणम् ॥ ७ ॥

ज॥अत्र'रजस्तृष्णासङ्गसमुद्भवम्'इत्यस्य तृष्णासङ्गाभ्यां समुद्भवो यस्येत्यपव्याख्यानमिति भावेन वि-ग्रहप्रदर्शनपूर्वकमर्थमाह—तृष्णेति । समुद्भवत्यस्मादिति समुद्भवं कारणम्। अन्यथा'प्रकृतिसंभवाः' इत्युक्तविरोधात् समुद्भवशब्देनाविर्भावो विवक्षित इति चेत्, तथाऽपि गुणकार्यकथनप्रकरणविरोधात्॥

रा॥यज्ञानम्, तमस्तु वस्तुयाथात्म्यविपरीतविषयज्ञानजम्ः मोहनं सर्वदेहिनां—मोहो विपर्ययज्ञानम्; विपर्ययज्ञानहेतुरित्यर्थः;तत्—तमः प्रमादालस्यनिद्राहेतुतया तद्द्वारेण देहिनं निबध्नाति;प्रमादः—कर्तव्यात्कर्मणोऽन्यत्र प्रवृत्तिहेतुभूतमनवधानम्; आलस्यं—कर्मस्वनारम्भस्वभावः, स्तब्धतेति यावत्; पुरुषस्येन्द्रियप्रवर्तनश्रान्त्या सर्वेन्द्रियप्रवर्तनोपरतिर्निद्रा; तत्र बाह्येन्द्रियप्रवर्तनोपरमः स्वप्नः. मनसोऽप्युपरतिः सुषुप्तिः ॥ ८ ॥

सत्त्वादीनां बन्धद्वारभूतेषु प्रधानान्याह—

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९

सत्त्वं सुखसङ्गप्रधानम्; रजः कर्मसङ्गप्रधानम्; तमस्तु वस्तुयाथात्म्यज्ञानमावृत्य विपरीतज्ञानहेतुतया कर्तव्यविपरीतप्रवृत्तिसङ्गप्रधानम् ॥ ९ ॥

---

ता॥तमोजनकत्वं पापानुष्ठानादिद्वारा । तमःकार्यतया वक्ष्यमाणं धर्मवैपरीत्यज्ञानमिह मोहशब्देन विवक्षितमित्याह—**मोहो विपर्ययज्ञान**मिति । प्रत्ययस्यात्र हेतुमात्रपरतामाह—**विपर्ययज्ञानहेतुरित्यर्थ**इति।**अनवधानमि**त्येतावत्प्रमादशब्दार्थः। **कर्तव्यादी**त्यादिना प्रमादस्य बन्धहेतुत्वनिर्वहणम्; अकर्तव्ये हि प्रवृत्तिः पापिष्ठजन्मादिहेतुर्भवति; एवं कर्तव्यकर्मस्वनारम्भोऽपि; स्मरन्ति हि 'अकुर्वन्विहितं कर्म निन्दितंच समाचरन्। प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः' इति । आलस्यशब्दस्यात्र सप्रयोजनेऽपि विषये प्रवृत्तिविरोधिस्वभावपरतामाह—**स्तब्धते**ति । सर्वदा तमसि वर्तमानेऽपि कदाचिन्निद्रा कुत इत्यत्राह—**इन्द्रियप्रवर्तनश्रान्त्ये**ति । स्वप्नस्यानुक्तिशङ्कापरिहाराय स्वप्नसुषुप्त्योर्निद्राभेदत्वं दर्शयति—**तत्रे**ति । निद्राया बन्धकत्वं चोदितानुष्ठानविरुद्धादकालकरणात्काले चाकरणात्पापिष्ठस्वप्नद्वारा च द्रष्टव्यम् । उक्तं च 'युक्तस्वप्नावबोधस्य' इति ॥ ८ ॥

'सत्त्वं सुखे' इति श्लोकस्य अर्थविभागेन पुनरुक्ततां परिहरति—**सत्त्वादीना**मिति । **सत्त्वं सुखसङ्गप्रधान**मिति—ज्ञानसङ्गोऽपि सुखार्थ इति भावः । **रजः कर्मसङ्गप्रधान**मिति रागतृष्णादयोऽपि हि कर्मणि विश्राम्यन्तीति भावः । निश्शेषज्ञानावरणे सुषुप्तत्वादिरूपत्वात्प्रमादाख्यदशा न स्यादित्यत्राह—**वस्तुयाथात्म्यज्ञानमावृत्ये**ति ॥ ९ ॥

---

प्र-पा ॥ १ ॥ | २. गी. ६-१७ ॥

---

शं॥तमः तृतीयः गुणः अज्ञानजं अज्ञानात् जातं विद्धि. मोहनं मोहकरं अविवेककरं सर्वदेहिनां सर्वेषां देहवताम् । प्रमादालस्यनिद्राभिः प्रमादश्च आलस्यं च निद्रा च प्रमादालस्यनिद्राः ताभिः प्रमादालस्यनिद्राभिः तत् तमः निबध्नाति भारत ! ॥ ८ ॥

पुनः गुणानां व्यापारः संक्षेपतः उच्यते—सत्त्वं सुखे सञ्जयति संश्लेषयति, रजः कर्मणि हे भारत ! 'सञ्जयति' इति अनुवर्तते । ज्ञानं सत्त्वकृतं विवेकं आवृत्य आच्छाद्य तु तमः स्वेन आवरणात्मना प्रमादे सञ्जयति उत प्रमादः प्राप्तकर्तव्याकरणम् ॥

---

आ॥अज्ञानं जायते यतस्तदज्ञानजम्। 'प्रमादमोहौ तमसः' इति वाक्यशेषात्॥ ८ ॥

---

ज॥'तमस्त्वज्ञानजम्'इत्यस्याज्ञानाजातमित्यपव्याख्यां प्रत्याख्यातुमाह—**अज्ञानमि**ति।एतच्च'अन्येष्वपि दृश्यते' इति दृशिग्रहणसामर्थ्याल्लभ्यते । कुतः प्रतीत एवार्थो नेत्यत आह—**प्रमादे**ति । वाक्यशेषेऽज्ञानस्य तमःकार्यत्ववचनादित्यर्थः ॥ ८ ॥

रा॥देहाकारपरिणतायाः प्रकृतेः स्वरूपानुबन्धिनस्सत्त्वादयो गुणाः ; तेच स्वरूपानुबन्धित्वेन सर्वदा सर्वे वर्तन्त इति परस्परविरुद्धं कार्यं कथं जनयन्तीत्यत्राह—

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।**
**रजस्सत्त्वं तमश्चैव तमस्सत्त्वं रजस्तथा ॥ १०**

यद्यपि सत्त्वादयस्त्रयः प्रकृतिसंसृष्टात्मस्वरूपानुबन्धिनः, तथापि प्राचीनकर्मवशाद्देहाप्यायनभूताहारवैषम्याच्च सत्त्वादयः परस्परसमुद्भवाभिभवरूपेण वर्तन्ते ; रजस्तमसी कदाचिदभिभूय सत्त्वमुद्रिक्तं वर्तते ; तथा तमस्सत्त्वे अभिभूय रजः कदाचित्; कदाचिच्च रजस्सत्त्वे अभिभूय तमः ॥ १० ॥

तच्च कार्योपलब्ध्यैवावगच्छेदित्याह—

**सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।**
**ज्ञानं यदा तदा विद्यात् विवृद्धं सत्त्वमित्युत ॥ ११**

सर्वेषु चक्षुरादिषु ज्ञानद्वारेषु यदा वस्तुयाथात्म्यप्रकाशे ज्ञानमुपजायते,

---

ता॥अनन्तरग्रन्थस्यासगतिशङ्कां परिहरति —**देहाकारे**ति। परस्परविरुद्धं यथार्थायथार्थज्ञानसुखदुःखसङ्गादिरूपमित्यर्थः । उद्भवाभिभवानियमप्रसङ्गपरिहाराय भगवदनुग्रहनिग्रहहेतूनां कर्मणां विषमविपाकसमयत्वात्तदनुरूपोद्भवाभिभवप्रवाह उपपद्यत इत्याह—**प्राचीनकर्मवशा**दिति । यथा वातपित्तकफानां तत्तत्प्रचुरैर्द्रव्यैरुपचयं 'वृद्धिस्समानैस्सर्वेषां विपरीतैर्विपर्ययः' इत्यायुर्वेदविदो वदन्ति, तथात्रापि वक्ष्यमाणसात्त्विकाद्याहारभेदादित्याह—**देहाप्यायनभूताहारवैषम्याच्चे**ति । 'ततो देवा अभवन् परासुराः' इत्यादिष्विव भवतिरत्रोद्भवविषय इत्याह—**उद्रिक्तं वर्तत** इति । रजस्तमसोरुद्भूतयोः परिहारार्थमयमुद्भवाभिभवोपदेशः ॥ १० ॥

ते च कुतो ज्ञाते चिकित्सितव्ये इत्यत्र 'सर्वद्वारेषु' इत्यादिश्लोकत्रयमवतारयति—**तच्चे**ति । नात्र द्वारशब्दो नवद्वारविषयः; नाप्येकादशेन्द्रियविषयः, तेषां सर्वेषां ज्ञानेनानन्वयात् ; अतश्चैतन्यप्रसरद्वारभूतमनष्षष्ठज्ञानेन्द्रियवर्गपर इत्याह—**चक्षुरादिज्ञानद्वारेष्वि**ति । प्रकाशशब्दोऽत्र न प्रथमान्तः, ज्ञानशब्देन पुनरुक्तिप्रसङ्गात्, प्रकाश इत्यस्य व्याख्यानं ज्ञानमितीति कैश्चिदुक्तस्य क्लिष्टत्वात् । सप्तम्यन्तत्वे तु ज्ञानफलभूतव्यवहारानुगुण्यविषयतया वा, प्रकाश्यस्वरूपादिपरतया वा, ज्ञानशब्देन मनोवृत्तिविवक्षया वा अन्वय उपपद्यत इत्यभिप्रायेणाह—**वस्तुयाथात्म्यप्रकाशे ज्ञान**मिति ।

प्र-पा॥१. वाग्भटीये अष्टाङ्गहृदये आयुष्कामीये प्रथमाध्याये. १४ श्लोकः ॥ 'रसासृङ्मांसमेदोस्थिमज्जशुक्राणि धातवः । सप्त दूष्या मला मूत्रशकृत्स्वेदादयोऽपि च ॥ १३ ॥ वृद्धि ..विपर्ययः ॥
२. ५. काण्डे ३. प्र. ३. अनु. १. पं॥

---

शां॥ उक्तं कार्यं कदा कुर्वन्ति गुणा इति? उच्यते—रजः तमश्च उभावपि अभिभूय सत्त्वं भवति उद्भवति वर्धते यदा, तदा लब्धात्मकं सत्त्वं स्वकार्यं ज्ञानसुखादि आरभते हे भारत! । तथा रजो गुणः सत्त्वं तमश्च एव उभावपि अभिभूय वर्धते यदा कर्म कृष्यादि स्वकार्यं आरभते । तथा एव तमआख्यो गुणः सत्त्वं रजश्च उभावपि अभिभूय वर्धते यदा, तदा ज्ञानावरणादि स्वकार्यं आरभते ॥ १० ॥

यदा यो गुणः उद्भूतः भवति,तदा तस्य किं लिङ्गम् इति ? उच्यते—सर्वद्वारेषु आत्मनः उपलब्धिद्वाराणि श्रोत्रादीनि सर्वाणि करणानि, तेषु सर्वेषु द्वारेषु अन्तःकर-

रा॥तदा तस्मिन् देहे सत्त्वं प्रवृद्धमिति विद्यात् ॥ ११ ॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमस्स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२

लोभः - स्वकीयद्रव्यस्यात्यागशीलता, प्रवृत्तिः - प्रयोजनमनुद्दिश्यापि चलनस्वभावता, आरम्भः कर्मणां - फलसाधनभूतानां कर्मणामारम्भः, अशमः - इन्द्रियानुपरतिः, स्पृहा - विषयेच्छा, एतानि रजसि प्रवृद्धे जायन्ते, यदा लोभादयो वर्तन्ते तदा रजः प्रवृद्धमिति विद्यादित्यर्थः ॥ १२ ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३

अप्रकाशो ज्ञानानुदयः, अप्रवृत्तिश्च - स्तब्धता, प्रमादः-अकार्यप्रवृत्तिफलमनवधानम्, मोहो - विपरीतज्ञानम्, एतानि तमसि प्रवृद्धे जायन्ते, एतैस्तमः प्रवृद्धमिति विद्यात् ॥ १३ ॥

---

ता॥एतेन 'प्रकाश आलोकस्थानीयः, ज्ञानं चक्षुस्स्थानीयम्' इति वदन्तो निरस्ताः।एकस्यैव योगिनः सौभर्यादेर्युगपत्परिगृहीतानेकदेहस्य देहभेदेन गुणभेदवृद्धिसंभवज्ञापनार्थं युगपन्महाप्रलयादिवत्सर्वसाधारण्यपरिहारार्थं च 'अस्मिन् देहे' इति विशेषितमित्याह—**तदा तस्मिन् देहे सत्त्वं प्रवृद्धमिति** ॥

'लोभः प्रवृत्तिः' इत्यादौ स्पृहाशब्दपौनरुक्त्यपरिहाराय रूढिप्रकर्षसिद्धं लोभशब्दार्थमाह—**स्वकीयद्रव्यस्यात्यागशीलतेति** । आरम्भशब्दस्साभिसन्धिकप्रवृत्तौ समग्रप्रयोगः। अत्र 'कर्मणाम्' इति समभिव्याहारस्वारस्याच्च तत्सिद्धम्। अतोऽत्रारम्भशब्दो दृष्टादृष्टफलसाधनभूतकृषियज्ञादिविषयः। अतश्च प्रवृत्तिशब्दोऽत्र ततो व्यावृत्ततृणच्छेदाङ्गकम्पादिवृथाचेष्टाविषय इत्याह—**प्रयोजनमनुद्दिश्यापिचलनस्वभावतेति** । द्वाभ्यामपौनरुक्त्याय अशमोऽत्र प्रवृत्तिहेतुरिन्द्रियोद्रिक्ततेत्याह—**इन्द्रियानुपरतिरिति** । पूर्वश्लोकवदत्रापि गुणविवृद्धिलिङ्गोपदेशपरतामाह— **यदेति** ॥ १२ ॥

'अप्रकाशोऽप्रवृत्तिश्च' इति श्लोके प्रमादो हि समीक्षावसरे सत्यप्यसमीक्षा, अतोऽप्रकाशप्रमादयोस्सामान्यविशेषरूपत्वाद्गोबलीवर्दनयेनापुनरुक्तिरित्यभिप्रायेणाह—**अप्रकाशो ज्ञानानुदय इति**। प्रागुक्तनिद्रादिरूप इहायमभिप्रेतः। अप्रवृत्तिश्च प्रागुक्तमालस्यमित्याह—**स्तब्धतेति** । मोहप्रमादावपि हि तावेव ॥ १३ ॥

---

शं॥णस्य बुद्धेः व्याप्तिः प्रकाशः देहे अस्मिन् प्रकाशशब्दवाच्यः सर्वद्वारेषु उपजायते । तदेव ज्ञानम् । यदा एवं प्रकाशो ज्ञानाख्यः उपजायते, तदा ज्ञानप्रकाशेन लिङ्गेन विद्यात् विवृद्धं उद्भूतं सत्त्वं इति उत अपि ॥ ११ ॥

रजसः उद्भूतस्य, इदं चिह्नं, लोभः परद्रव्यादित्सा, प्रवृत्तिः प्रवर्तनं सामान्यचेष्टा, आरम्भः कस्य? कर्मणाम्, अशमः अनुपशमः, हर्षरागादिप्रवृत्तिः, स्पृहा सर्वसामान्यवस्तुविषया तृष्णा, रजसि गुणे विवृद्धे एतानि लिङ्गानि जायन्ते हे भरतर्षभ! ॥ १२ ॥

अप्रकाशः अविवेकः, अत्यन्तम् अप्रवृत्तिश्च प्रवृत्त्यभावः तत्कार्यं,प्रमादो मोह एव च तत्कार्ये, अविवेकः मूढता इत्यर्थः । तमसि गुणे विवृद्धे एतानि लिङ्गानि जायन्ते हे कुरुनन्दन! ॥ १३ ॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४

रा॥यदा सत्त्वं प्रवृद्धं,तदा सत्त्वे प्रवृद्धे देहभृत् प्रलयं-मरणं याति चेत्, उत्तमविदाम्-उत्तमतत्त्वविदामात्मयाथात्म्यविदां लोकान्—समूहान् अमलान्—मलरहितान्, अज्ञानरहितान् प्रतिपद्यते—प्राप्नोति ; सत्त्वे प्रवृद्धे तु मृतः आत्मविदां कुलेषु जनित्वा आत्मयाथात्म्यज्ञानसाधनेषु पुण्यकर्मस्वधिकरोतीत्युक्तं भवति ॥ १४ ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।

रजसि प्रवृद्धे मरणं प्राप्य फलार्थं कर्म कुर्वतां कुलेषु जायते ; तत्र जनित्वा स्वर्गादिफलसाधनकर्मस्वधिकरोतीत्यर्थः ॥

तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५

तथा तमसि प्रवृद्धे मृतो मूढयोनिषु—श्वसूकरादियोनिषु जायते ; सकलपुरुषार्थारम्भानर्हो जायत इत्यर्थः ॥ १५ ॥

कर्मणस्सुकृतस्याहुस्सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६

एवं सत्त्ववृद्धौ मरणमुपगम्यात्मविदां कुले जातेनानुष्ठितस्य सुकृतस्य—फलाभिसन्धिरहितस्य मदाराधनरूपस्य कर्मणः फलं पुनरपि ततोऽधिकसत्त्वजनितं निर्मलं-दुःखगन्धरहितं भवतीत्याहुस्सत्त्वगुणपरिणामविदः । अन्त्यकालप्रवृद्धस्य रजसस्तु फलं फलसाधनकर्मसङ्गिकुलजन्मफलाभिसन्धिपूर्वककर्मारम्भतत्फलानुभवपुनर्जन्मरजोवृद्धिफलाभिसन्धिपूर्वककर्मारम्भपरम्परारूपसांसारिकदुःखप्रायमेवेत्याहुस्तद्गुणयाथा -

---

ता॥अन्त्यकाले रजस्तमस्समुद्भवहेतूनामादावेव परिहरणार्थमन्त्यकालप्रवृद्धानां गुणानां पृथक्फलमुच्यते —'यदा सत्त्वे' इत्यादिना श्लोकद्वयेन । देहप्रलयविवक्षया देहभृदिति विशेषणमित्यभिप्रायेणाह —मरणं यातीति । उत्तम * ॥ १४ ॥

---

प्र-पा ॥ * इतः परं श्लोकपञ्चकस्य तात्पर्यचन्द्रिका न लभ्यते। लब्धाचेन्मुद्र्यते ॥

---

शं॥मरणद्वारेणापि यत् फलं प्राप्यते, तदपि सङ्गरागहेतुकं सर्वं गौणमेव इति दर्शयन् आह—यदा सत्त्वे प्रवृद्धे तु उद्भूते तु प्रलयं मरणं याति प्रतिपद्यते देहभृत् आत्मा, तदा उत्तमविदाम् महदादितत्त्वविदाम् इत्येतत् , लोकान् अमलान् मलरहितान् प्रतिपद्यते प्राप्नोति इत्येतत् ॥ १४ ॥

रजसि प्रवृद्धे तु प्रलयं मरणं गत्वा प्राप्य कर्मसङ्गिषु कर्मासक्तियुक्तेषु मनुष्येषु जायते । तथा तद्वदेव प्रलीनः मृतः तमसि प्रवृद्धे मूढयोनिषु पश्वादियोनिषु जायते ॥

अतीतश्लोकार्थस्यैव संक्षेपः उच्यते—कर्मणः सुकृतस्य सात्त्विकस्य इत्यर्थः,

---

आ॥'रजसस्तु फलं दुःखम्' इत्यल्पसुखंदुःखम् । तथा हि शार्कराक्ष्यशाखायां—

---

ज॥दुःखशब्दः केवलदुःखवाचीत्यन्यथाप्रतीतिनिरासायाह—रजस इति।दुःखशब्देनोच्यतइति शेषः।तत्कथमित्यत उक्तम्—अल्पेति।अल्पत्वात्सुखस्याविवक्षेति भावः।कुत इत्यत आह—तथाहीति।

रा॥त्म्यविदः।अज्ञानं तमसः फलम्-एवमन्त्यकालप्रवृद्धस्य तमसः फलम् अज्ञानपरम्परारूपम् ॥ १६ ॥

तदधिकसत्त्वादिजनितं निर्मलादिफलं किमित्यत्राह—

सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७

एवं परम्परया जातादधिकसत्त्वादात्मयाथात्म्यापरोक्षरूपं ज्ञानं जायते ; तथा प्रवृद्धाद्रजसस्स्वर्गादिफललोभो जायते ; तथा प्रवृद्धाच्च तमसः प्रमादः—अनवधाननिमित्तासत्कर्मणि प्रवृत्तिः ; ततश्च मोहो—विपरीतज्ञानम् ; ततश्चाधिकतरं तमः ; ततश्चाज्ञानं—ज्ञानाभावः ॥ १७ ॥

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८

एवमुक्तेन प्रकारेण सत्त्वस्था ऊर्ध्वं गच्छन्ति - क्रमेण संसारबन्धान्मोक्षं गच्छन्ति; रजसस्स्वर्गादिफललोभकरत्वाद्राजसाः फलसाधनभूतं कर्मानुष्ठाय तत्फलमनुभूय पुनरपि जनित्वा तदेव कर्मानुतिष्ठन्तीति मध्ये तिष्ठन्ति : पुनरावृत्तिरूपतया दुःखप्रायमेव तत् ; तामसास्तु जघन्यगुणवृत्तिस्था उत्तरोत्तरनिकृष्टतमोगुणवृत्तिषु स्थिता अधो गच्छन्ति,अन्त्यत्वं,ततस्तिर्यक्त्वं,ततः क्रिमिकीटादिजन्म, स्थावरत्वं,ततोऽपि गुल्मलतात्वं, ततश्च शिलाकाष्ठलोष्टतृणादित्वं गच्छन्तीत्यर्थः ॥ १८ ॥

ता॥नोच्यन्ते । देवलोकशब्दो वा परब्रह्मलोकमपि संगृह्णातीति ॥ १८ ॥

शं॥आहुः शिष्टाः सात्त्विकम् एव निर्मलं फलम् इति। रजसस्तु —राजसस्य कर्मणः इत्यर्थः, कर्माधिकारात्—फलम् अपि दुःखम् एव, कारणानुरूप्यात् राजसमेव । तथा अज्ञानं तमसः तामसस्य कर्मणः अधर्मस्य फलं पूर्ववत् ॥ १६ ॥

किञ्च गुणेभ्यो भवति —सत्त्वात् लब्धात्मकात् सञ्जायते समुत्पद्यते ज्ञानं, रजसो लोभ एव च, प्रमादमोहौ प्रमादश्च मोहश्च प्रमादमोहौ उभौ तमसो गुणात् भवतः, अज्ञानमेव च भवति ॥ १७ ॥

किञ्च—ऊर्ध्वं गच्छन्ति देवलोकादिषु उत्पद्यन्ते, सत्त्वस्थाः सत्त्वगुणवृत्तस्थाः । मध्ये तिष्ठन्ति मनुष्येषु राजसाः । जघन्यगुणवृत्तस्थाः जघन्यश्च असौ गुणश्च जघन्यगुणः तमः, तस्य वृत्तं निद्रालस्यादि, तस्मिन् स्थिताः जघन्यगुणवृत्तस्थाः मूढाः अधः गच्छन्ति पश्वादियोनिषु उत्पद्यन्ते, के ? तामसाः ॥ १८ ॥

आ॥' रजसो ह्येव जायते मात्रया सुखं दुःखं तस्मात्तान्सुखिनो दुःखिन इत्याचक्षते'इति। अन्यथा दुःखस्यातिकष्टत्वात्तमोधिकत्वं रजसो न स्यात् ॥ १६ ॥

जा॥रजस इति, पञ्चमी। मात्रयेति सुखविशेषणम्।स्तोकात्मकं सुखं दुःखं चेत्यर्थः। तान् राजसकर्मिणः। केवलदुःखार्थाङ्गीकारे बाधकं चाह—**अन्यथेति** ।**अतिकष्टत्वात्**—ज्ञानादपि कष्टत्वात्। तत्फलकस्य रजसः । तथा च 'मध्ये तिष्ठन्ति राजसाः' ' अधो गच्छन्ति तामसाः ' इत्याद्ययुक्तं स्यादिति भावः॥

97

रा॥आहारविशेषैः फलाभिसन्धिरहितसुकृतविशेषैश्च परम्परया प्रवर्धितसत्त्वानां गुणात्ययद्वारेण ऊर्ध्वगमनप्रकारमाह—

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९**

एवं सात्त्विकाहारसेवया फलाभिसन्धिरहितभगवदाराधनरूपकर्मानुष्ठानैश्च रजस्तमसी सर्वात्मनाभिभूय उत्कृष्टसत्त्वनिष्ठो यदाऽयं द्रष्टा गुणेभ्योऽन्यं कर्तारं नानुपश्यति; गुणा एव स्वानुगुणप्रवृत्तिषु कर्तार इति पश्यति;गुणेभ्यश्च परं वेत्ति-कर्तृभ्यो गुणेभ्यश्च परम्-अन्यमात्मानमकर्तारं वेत्ति; स मद्भावमधिगच्छति - मम यो भावस्तमधिगच्छति;

ता॥ननु'ऊर्ध्वं गच्छन्ति सत्वस्थाः' इति यदि सत्त्वस्थस्यापवर्गोऽभिधीयते ; तर्ह्यनन्तरं गुणत्रयातीतस्यापवर्गवचनं व्याहन्येतेति शङ्कायामनन्तरग्रन्थमवतारयति—**आहारविशेषैरिति** । आहारविशेषादेस्सत्त्वविवृद्धिहेतुत्वं पूर्वापरसिद्धं। सांसारिकत्रिगुणातिक्रमः, प्रवृद्धेन सत्त्वेनोर्ध्वगमनं च सुसंगतमिति भावः । 'यज्ञशिष्टाशिनस्सन्तः' 'भोक्तारं यज्ञतपसां' 'रजस्तमश्चाभिभूय सत्त्वं भवति भारत' इति पूर्वोक्तानुसारेण प्रकृतसंगतमर्थमाह—**एवंसात्त्विकाहारेति**।**सर्वात्मनेति** अपुनरुद्भवमित्यर्थः।'नान्यं गुणेभ्यः कर्तारम्'इति गुणव्यतिरिक्तस्य कर्तृत्वनिषेधः । तत्र कर्तुरात्मनो गुणेभ्योऽन्यत्वनिषेधधीर्माभूदित्याह—**गुणाएवेति** । पुरुषधर्मभूतप्रयत्नाश्रयत्वलक्षणकर्तृत्वव्युदासायाह—**स्वानुगुणप्रवृत्तिषु कर्तार** इति । कचित्कर्तृत्वानुदर्शनस्यानात्मविदामपि संभवात्ततो विशेष उच्यते—**गुणेभ्यश्चेति**। परत्वं प्रकृताकारापेक्षया नियन्तुमाह-**कर्तृभ्यइति**।'कर्तृभ्यः परम्' इत्युक्त्या कर्तृत्वातिशयधीव्युदासः-**अन्यमिति** । गुणानां परस्परमिवान्यत्वेऽपि कर्तृत्वमविरुद्धमित्यत्र प्रस्तुताकारविरहोऽन्यशब्दाभिप्रेत इत्याह—**अकर्तारमिति** । गुणाश्रयप्रवृत्तीनामनाश्रयभूतं स्वतश्च तन्मूलप्रवृत्त्यनर्हमित्यर्थः । स्वरूपैक्यभ्रमव्युदासायानन्तरग्रन्थइत्यभिप्रायेण मद्भावशब्दार्थमाह—**ममयोभावइति**।गुणानां कर्तृत्वज्ञानम-

प्र-पा ॥ १. गी. ३-१३ ॥ २. गी ५-२९ ॥ ३. गी. १४-१० ॥

शं॥ 'पुरुषस्य प्रकृतिस्थत्वरूपेण मिथ्याज्ञानेन युक्तस्य भोग्येषु गुणेषु सुखदुःखमोहात्मकेषु 'सुखी दुःखी मूढः अहम् अस्मि' इत्येवंरूपः यः सङ्गः सः कारणं पुरुषस्य सदसद्योनिजन्मप्राप्तिलक्षणस्य संसारस्य' इति समासेन पूर्वाध्याये यत् उक्तं, तत् इह 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः' इति आरभ्य गुणस्वरूपं, गुणवृत्तं, स्ववृत्तेन च गुणानां बन्धकत्वं, गुणवृत्तनिबद्धस्य च पुरुषस्य या गतिः, इत्येतत् सर्वं मिथ्याज्ञानमूलं बन्धकारणं विस्तरेण उक्त्वा, अधुना सम्यग्दर्शनात् मोक्षो वक्तव्यः इत्यतः आह भगवान्—न अन्यं कार्यकारणविषयाकारेण परिणतेभ्यः गुणेभ्यः कर्तारम् अन्यं यदा द्रष्टा विद्वान् सन् न अनुपश्यति, 'गुणाः एव सर्वावस्थासु सर्वकर्मणां कर्तारः'

आ॥परिणामिकर्त्तारं गुणेभ्योऽन्यं न पश्यति । अन्यथा 'यदा पश्यः पश्यते रुक्मवर्णं

ज॥'नान्यं गुणेभ्यः कर्तारम्' इति स्वतन्त्रकर्तृत्वं गुणानामेव नान्यस्येत्युच्यत इत्यपव्याख्याननिरासार्थमाह—**परिणामीति** । कुत एतदित्यत आह—**अन्यथेति**। गुणेभ्योऽन्यस्य कर्तृत्वाभावे। मोक्ष-

रा॥एतदुक्तं भवति—आत्मनस्स्वतः परिशुद्धस्वभावस्य पूर्वपूर्वकर्ममूलगुणसङ्गनिमित्तं विविधकर्मसु कर्तृत्वम्; आत्मा स्वतस्त्वकर्ता अपरिच्छिन्नज्ञानैकाकार इत्येवमात्मानं यदा पश्यति, तदा मद्भावमधिगच्छतीति ॥ १९ ॥

कर्तृभ्यो गुणेभ्योऽन्यमकर्तारमात्मानं पश्यन् भगवद्भावमधिगच्छतीत्युक्तम्; स भगवद्भावः कीदृश इत्यत आह—

**गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २०**

ता॥नुपयुक्तम्, आत्मनोऽकर्तृत्वं तु 'कर्ता शास्त्रार्थवत्त्वात्' इत्यादिविरुद्धम्; तत्राह—**एतदुक्तमिति**। पुण्यपापरूपेषु लौकिकेषु च कर्मसु कर्तृत्वमस्वाभाविकं, न पुनः प्रयत्नाश्रयत्वमित्यभिप्रायेणाह—**आत्मनस्स्वत** इति। एतेन परशब्दस्यात्र परमात्मपरत्वं न विवक्षितमित्यपि दर्शितम्। **विविधकर्मस्विति**—सांसारिकसात्त्विकराजसतामसकर्मस्वित्यर्थः। **स्वतस्त्वकर्ते**ति-गुणकृतेषु तेष्वेव; अन्यथा 'जक्षत्क्रीडन्' इत्यादिविरोधात्। अत्र 'मद्भावम्' इति तादात्म्यं प्रतीतं स्यात्, तच्च 'मम साधर्म्यमागताः' इति प्रागुक्तविरुद्धम्। श्रुतिश्च 'परमं साम्यमुपैति' इति। श्रुत्यन्तरं च 'यथोदके शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतम' इति। अत्रोदकद्वयस्य संसर्गेऽपि स्वरूपैक्यासंभवात्तादृक्छब्दस्वारस्याच्च साम्यपरत्वं व्यक्तम्। आह च जनकाय वसिष्ठः—'परेण परधर्मा च भवत्येष समेत्य वै। विशुद्धधर्मा शुद्धेन बुद्धेन च स बुद्धिमान्। विमुक्तधर्मा मुक्तेन समेत्य हि तदा भवेत्। वियोगधर्मिणा चैव वियोगात्मा भवत्यपि। विमोक्षिणा विमोक्षी च समेत्येह तदा भवेत्। शुचिना च शुचिश्चैव भवत्यमितदीप्तिमान्। विमलात्मा भवत्येष समेत्य विमलात्मना। केवलात्मा तथाचैव केवलेन समेत्य वै। स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुयात्' इति ॥ १९ ॥

तदेवमनेकश्रुतिस्मृत्यादिविरुद्धं मुक्तस्य भगवत्त्वं कथमुच्यत इति शङ्कायामुक्तमर्थं कर्तृभ्य इत्यादिनानूद्यानन्तरश्लोकमवतारयति—**स भगवद्भावःकीदृश** इति। 'देहसमुद्भवान्' इत्यत्र देहोत्पत्तिबीजभूतानिति परव्याख्यानमयुक्तम्, 'गुणाः प्रकृतिसंभवाः' इतिवदत्रापि प्रकृतिपरिणतिरूपदे-

प्र-पा ॥ १. शारी. २-३-३३ ॥
२. छा. ८-१२-३ ॥
३. गी. १४-२ ॥ ४. मु. ३-१-३ ॥
५. कठोप. २-४-१५ ॥ सर्वत्रैकात्म्यज्ञानस्य फलमाह—यथोदकमिति। यथा शुद्धे-शुद्धजलं प्रक्षिप्तन्तत्सदृशमेव भवति, नतु किञ्चिदपि वैसादृश्यम्। एवम्मननिदिध्यासनशीलस्यात्मापि परमात्मसदृश एवेत्यर्थः। गौतमेति सहर्षं सम्बोधनम् ॥
६. भारते. शान्ति मोक्ष. ३१३. अध्या. २६-३०. श्लोकाः। अत्र मुक्तस्यस्वातन्त्र्योक्तिः-अकर्मवश्यत्वाभिप्रायेति श्रीरहस्यत्रयसारे (२२) अधिकारे गुरुभिरेवोक्तम्। मुक्तविषयस्वराट्छब्दस्यार्थः-'अकर्मवश्यः' इति भाष्यकारैरुक्तम् इत्यपि तत्रैवानुगृहीतम् ॥

शं॥इत्येवं पश्यति, गुणेभ्यश्च परं गुणव्यापारसाक्षिभूतं वेत्ति, मद्भावं मम भावं वासुदेवत्वं 'वासुदेवः सर्वम्' इत्येवं पश्यन् सन् सः द्रष्टा अधिगच्छति ॥ १९ ॥

कथं सः अधिगच्छति इति? उच्यते—गुणान् एतान् यथोक्तान् अतीत्य जीव

आ॥कर्तारमीशं पुरुषं ब्रह्मयोनिम्' इति श्रुतिविरोधः। 'नाहं कर्त्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः' इति मोक्षधर्मे ॥ १९ ॥

ज॥धर्मे परमेश्वरस्य कर्तृत्वमुक्तं, तद्विरोधश्चेति वाक्यशेषः ॥ १९ ॥

रा॥अयं देही देहसमुद्भवान्—देहाकारपरिणतप्रकृतिसमुद्भवानेतान् सत्त्वादीन् त्रीन् गुणानतीत्य तेभ्योऽन्यं ज्ञानैकाकारमात्मानं पश्यन् जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमात्मानमनुभवति : एष मद्भाव इत्यर्थः ॥ २० ॥

अथ गुणातीतस्य स्वरूपसूचनाचारप्रकारं गुणात्ययहेतुं च पृच्छन् अर्जुन उवाच—

अर्जुन उवाच—

कैर्लिङ्गैस्त्रिगुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥ २१

सत्त्वादीन् त्रीन् गुणानेतानतीतः कैर्लिङ्गैः-कैर्लक्षणैः उपलक्षितो भवति;किमाचारः-केनाचारेण युक्तोऽसौ : अस्य स्वरूपावगतिलिङ्गभूताचारः कीदृश इत्यर्थः; कथं चैतान् —केनोपायेन सत्त्वादींस्त्रीन् गुणानतिवर्तते ॥ २१ ॥

श्रीभगवानुवाच—

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२

---

ता॥हाश्रयत्ववचनस्य युक्तत्वादित्यभिप्रायेणाह—**देहाकारपरिणतप्रकृतिसमुद्भवानि**ति। वक्ष्यमाणप्रकारेण गुणात्ययो बद्धदशायामेवेत्याह-**गुणानतीत्य तेभ्योऽन्यमि**त्यादिना। **जन्ममृत्युजरादुःखैः** जन्मादिकृतैर्दुःखैरित्यर्थः। —जन्मादिभिस्तत्साध्यैश्च दुःखैरिति वा। 'मद्भावं सोऽधिगच्छति' इत्युक्तमेव 'विमुक्तोऽमृतमश्नुते' इत्यनेन विवृतमित्याह—**आत्मानमनुभवतीति । एषमद्भावइत्यर्थ**इति—एष इति न पुनश्श्रुत्यादिविरुद्ध इत्यर्थः ॥ २० ॥

अत्र स्वावस्थानिरूपणाद्यर्थम् अर्जुनप्रश्नमवतारयति—**अथे**ति। 'कैर्लिङ्गैः' 'किमाचारः' इत्यनयोरान्तरबाह्यरूपोपलक्षणपरत्वादेकराशित्वं 'कथं च' इत्युपायस्य पृथक्प्रश्नश्चेत्यभिप्रेत्याह **स्वरूपसूचनाचारप्रकारं गुणात्ययहेतुंचे**ति। लिङ्गशब्दस्य वेषादावपि प्रयोगात्तस्यच 'न लिङ्गं धर्मकारणम्' इति गुणातीतोपलक्षणत्वायोगादान्तरशमाद्यसाधारणधर्मविवक्षामभिप्रेत्याह—**कैर्लक्षणैरि**ति। 'किमाचारः' इत्यस्य कोऽस्याचार इति बहुव्रीहिमभिप्रेत्याह—**केनाचारेण युक्तोऽसावि**ति। अत्राचारशब्दस्याव्यभिचारिबाह्यलिङ्गपरतामाह—**अस्य स्वरूपावगतिलिङ्गभूते**ति । यद्यपि स्वसंवेद्यैरान्तरैस्स्वस्मिन् गुणात्ययः प्रतीयेत, तथापि परेषु बाह्यैराचारैस्तदनुमानामिति तदर्थं पृथक्प्रश्न इति भावः । कथंशब्दस्यात्रोपायभूतप्रकारपरतायाः प्रतिवचनप्रकारेणावगतत्वात् प्रतिक्षेपपरतामनुष्ठानबाह्यफलदशाप्रकारपरतां च व्युदस्यति—**केनोपाये**नेति ॥ २१ ॥

---

शं॥त्नेव अतिक्रम्य मायोपाधिभूतान् त्रीन् देही देहसमुद्भवान् देहोत्पत्तिबीजभूतान् जन्ममृत्युजरादुःखैः जन्म च मृत्युश्च जरा च दुःखं च जन्म मृत्युजरादुःखानि तैः जीवन्नेव विमुक्तः सन् विद्वान् अमृतम् अश्नुते, एवं मद्भावम् अधिगच्छति इत्यर्थः ॥ २० ॥

जीवन्नेव गुणान् अतीत्य अमृतम् अश्नुते इति प्रश्नबीजं प्रतिलभ्य, अर्जुन उवाच —कैः लिङ्गैः चिह्नैः त्रीन् गुणान् एतान् व्याख्यातान् अतीतः अतिक्रान्तः भवति प्रभो किमाचारः कः अस्य आचारः इति किमाचारः कथं केन च प्रकारेण एतान् त्रीन् गुणान् अतिवर्तते अतीत्य वर्तते ॥ २१ ॥

रा॥आत्मव्यतिरिक्तेषु वस्तुष्वनिष्टेषु सम्प्रवृत्तानि सत्त्वरजस्तमसां कार्याणि प्रकाशप्रवृत्तिमोहाख्यानि यो न द्वेष्टि, तथा आत्मव्यतिरिक्तेष्विष्टेषु वस्तुषु तान्येव निवृत्तानि न काङ्क्षति २२ ॥

---

ता॥आत्मव्यतिरिक्तेष्वित्यादि—अयमभिप्रायः—'आत्मव्यतिरिक्तानि वस्तूनि द्विविधानि इष्टान्यनिष्टानिच ; तत्रानिष्टतत्साधनेषु संप्रयुक्तेषु द्वेषः ; इष्टतत्साधनेषु च निवृत्तेषु काङ्क्षेति लोकसिद्धम् ; तत्रानिष्टेषु साध्येषु साधनतया संप्रवृत्तानि गुणकार्याणि यो न द्वेष्टि ; इष्टेषु च साध्येषु साधनतया स्थित्वा विनिवृत्तानि पुनर्न काङ्क्षति । प्रकाशस्यानिष्टसाधनत्वं भयादिहेतुषु व्यक्तम् ; इष्टसाधनत्वमनुकूलविषयेषु प्रवृत्तेरपथ्यभेषजादिषु मोहस्यानुकूलेषु प्रतिकूलबुद्धौ प्रतिकूलेषु वानुकूलबुद्धौ—इति। द्वेषकाङ्क्षयोः प्रतिषेधार्थप्रसङ्गसिद्ध्यर्थम् इष्टानिष्टोक्तिः ॥ २२ ॥

---

शं॥गुणातीतस्य लक्षणं गुणातीतत्वोपायं च अर्जुनेन पृष्टः अस्मिन् श्लोके प्रश्नद्वयार्थं प्रतिवचनं भगवान् उवाच । यत् तावत् 'कैः लिङ्गैः युक्तो गुणातीतो भवति' इति, तत् शृणु—प्रकाशं च सत्त्वकार्यं, प्रवृत्तिं च रजःकार्यं, मोहमेव च तमःकार्यम्, इत्येतानि न द्वेष्टि सम्प्रवृत्तानि सम्यग्विषयभावेन उद्भूतानि—'मम तामसः प्रत्ययो जातः, तेन अहं मूढः; तथा राजसी प्रवृत्तिः मम उत्पन्ना दुःखात्मिका, तेन अहं रजसा प्रवर्तितः प्रचलितः स्वरूपात् ; कष्टं मम वर्तते यः अयं स्वरूपावस्थाभ्रंशः ; तथा सात्त्विको गुणः प्रकाशात्मा मां विवेकित्वम् आपादयन् सुखेन च आसञ्जयन् बध्नाति' इति तानि द्वेष्टि असम्यग्दर्शित्वेन । तत् एवं गुणातीतो न द्वेष्टि सम्प्रवृत्तानि । यथा च सात्त्विकादिः पुरुषः सत्त्वादिकार्याणि आत्मानं प्रति प्रकाश्य निवृत्तानि काङ्क्षति, न

---

आ॥प्रायो न द्वेष्टि न काङ्क्षति तथा हि सामवेदे भाल्लवेयशाखायां—'रजस्तमः सत्त्वगुणान्प्रवृत्तान्प्रायो न च द्वेष्टि न चापि काङ्क्षति । तथाऽपि सूक्ष्मं सत्त्वगुणं च काङ्क्षेद्यदि प्रविष्टं सुतमश्च जह्यात्' इति । 'न हि देवा ऋषयश्च सत्त्वस्था नृपसत्तम । हीनाः सत्त्वेन सूक्ष्मेण ततो वैकारिका मताः ॥ कथं वैकारिको गच्छेत्पुरुषः पुरुषोत्तमम्' इति मोक्षधर्मे । 'सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षार्थनिश्चितः' इति च ॥ २२ ॥

---

ज॥'प्रकाशं च प्रवृत्तिंच' इत्यनेन गुणातीतस्य सर्वथा सत्त्वादिगुणकार्येषु प्रकाशादिषु द्वेषाकांक्षे न स्त इत्युच्यत इत्यन्यथाप्रतीतिनिरासार्थमाह—प्रायइति । इदमुक्तं भवति—सत्त्वादयो गुणा द्विविधाः, स्थूलाः सूक्ष्माश्च । तत्र स्थूलेभ्यो लौकिकाः प्रकाशप्रवृत्तिमोहाः जायन्ते । सूक्ष्मेभ्यस्तु परमेश्वरादिविषयाः । तत्राद्येषु गुणातीतस्य द्वेषाकांक्षे प्रायो न स्तः ; न तु सर्वथा प्रारब्धवशात्कदाचित्संभवात् । द्वितीयेषु तु आकाङ्क्षादिकं विद्यत एव, इति । कुत एतदित्यत आह—तथाहीति। यद्यपि न द्वेष्टीत्यादिकमुक्तम् , तथाऽपि यदि सुतमः—सूक्ष्मतमो दैववशात्तं प्रविष्टं स्यात्;तदाऽसौ तज्जह्यात् द्विष्यात् । गुणातीतानां च सूक्ष्मसत्त्वसद्भावे भारतवाक्यं च पठति—नहीति । यदि देवा ऋषयश्च सूक्ष्मेण सत्त्वेन हीनाः स्युः, तदा सत्त्वस्था इति नोच्येरन्; किं तु ततः-तदा वैकारिकाः मताः प्रसज्येरम् ; ततः किं कथं वैकारिको गच्छेत् पुरुषोत्तमम् । तेषां मोक्षो न स्यादिति यावत् । अस्ति च तेषां मोक्षः अतः सूक्ष्मसत्त्ववन्त एव त इत्यर्थः ; 'सात्त्विकः सूक्ष्मसत्त्ववान्' 'ससूक्ष्मसत्त्वसंयुक्तः संयुक्तस्त्रिभिरक्षरैः । पुरुषः पुरुषं गच्छेन्निष्क्रियः पञ्चविंशकः' इति सूक्ष्मसत्त्वप्रकरणात्। मोक्षार्थनिश्चितः मोक्षलक्षणे पुरुषार्थे निश्चितः ॥ २२ ॥

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३

रा॥उदासीनवदासीनः - गुणव्यतिरिक्तात्मावलोकनतृप्त्या अन्यत्रोदासीनवदासीनः गुणैर्द्वेषाकाङ्क्षाद्वारेण यो न विचाल्यते ; गुणास्स्वेषु कार्येषु प्रकाशादिषु वर्तन्त इत्यनुसन्धाय यस्तूष्णीमवतिष्ठते ; नेङ्गते—न गुणकार्यानुगुणं चेष्टते ॥ २३ ॥

समदुःखसुखस्स्वस्थस्समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४
मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतस्स उच्यते ॥ २५

समदुःखसुखः - सुखदुःखयोस्समचित्तः, स्वस्थः - स्वस्मिन् स्थितस्स्वात्मैकप्रियत्वेन तद्व्यतिरिक्तपुत्रादिजन्ममरणादिसुखदुःखयोस्समचित्त इत्यर्थः ; तत एव समलो-

ता॥कथं तर्ह्येते?कथंच सशरीर इष्टानिष्टसाधनसंपत्तौ न विक्रियेतेत्यत्रोत्तरम्—उदासीनवदिति । आत्मव्यतिरिक्तौदासीन्यं च गुणकार्यद्वेषकाङ्क्षानिवृत्तिहेतुः। न विचाल्यते - बाह्यविषयेषु कार्यद्वारा न प्रवर्तत इत्यर्थः।अविचाल्यत्वविवरणाय द्वेषाकाङ्क्षाद्वारेणेति विचलनप्रकारोक्तिः।'गुणा गुणेषु वर्तन्ते' इत्युक्तस्य 'गुणा वर्तन्ते' इत्यस्य चैकार्थ्यं दर्शयन्नविचाल्यताहेतुमाह—गुणास्स्वेषुकार्येष्विति । इतिकरणमनुसंधानप्रकारपरमित्याह—अनुसंधायेति । एवकाराभिप्रेतमाह—तूष्णीमिति । छन्दोभङ्गभयादार्षं परस्मैपदमित्याह—तूष्णीमवतिष्ठतइति । स्वकार्यप्रवृत्तैः किमेभिर्ममेति भावः । तदेतदौदासीन्यविवरणम्। 'न विचाल्यते'इत्यनेन 'नेङ्गते' इति विवृतम् । तदाह— न गुणकार्यानुगुणं चेष्टतइति । न द्वेषकाङ्क्षानुगुणं प्रवर्तत इत्यर्थः ॥ २३ ॥

समदुःखसुखत्वादिकं प्रागेव सुशिक्षितम्, स्वस्थशब्देन विकाराराहित्यगुणाननुविधानादिमात्रप्रतिपादनं पुनरुक्तम् ; आत्मनिष्ठताविधानं तु बहुविधसमचित्ततापतिपादने हेतुतयोपयुक्तमित्यभिप्रायेणाह—स्वस्मिन् स्थितइति । तदभिप्रेतमाह—स्वात्मैकप्रियत्वेनेति । सुखदुःखप्रियाप्रियादिशब्दानामनतिभिन्नार्थानामपि लोकव्यवहारच्छायया पुनरुक्तिः परिहृता । तत एव—स्वस्थत्वादेवेत्यर्थः ।

प्र-पा ॥ १. गी ॥

शं॥तथा गुणातीतो निवृत्तानि काङ्क्षति इत्यर्थः। एतत् न परप्रत्यक्षं लिङ्गम्। किं तर्हि?—स्वात्मप्रत्यक्षत्वात् आत्मार्थमेव एतत् लक्षणम् । न हि स्वात्मविषयं द्वेषं काङ्क्षां वा परः पश्यति ॥ २२ ॥

अथ इदानीं 'गुणातीतः किमाचारः?' इति प्रश्नस्य प्रतिवचनम् आह—उदासीनवत् यथा उदासीनः न कस्यचित् पक्षं भजते, तथा अयं गुणातीतत्वोपायमार्गे स्थितः आसीनः आत्मवित् गुणैः यः संन्यासी न विचाल्यते विवेकदर्शनावस्थातः । तदेतत् स्फुटीकरोति—गुणाः कार्यकरणविषयाकारेण परिणताः अन्योन्यस्मिन् वर्तन्ते इति यः अवतिष्ठति—छन्दोभङ्गभयात् परस्मैपदप्रयोगः—'यः अनुतिष्ठति'इति वा पाठान्तरम्; न इङ्गते न चलति, स्वरूपावस्थ एव भवति इत्यर्थः ॥ २३ ॥

किञ्च—समदुःखसुखः समे दुःखसुखे यस्य सः समदुःखसुखः, स्वस्थः स्वात्मनि स्थितः प्रसन्नः, समानि लोष्टाश्मकाञ्चनानि यस्य सः समलोष्टाश्मकाञ्चनः, तुल्यप्रिया-

रा॥ष्टाश्मकाञ्चनः; तत एव तुल्यप्रियाप्रियः - तुल्यप्रियाप्रियविषयः; धीरः-प्रकृत्यात्मविवेककुशलः ; तत एव तुल्यनिन्दात्मसंस्तुतिः - आत्मनि मनुष्यत्वाद्यभिमानकृतगुणागुणनिमित्तस्तुतिनिन्दयोस्स्वासम्बन्धानुसन्धानेन तुल्यचित्तः ; तत्प्रयुक्तमानावमानयोः तत्प्रयुक्तमित्रारिपक्षयोरपि स्वसम्बन्धाभावादेव तुल्यचित्तः ; तथा देहित्वप्रयुक्तसर्वारम्भपरित्यागी ; य एवम्भूतः, स गुणातीत उच्यते ॥ २४ ॥ २५ ॥

अथैवंरूपगुणात्यये प्रधानहेतुमाह—

ता॥प्रियाप्रियोपनतावक्षोभ्यत्वादेस्तुल्यप्रियाप्रियादिशब्दैस्सिद्धत्वादत्र विवक्षितं धीविशेषवत्त्वलक्षणं धीरत्वं निन्दास्तुतिसाम्यादौ यथा हेतुर्भवति, तथा विशिनष्टि—प्रकृत्यात्मविवेककुशलइति।'धीरः'-इत्यन्तैरान्तरलक्षणान्युक्तानि।अथ बाह्याचारलिङ्गप्रश्नोत्तरमित्यभिप्रायेणाह—तत एव तुल्यनिन्दात्मस्तुतिरिति । 'समदुःखः' इत्यादिकं बाह्यलिङ्गपरमिति केचित् । स्तुतिनिन्दे हि गुणदोषख्यापनरूपे;तत्र विविक्तात्मदर्शिनो देहगतैस्सौन्दर्यवैरूप्यादिगुणदोषैः स्तुतिनिन्दाप्रवृत्तौ परस्तुतिनिन्दयोरिव न प्रीत्यादिसंभव इत्याह—आत्मनीति । 'मूर्खाः पूजितपूजकाः' इति न्यायेन लौकिकाः [2]स्तुतं मानयन्ति, [3]निन्दितमवमन्यन्ते : मानावमानप्रकाराश्च लोकव्यवहारतश्शास्त्रतश्च सिद्धाः; 'तत्र मानयितारो मित्राणि भवन्ति ; अवमन्तारस्त्वरयः' इति लोकदृष्टक्रमविवक्षामाह—तत्प्रयुक्तेति । वाचिकस्तुतिनिन्दयोः पृथगुपादानादत्र मानावमानशब्दौ मानसकायिकविषयौ । समबुद्धेरपि गुणातीतस्य परबुद्धिकल्पितौ मित्रारिपक्षौ विद्येते । आरभ्यत इत्यारम्भः-कर्म, कृतप्रतिकृतादिरूपः । अपवर्गार्थारम्भव्यवच्छेदायाह—देहित्वप्रयुक्तेति। सांसारिकसर्वारम्भपरित्यागीत्यर्थः। एतदेव बाह्याचारलिङ्गम् । आन्तरैरद्वेषादिभिर्बाह्यैरारम्भपरित्यागादिभिश्च गुणातीतो लक्ष्यते । त एव च गुणात्ययोपाया इति प्रश्नत्रयं प्रत्युक्तं भवति ॥ २५ ॥

तत्र'मांच' इति श्लोकेन पृथगुपायविधिशङ्काव्युदासायाह—अथेति।गुणात्ययहेतुषु अप्रधानकथ-

प्र-पा ॥ १. श्रीभारते. उद्योगपर्वणि. प्रजागरपर्वणि विदुरोपदेशाध्याये. ३३. धृतराष्ट्रं प्रति विदुरः-६२. श्लो. 'द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ । स्त्रियः कामितकामिन्यो मूर्खाः पूजितपूजकाः' इति ॥
२. स्तुवन्तं. पा ॥
३. निन्दकं. पा ॥

शं॥प्रियः प्रियं च अप्रियं च तुल्ये समे यस्य सः अयं तुल्यप्रियाप्रियः. धीरः धीमान्, तुल्यनिन्दात्मसंस्तुतिः निन्दा च आत्मसंस्तुतिश्च निन्दात्मसंस्तुती, तुल्ये निन्दात्मसंस्तुती यस्य यतेः सः तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥

किञ्च मानावमानयोः तुल्यः समः निर्विकारः ; तुल्यः मित्रारिपक्षयोः—यद्यपि उदासीना भवन्ति केचित् स्वाभिप्रायेण, तथापि पराभिप्रायेण मित्रारिपक्षयोरिव भवन्ति इति । अयं तु तुल्यो मित्रारिपक्षयोः इत्याह । सर्वारम्भपरित्यागी—दृष्टादृष्टार्थानि कर्माणि आरभ्यन्ते इति आरम्भाः, सर्वान् आरम्भान् परित्यक्तुं शीलम् अस्य इति सर्वारम्भपरित्यागी, देहधारणमात्रनिमित्तव्यतिरेकेण सर्वकर्मपरित्यागी इत्यर्थः । गुणातीतः सः उच्यते ॥ २५ ॥

आं॥तुल्यत्वार्थ उक्तः पुरस्तात् ॥ २५ ॥

ज॥'समदुःखसुखः' इत्यादिना सर्वथा सुखादौ तुल्यत्वबुद्धिरुच्यत इत्यन्यथाप्रतीतिनिरासार्थमाह—तुल्यत्वेति । तुल्यत्ववाचिनः शब्दस्यार्थ इत्यर्थः। 'प्रायः सर्वान्' इत्याद्युक्तरीत्येति भावः ॥ २५॥

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६

रा॥*'नान्यं गुणेभ्यः कर्तारम्' इत्यादिनोक्तेन प्रकृत्यात्मविवेकानुसन्धानमात्रेण न गुणात्ययस्सम्पत्स्यते, तस्यानादिकालप्रवृत्तविपरीतवासनाबाध्यत्वसम्भवात्, मां सत्यसङ्कल्पं परमकारुणिकमाश्रितवात्सल्यजलधिम् अव्यभिचारेण ऐकान्त्यविशिष्टेन भक्तियोगेन च यस्सेवते, स एतान् सत्त्वादीन् गुणान् दुरत्ययान् अतीत्य ब्रह्मभूयाय - ब्रह्मत्वाय कल्पते - ब्रह्मभावायोग्यो भवति, यथावस्थितमात्मानममृतमव्ययं प्राप्नोतीत्यर्थः ॥

ता॥नानन्तरमित्यर्थः।अत एव हि प्रधानहेतुमाहेत्युक्तम्। नान्यमित्यादि-दृष्टद्वारोपकारकाणां प्रतिबन्धकभूयस्तया केवलानां न कार्यकरत्वमिति भावः।'माम्' इत्यनेन वासनापर्यन्तानादिप्रतिबन्धकप्रशमनौपयिकगुणयोगविवक्षामाह—सत्यसंकल्पमित्यादिना।'[1]पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति सूत्रोक्तप्रकारेण बन्धसंकल्पवत्तन्निवर्तनसंकल्पोऽपि परमात्मनो न प्रतिहन्येतेति भावः । सत्यसंकल्पस्यापि समत्वादौदासीन्यपरिहाराय परमकारुणिकत्वोक्तिः । सदोषेषु संसारिषु करुणायाः कोऽवकाश इत्यत्राह—आश्रितवात्सल्यजलधिमिति । एवं निग्रहानुग्रहसाधारणस्य सत्यसंकल्पत्वस्य अनुग्रहप्रावण्यप्रदर्शनार्थं कारुण्यवात्सल्यरूपगुणद्वयमुक्तम् । अव्यभिचारो देवतान्तरादिपरित्यागरूप इत्यभिप्रायेणाह—ऐकान्त्यविशिष्टेनेति । भक्तियोगेन सह तदङ्गानां पूर्वोक्तानां समुच्चयार्थश्चशब्दः । तैरपि परमात्मैव हि सेव्यते । 'एतान्' इत्यनेन गुणानां बन्धकत्वं पूर्वोक्तं परामृश्यत इत्यभिप्रायेणाह—दुरत्ययानिति । एतेन '[2]दैवी ह्येषा गुणमयी' इत्यादिश्लोकोक्तमपि स्मारितम् । कल्पत इत्यनेनाभिप्रेतमाह—ब्रह्मभावयोग्यो भवतीति । कोऽसौ जीवस्य ब्रह्मभावः? का च तद्योग्यतेत्यत्राह—यथावस्थितमिति । '[3]ब्रह्मभूतः प्रसन्नात्मा' इत्यादिष्विव अमृतत्वाव्ययत्वादिभिर्ब्रह्मसाम्यमेव श्रुत्यादिसिद्धमिह ब्रह्मभावः ; तच्च ब्रह्मसमं रूपं '[4]जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते' '[5]देहे देहिनमव्ययम्' इत्यादिभिरिहैवोक्तम्।अनन्तरश्लोके च 'अमृतस्याव्ययस्य च' इति विशेष्यत इति भावः । साङ्गैकान्तिकभक्तियोगेन सेवितोऽहमेव मुमुक्षोर्मोक्षप्रद इत्युक्तं भवति ॥ २६ ॥

प्र-पा ॥ * गी. १४-११ ॥ १. शारी. ३-२-४ ॥ | २. गी. ७-१४ ॥ ३. गी. १८-५४ ॥ ४. गी. १४-२० ॥ ५. गी. १४-५ ॥

शां॥'उदासीनवत्' इत्यादि 'गुणातीतः स उच्यते' इत्येतदन्तम् उक्तं यावत् यत्नसाध्यं तावत् संन्यासिनः अनुष्ठेयं गुणातीतत्वसाधनं मुमुक्षोः; स्थिरीभूतं तु स्वसंवेद्यं सत् गुणातीतस्य यतेः लक्षणं भवति । अधुना 'कथं च त्रीन् गुणान् अतिवर्तते?' इत्यस्य प्रश्नस्य प्रतिवचनम् आह—मां च ईश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः कर्मी वा अव्यभिचारेण न कदाचित् यो व्यभिचरति भक्तियोगः—भजनं भक्तिः, सैव

आ॥ब्रह्मवत्-प्रकृतिवद्भगवत्प्रियत्वं ब्रह्मभूयम्। न तु तावत्प्रियत्वम् । किं तु प्रियत्व-

ज॥'ब्रह्मभूयाय'इत्यस्य परब्रह्मत्वायेति व्याख्यानं प्रमाणविरुद्धमिति भावेनान्यथा व्याचष्टे—ब्रह्मवदिति । नात्र ब्रह्मशब्दं परं ब्रह्म किंतु 'मम योनिर्महद्ब्रह्म' इति प्रकृता प्रकृतिरेव; 'ब्रह्मणो हि प्रतिष्ठाऽहम्' इत्युत्तरवाक्यात् । तद्भूयं च न तादात्म्यं, किंतु तद्वद्भगवत्प्रियत्वमेव, अन्यस्यान्यभावायोगादिति भावः । तत्किं यावत्प्रकृतेर्भगवत्प्रियत्वं, तावद्गुणातीतस्येत्यतः सप्रमाणमाह—नत्विति । तत्किं

**ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥** २७

ॐ तत्सदिति.

इति श्रीमद्भगवद्गीतासूपनिषत्सु परब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीकृष्णाय परब्रह्मणे नमः.

---

रा॥**हिशब्दो हेतौ; यस्मादहमव्यभिचारिभक्तियोगेन सेवितोऽमृतस्याव्ययस्यच ब्रह्मणः प्रतिष्ठा, तथा शाश्वतस्य च धर्मस्य, अतिशयितनित्यैश्वर्यस्यैकान्तिकस्य च सुख-**

---

**ता॥**एवमपवर्गप्रदानप्रसङ्गे शारीरके यथा 'फलमत उपपत्तेः' इति सामान्यतस्सकलफलप्रदत्वं फलस्यानन्याधीनत्वख्यापनायोपपादितं, तथात्रापि मध्यमषट्कप्रपञ्चितफलत्रयप्रदातृत्वं प्रकृतहेतुत्वस्थापनार्थतयानन्तरश्लोकेनोच्यत इत्यभिप्रायेणाह—**हिशब्दो हेताविति।** नात्र ब्रह्मशब्दस्साक्षात्परब्रह्मविषयः, 'अहं ब्रह्मणः प्रतिष्ठा' इति वैयधिकरण्यादिविरोधात्; नच भोक्तृभोग्यनियन्तृरूपेण त्र्यंशस्य ब्रह्मण ईश्वरांशः पृथुत्वात्प्रतिष्ठेति वाच्यम्, ईश्वरस्यैव ब्रह्मत्वस्थापनात्; नच निर्विकल्पकं रूपं विकल्पितस्य ब्रह्मणः प्रतिष्ठेति वा, प्रत्यगात्मा परमात्मनः प्रतिष्ठेति वा वाच्यं, श्रुत्यादिवैपरीत्यात्, तन्मतनिर्मूलनाच्च; नापि मूलप्रकृत्यादिविषयः, प्रस्तुतहेतुत्वायोगात्: अतो 'ब्रह्मभूयाय कल्पते' इति जीवस्य फलदशाभावित्वेन निर्दिष्टं रूपमिह ब्रह्मशब्देनोपचर्यते; तादृशस्य रूपस्याहं प्रतिष्ठा । किमुक्तं भवति? मुमुक्षोः परब्रह्मसमानपरिशुद्धस्वरूपप्राप्तौ शास्त्रोदितेषु सिद्धेषु साध्येषु च पदार्थेषु कः प्रधानहेतुरिति विमर्शे अहमेव विमर्शविश्रान्तिभूमिरिति; यद्वा प्रतिष्ठाशब्द आधारवाची, तच्चाधारत्वम् 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति श्रुत्यनुसारेण नियमनगर्भमिति 'सा च प्रशासनात्' इति सूत्रेणोक्तम् । अतश्शुद्धात्मस्वरूपस्यापि मदेकनिर्वाह्यत्वात् प्रस्तुतं ब्रह्मभूयं मद्भजनैकलभ्यमित्यर्थः। शाश्वतधर्मशब्देन तत्फललक्षणामाह—**अतिशयितनित्यैश्वर्यस्येति** । इन्द्रप्रजापतिप्रभृतिभोगापेक्ष-

---

**प्र-पा** ॥ १. शारी-३-२-३७ ॥ ३. शारी. २-३-१० ॥
२. बृ. ५-८-२ ॥

---

शं॥**योगः, तेन विवेकविज्ञानात्मकेन भक्तियोगेन, स हि भक्तियोगः भगवदनुग्रहप्रसादजो भवति, सेवते, सः गुणान् समतीत्य एतान् यथोक्तान् ब्रह्मभूयाय, भवनं भूयः, ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवति इत्यर्थः ॥ २६ ॥**

**कुत एतदिति? उच्यते—ब्रह्मणः परमात्मनः हि यस्मात् प्रतिष्ठा अहं प्रतितिष्ठति अस्मिन् इति प्रतिष्ठा अहं प्रत्यगात्मा । कीदृग्भूतस्य ब्रह्मणः? अमृतस्य अविनाशिनः**

---

आ॥**मात्रम्। 'बद्धा वापि तु मुक्ता वा न रमावत्प्रिया हरेः' इति पाद्मे। भूयाय-भावाय॥**

---

ज॥भूयशब्दः प्रियत्ववाची, येनैवं व्याख्यायत इत्यत आह—**भूयायेति।** 'भुवो भावे' इति वचनाद्भावो भवनं भूयशब्दार्थः । ब्रह्मवद्भावो ब्रह्मभूयम् । 'वदः सुपि' इति सुबन्तमात्रस्योपपदस्यानुवृत्तेः, वत्यर्थस्य च वृत्तावन्तर्भावात्, मयूरव्यंसकादिवत् । वत्यर्थश्च प्रियत्वमिति तदुक्तमिति भावः॥२६॥

**रा॥स्य—*'वासुदेवस्सर्वम्' इत्यादिना निर्दिष्टस्य ज्ञानिनः प्राप्यस्य सुखस्येत्यर्थः। यद्यपि शाश्वतधर्मशब्दः प्रापकवचनः, तथापि पूर्वोत्तरयोः प्राप्यरूपत्वेन तत्साहचर्यादयमपि प्राप्यलक्षकः। एतदुक्तं भवति—पूर्वत्र †'दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते' इत्यारभ्य गुणात्ययस्य तत्पूर्वकाक्षरैश्वर्यभगवत्प्राप्तीनां च भगवत्प्र-**

ता॥यातिशयितत्वम्।नित्यत्वं ह्यतिचिरकालवर्तित्वमात्रमापेक्षिकमिह मन्तव्यम्।**वासुदेव**इत्यादि-अयमभिप्रायः—एकान्तिलभ्यं सुखमिहैकान्तिसंबन्धादैकान्तिकमुच्यते—इति। **निर्दिष्टस्ये**ति ज्ञानिविशेषणम्। एवमपवर्गेऽप्यैकान्तिकसुखवचनात्पाषाणकल्पादिपक्षाः परिक्षिणाः। नच 'इच्छाद्वेषस्सुखं दुःखम्' इति गणनात्सुखं सर्वं क्षेत्रकार्यमिति भ्रमितव्यं, 'रसं ह्येवायं लब्ध्वानन्दीभवति' इत्यन्याद्दशसुखाभिधानात्।अतएव 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रुतिरपि दुःखसहचारिसुखनिषेधपरेति मन्तव्यम्। ननु शाश्वतधर्मशब्देनातिशयितैश्वर्यलक्षणा न युक्ता, मुख्यार्थबाधाद्यभावात्; 'नारायणश्शाश्वतधर्मगोता' इत्यादिषु च प्रसिद्धः कार्तयुगधर्मोऽत्र शाश्वतविशेषणेन प्रतीयते; तस्य प्रलयादिषु पाषण्डाद्युपप्लवेषु 'यदायदा' इति क्रमेण परिपालनात्तदेकप्रतिष्ठत्वं च सर्वत्र प्रसिद्धम्; तत्राह—**यद्यपी**ति। 'ब्रह्मणोहि' इत्यस्य प्राप्यरूपत्वमुपपादितम्। सुखस्यैकान्तिकस्येत्यस्य तु साक्षाद्भगवदनुभवसुखपरत्वं स्पष्टम्। अल्पत्वादिदूषितात्मानुभवैश्वर्यसुखव्यवच्छेदाय ह्यैकान्तिकशब्दः। तदुभयमध्यपाठादग्रग्रप्रायन्यायेन प्रागुक्तमैश्वर्यमिह विवक्षितमिति तत्साधनवाचिना तल्लक्षणा युक्ता। अतएवानेन कार्तयुगधर्मोऽपि न विवक्षितः। ऐकान्तिकसुखसाधनत्वेन तु पृथक्सोऽनुसन्धातव्य इति। नन्विहाप्रस्तुतैश्वर्यादिप्रसङ्गः किमर्थः? नचान्यदुपक्रम्यान्यन्निगमयितुं युक्तम्, कथंच तत्प्रतिष्ठारूपत्वस्य प्रकृतहेतुत्वं; सिद्धस्य च हेतुभावः? क्व तत्सिद्धिः? कथं च गुणात्ययमन्तरेणाव्यभिचरितभगवद्भक्तियोगः? तेनैव तदत्ययेऽन्योन्याश्रयणमित्यादिशङ्कायामाह—**एतदुक्त**मिति। प्रागुक्तसर्वपुरुषार्थस्वाधीनताप्रत्यभिज्ञापनस्य प्रस्तुतस्य गुणात्ययपूर्वकब्रह्मभूयस्वाधीनतास्थापनं प्रयोजनम्। अव्यभिचरित-

**प्र-पा॥** *गी. ७-१९॥ †गी. ७-१४॥
१. गी. १३-६॥ २. पूर्वमेव व्याख्यातम्॥
३. छा. ८-१२-१॥
४. भार. शा-मो. ३४३-५॥
५. गी. ४-७॥

**शां॥अव्ययस्य अविकारिणः शाश्वतस्य च नित्यस्य धर्मस्य ज्ञानस्य ज्ञानयोगधर्मप्राप्यस्य सुखस्य आनन्दरूपस्य ऐकान्तिकस्य अव्यभिचारिणः अमृतादिस्वभावस्य परमानन्दरूपस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा, सम्यग्ज्ञानेन परमात्मतया निश्चीयते। तत् एतत्**

आ॥**ब्रह्मणो मायायाः** ॥ २७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये चतुर्दशोऽध्यायः ॥ १४ ॥

---

**ज॥**'ब्रह्मणो हि' इत्येतत्परब्रह्मणो हीति व्याचक्षते, तदसत्, प्रतिष्ठाऽहमिति वचनात्। उपचारोऽसाविति चेत्, न, मुख्ये संभवति तदुपादानायोगादिति भावेनाह—**ब्रह्मण** इति। मायेति प्रकृता महालक्ष्मीः ॥ २७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां
जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां चतुर्दशोऽध्यायः ॥ १४ ॥

---

रा॥पत्त्येकोपायतायाः प्रतिपादितत्वादेकान्तभगवत्प्रपत्त्येकोपायो गुणात्ययस्तत्पूर्वकब्रह्मभावश्च—इति ॥ २७ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीमते रामानुजाय नमः.

---

ता॥भक्तियोगशब्दोऽत्र भक्त्यङ्गभूतं प्रपदनं क्रोडीकरोतीति पूर्वोत्तरैकार्थ्यमिति भावः ॥ २७ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु भगवद्रामानुजविरचितश्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां चतुर्दशोऽध्यायः ॥

श्रीमते निगमान्तमहादेशिकायनमः ॥

---

शं॥'ब्रह्मभूयाय कल्पते' इति उक्तम्। यया च ईश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रतितिष्ठते प्रवर्तते, सा शक्तिः ब्रह्मैव अहं, शक्तिशक्तिमतोः अनन्यत्वात् इत्यभिप्रायः। अथवा ब्रह्मशब्दवाच्यत्वात् सविकल्पकं ब्रह्म। तस्य ब्रह्मणो निर्विकल्पकः अहम् अवाच्यः प्रतिष्ठा आश्रयः। तथा किंविशिष्टस्य? अमृतस्य अमरणधर्मस्य अव्ययस्य च व्ययरहितस्य। किञ्च शाश्वतस्य च नित्यस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य सुखस्य तज्जनितस्य ऐकान्तिकस्य एकान्तनियतस्य च, 'प्रतिष्ठा अहम्' इति अनुवर्तते ॥२७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य गोविन्दभगवत्पूज्यपादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ श्रीमद्गीताभाष्ये चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीः

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः.

गुणबन्धविधा तेषां कर्तृत्वं तन्निवर्तनम् ।
गतित्रयस्वमूलत्वं चतुर्दश उदीर्यते ॥ १८ ॥

श्रीमद्यामुनमुनये नमः.

---

## श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा.

अत्र प्रकृतविशोधनरूपतया संगतिपूर्वकं भाष्यं—'त्रयोदशे प्रकृतिपुरुषयोरन्योन्यसंसृष्टयोः स्वरूपयाथात्म्यं विज्ञाय अमानित्वादिभिर्भगवद्भक्त्यनुगृहीतैर्बन्धान्मुच्यते' इत्युक्तम् । तत्र बन्धहेतुः पूर्वपूर्वसत्त्वादिगुणमयसुखादिसङ्ग इति चाभिहितम्—'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इति। अथेदानीं गुणानां बन्धहेतुताप्रकारो गुणनिवर्तनप्रकारश्चोच्यत इति। गुणकर्तृत्वादेरिह भाष्येऽनुक्तिः पूर्ववदेवेति भाव्यम्। सत्त्वं सुखज्ञानसङ्गेन बध्नाति; रजस्तु कर्मसङ्गेन; तमस्तु प्रमादालस्यनिद्राभिरिति बन्धहेतुताप्रकारः। तेषां कर्तृत्वं प्रागुक्तप्रकारेण प्राप्ताप्राप्तविवेकेन तेष्वारोपितम् । तच्चात्र 'नान्यं[२] गुणेभ्यः कर्तारम्' इति स्मारितम् । गुणनिवर्तनप्रकारस्तु 'मां[३] च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते' इत्यन्तेनोक्तः । अतएवात्र 'गतित्रयस्वमूलत्वम्'[४] इत्येतत् 'ब्रह्मणो हि प्रतिष्ठाहम्' इत्यध्यायान्तिमश्लोकोक्तमेव संगृह्णाति । ततएव हि तत्रैवं भाषितं—पूर्वत्र 'दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्यारभ्य गुणात्ययस्य तत्पूर्वकाक्षरैश्वर्यभगवत्प्राप्तीनां च भगवत्प्रपत्त्येकोपायताया: प्रतिपादितत्वादेकान्तभगवत्प्रपत्त्येकोपायो गुणात्ययस्तत्पूर्वको ब्रह्मानुभवश्चेति । 'ऊर्ध्वं गच्छन्ति' इत्याद्युक्तगतित्रयविवक्षायां तु संग्रहक्रमभङ्गस्स्यात् ॥ १८ ॥

श्रीमते निगमान्तमहादेशिकाय नमः.

---

प्र·पा ॥ १४. गी. १३-२१ ॥
२. गी. १४-१२॥ ३. गी. १४-२६॥
४. गी. सं. १८॥
५. गी. १४-२७ ॥
६. गी. ७-१४॥
७. गी. १४-१८ ॥

श्रीमद्भगवद्गीता

# पञ्चदशोऽध्यायः

रा॥क्षेत्राध्याये क्षेत्रक्षेत्रज्ञभूतयोः प्रकृतिपुरुषयोः स्वरूपं विशोध्य विशुद्धस्यापरिच्छिन्नज्ञानैकाकारस्यैव पुरुषस्य प्राकृतगुणसङ्गप्रवाहनिमित्तो देवाद्याकारपरिणतप्रकृतिसम्बन्धोऽनादिरित्युक्तम्; अनन्तरे चाध्याये पुरुषस्य कार्यकारणोभयावस्थप्रकृतिसम्बन्धो गुणसङ्गमूलो भगवतैव कृत इत्युक्त्वा गुणसङ्गप्रकारं सविस्तरं प्रतिपाद्य गुणसङ्गनिवृत्तिपूर्वकात्मयाथात्म्यावाप्तिश्च भगवद्भक्तिमूलेत्युक्तम्; इदानीं भजनीयस्य भगवतः क्षराक्षरात्मकबद्धमुक्तविभूतिमत्तां, विभूतिभूतात् क्षराक्षरपुरुषद्वयात् निखिलहेयप्रत्यनीककल्याणैकतानतया अत्यन्तोत्कर्षेण विसजातीयस्य भगवतः पुरुषोत्तमत्वं च वक्तुमारभते। तत्र तावत् असङ्गरूपशस्त्रच्छिन्नबन्धामक्षराख्यविभूतिं वक्तुं छेद्यरूपबन्धाकारेण विततमचित्परिणामविशेषमश्वत्थवृक्षाकारं कल्पयन् श्रीभगवानुवाच—

श्रीभगवानुवाच—

ऊर्ध्वमूलमधश्शाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥ १

ता॥एवमध्यायद्वयेन प्रथमषट्कोदितप्रकृतिपुरुषतत्प्रकारविशेषविशोधनं कृतम्। तत्रेयं प्रकृतिः स्वगुणैर्यदधीनसत्ताद्भिः; पुरुषश्च यदपराधाद्बद्धः; यत्प्रसादाच्च मोक्ष्यत इत्युक्तम्; स इदानीं मध्यमषट्कोदितः परमात्मा विशोध्यत इति सङ्गतिमाह—**क्षेत्राध्याय**इत्यादिना **आरभत** इत्यन्तेन। एतेन 'अचिन्मिश्राद्विशुद्धाच्च चेतनात्पुरुषोत्तमः। व्यापनाद्भरणात्स्वाम्यादन्यः पञ्चदशोदितः' इति संग्रहश्लोकोऽप्यनुसंहितः। त्रयोदशशेषतया चतुर्दशे वृत्ते तदन्ते 'मांच' इत्यादिश्लोकद्वयेन अव्यभिचारिभक्त्या भजनीयः फलप्रदश्च परमपुरुषः प्रसक्तः; पञ्चदशे तत्प्रकर्षविशेषविशोधनपरतया चतुर्दशेन संगतिः-**भजनस्ये**त्यनेन दर्शिता। विभूतिमत्त्वप्रतिपादनमिह वैलक्षण्यप्रतिपादनार्थमित्यभिप्रायेण—**आरभत**इत्युक्तम्। प्रकृताभ्यां बद्धमुक्ताभ्यां विभूतिमत्त्वमिह वर्ण्यत इत्यपि प्रकृताध्यायद्वयसंगतिरभिप्रेता। तत्र'ऊर्ध्वमूलम्' इत्यादेरध्यायारम्भग्रन्थस्य जरद्गवादिवाक्यवदनन्वितत्वम्, अन्वितत्वेऽपि प्रकृताप्रकृतप्रकरिष्यमाणासंगतिं च परिहर्तुमाह—**तत्र तावदि**ति।प्रतिपत्तिसौकर्यार्थं श्रुत्यनुसारेणेदमश्वत्थवृक्षाकारकल्पनम्। परतत्त्वबुभुत्साहेतुभूतवैराग्यार्थमित्येके, विभूतितयावसितयाच विभूतिमत्परत्वप्रतिपादनार्थत्वात्तस्येति। अनन्तरमसङ्गशस्त्रच्छेद्यत्वोक्तेस्सङ्गविषयस्संसार एवात्राश्वत्थरूपेण कल्पित इति गम्यते। तत्र लौकिकाश्वत्थाद्वैलक्षण्यज्ञापनायोर्ध्वमूलत्वाद्याश्चर्यप्रदर्शनमिति भावः। ननु मूलप्रकृतिरेवात्राश्वत्थतया कल्प्यत इति किं न गृह्यते? 'गुणप्रवृद्धा विषयप्रवालाः' इत्यादीनिच तत्र सुसंग-

रा॥यं संसाराख्यमश्वत्थम् ऊर्ध्वमूलमधश्शाखमव्ययं प्राहुश्श्रुतयः, *'ऊर्ध्वमूलोऽवाक्छाख एषोऽश्वत्थस्सनातनः' †'ऊर्ध्वमूलमवाक्छाखं वृक्षं यो वेद सम्प्रति'इत्याद्याः। सप्तलोकोपरिनिविष्टचतुर्मुखादित्वेन तस्योर्ध्वमूलत्वम् । पृथिवीनिवासिसकलनरपशु-

ता॥तानि;मैवं,साक्षात्सङ्गविषयत्वाभावादसङ्गशस्त्रच्छेद्यत्वस्य च मुख्यस्याविनाशित्वेनानन्वयात्तदिदमभिप्रेत्योक्तम्—अचित्परिणामविशेषमिति ,'यंसंसाराख्यमितिच । अयमेवार्थः पुराणेऽपि पठ्यते—'अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोच्छ्रितः । बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः । महाभूतविशाखश्च विषयैः पत्रशाखवान् । धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः । आजीव्यस्सर्वभूतानां ब्रह्मवृक्षस्सनातनः । एतद्ब्रह्मवनं चैव ब्रह्मवृक्षस्य तस्य तत् । एतच्छित्वा च भित्त्वा च ज्ञानेन परमासिना । ततश्चात्मरतिं प्राप्य यस्मान्नावर्तते पुनः' इत्यादि। केचित्पुरुषाणामेकैकस्मिञ्छरीरे शिरस ऊर्ध्वत्वात्पाण्यादीनां चाधोमुखत्वादूर्ध्वमूलत्वादिकल्पनामाहुः । पुनश्चान्यथाहुः 'तदिदं व्यष्टिक्षेत्रम्, अथ समष्टिक्षेत्रमुच्यते ; कृत्स्नमिदं ब्रह्माण्डं हिरण्यगर्भशरीरं विराडित्युच्यते ; तस्य ' द्यौश्शिरश्चक्षुषी चन्द्र-सूर्यौ दिशश्श्रोत्रे मध्यमाकाशं शरीरं पृथिवी पादौ तस्मिन्नप्यूर्ध्वमूलमधश्शाखम्' इति योजयितव्यम् । प्राणिवंशो वा अश्वत्थो वृक्षः; तस्य मूलं ब्रह्मा उपरिष्टात्स्थितः' इत्यादि। 'अधश्चोर्ध्वंच'इति श्लोकेतु प्रकृत्यादिविशेषान्तं कृत्स्नं वृक्षत्वेन कल्प्यत इति। एवं सर्वास्वपि योजनासु संसारहेयताप्रतिपादने तात्पर्यं वक्तव्यम्। ततो वरं संसारस्यैव साक्षाद्वृक्षत्वेन कल्पनम्।'अधश्चोर्ध्वंच ' इति श्लोके तु 'तस्य' इति परामर्शात्पूर्वकल्पितस्यैव वृक्षस्य प्रतीतेर्न वृक्षान्तरकल्पना युक्ता।'नरूपमस्य'इत्यादौ स एव एको वृक्षः परामृश्यते । तस्मादेकस्यैव संसारस्य वृक्षत्वकल्पना भाष्यकारैर्व्याख्याता । अत्रानिर्दिष्टकर्तृकस्य'आहुः' इत्यस्य वाद्यन्तरकर्तृत्वशङ्काव्युदासायाह-श्रुतयइति।ननु'ऊर्ध्वमूलोऽवाक्छाख एषोऽश्वत्थस्सनातनः ' इति श्रुतिरिह कथं संसारविषयतयोदाह्रियते ? एष इति हि प्रकृतस्य वक्ष्यमाणस्य च पुरुषस्य परामर्श उचितः; मैवं, पुरुषस्य स्वरूपेणोर्ध्वमूलत्वाद्यसंभवात् । मुमुक्षूणां तस्मिन्नेव सङ्गादसङ्गशस्त्रच्छेद्यत्वोक्तेश्च अघटितत्वात्, उपहितवेषेण तु तथोक्तौ प्राप्ताप्राप्तविवेकेनोपाधावेव विश्रमादिति। श्वो न स्थास्यतीत्यप्यश्वत्थः ; छेद्यत्वाच्च वृक्षः;तदेतदुपात्तश्रुतिद्वये विशेषतस्सामान्यतश्च कल्पनालम्बनम्।ऊर्ध्वमूलत्वमधश्शाखत्वं च व्यष्टिसृष्टिप्रक्रियया घटयति—सप्तलोकेत्यादिना। पृथिवीत्यधस्तनलो-

प्र-पा ॥ † आरण्यके. १. प्र.११.अनु. ५. पं॥ . २ ॥
१. नारसिंहपुराणे. १६-अ-५-६-७-११ श्लो॥ . * ३. कठ. ६-१ ॥

शं॥यस्मात् मदधीनं प्राणिनां कर्मफलं, ज्ञानिनां च ज्ञानफलम् , अतः भक्तियोगेन मां ये सेवन्ते ते मम प्रसादात ज्ञानप्राप्तिक्रमेण गुणातीताः मोक्षं गच्छन्ति । किमु वक्तव्यम् आत्मनः तत्त्वमेव सम्यक् विजानन्तः इति । अतः भगवान् अर्जुनेन अपृष्टमपि आत्मनः तत्त्वं विवक्षुः उवाच—'ऊर्ध्वमूलम्'इत्यादिना। तत्र तावत् वृक्षरूपककल्पनया

आ॥ ओं॥संसारच्छेत्रे नमः ॥ संसारस्वरूपतदत्ययोपायविज्ञानान्यस्मिन्नध्याये दर्श-

ज॥अध्यायप्रतिपाद्यमर्थमाह—संसारेति । संसरत्यनेनेति संसारः प्रकृत्यादिकं क्षेत्रम् । पूर्वाध्याये संसारैकदेशानां गुणानामेव वृत्तं दर्शितम् ; अत्र पुनः समग्रं संसारस्वरूपं प्रदर्श्य तदत्ययेच्छामुत्पाद्य तत्साधनजिज्ञासुं प्रति प्रागुक्तं साधनं प्रपञ्चयति ; तत्प्रसङ्गादलौकिकं भगवन्महिमानं च दर्शयत्यने-

रा॥मृगकृमिकीटपतङ्गस्थावरान्ततया अधश्शाखत्वम्।असङ्गहेतुभूतात् आसम्यग्ज्ञानोदयात् प्रवाहरूपेणाच्छेद्यत्वेनाव्ययत्वम्;यस्य चाश्वत्थस्य छन्दांसि पर्णान्याहुः, छन्दांसि-श्रुतयः *'वायव्यं श्वेतमालभेत भूतिकामः' †'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः'इत्यादि श्रुतिप्रतिपादितैः काम्यकर्मभिर्वर्धतेऽयं संसारवृक्ष इति छन्दांस्येवास्य पर्णानि; पर्णै-

ता॥कानामुपलक्षणम्।अव्ययत्वच्छेद्यत्ववचनं व्याहतमित्यत्राह-असङ्गहेतुभूतादासम्यग्ज्ञानोदयादि-ति।तत्त्वज्ञानात्प्रागपि विनाशदर्शनविरोधपरिहाराय प्रवाहरूपत्वोक्तिः।अक्षरसंख्यारूपच्छन्दोव्यवच्छेदा-याह-छन्दांसि श्रुतय इति। पर्णवत्संसारवृक्षस्य यथावस्थिताकारं संछाद्य रक्षन्तीति ज्ञापनायात्र छन्द-श्शब्दः। संसारवृक्षपर्णत्वेन रूपणाच्छन्दश्शब्दोऽत्र 'वेदवादरताः' इत्यादिष्विव त्रिवर्गपरांशविषय इत्यभिप्रायेणाह—वायव्यमिति । असंबन्धिनां छन्दसां कथं पर्णत्वमित्यत्राह—श्रुतिप्रतिपादितैरि-ति । तथापि वृक्षावयवेषु बहुषु पर्णत्वेन रूपणे को विशेष इत्यत्रोक्तं —वर्धतइति । तद्विवृणोति—पर्णैर्हीति। 'तम्' इतिसप्रकारपरामर्शविवक्षया आह—एवंभूतमिति।ननु यस्संसाराश्वत्थं वेद,स वेद-विदित्यसंगतं ; नहि संसारोऽश्वत्थो वा वेदाः, येन तद्वेदिनो वेदवित्त्वमुच्यते ; अतोऽत्र 'आद्यं तु त्र्यक्षरं ब्रह्म त्रयी यत्र प्रतिष्ठिता । स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित्' इत्यादिष्विव प्रणव-विषयत्वं कार्तयुगैकवेदपरत्वं वा युक्तम् । प्रणवस्यार्धमात्रायाः कारणपरमपुरुषदेवताकत्वश्रुतेः ऊर्ध्वमू-लत्वं सुसंगतम् । कार्तयुगवेदस्यापि वेदान्तरूपत्वात्सर्वमूलत्वाच्च तथा निर्देशो घटते । एवं छन्दःपर्ण-त्वादिकं चोभयोस्सुगमम् । शङ्कुना पर्णानामिव प्रणवेन सर्वासां वाचां संतृण्णत्वश्रुतेः 'महतो वेदवृ-क्षस्य मूलभूतो महानयम् । स्कन्धभूता ऋगाद्यास्ते शाखाभूतास्तथापरे' इति धर्मविशेषप्रतिपादकभा-गस्य मूलत्वोक्तेश्च। अतस्तथाभूतवेदविशेषवेदिन इह वेदवित्त्वेन स्तुतिः; न त्ववेदभूतयत्किंचिद्वेदिन-

प्र-पा॥ * यजु का-२-१-१॥
† यजु-का-२-१ ॥ १. गी. २-४२ ॥
२.मनुस्मृतौ. ११-२६५॥'आद्यमिति । सर्ववेदानामाद्यं, यत् ब्रह्म-वेदसारन्, अकारोकारात्मकत्वेन त्र्यक्षरम्,यत्र त्रयोवेदाः स्थिताः, सोऽन्यः-त्रिवृद्वेदः प्रणवाख्यः, गुह्यः-गोपनीयः, वेदमन्त्रश्रेष्ठत्वात्, परमार्थाभिधायकत्वात्, परमार्थकत्वेन धारणजापादिना मोक्षहेतुत्वाच्च । यस्तम्-स्वरूपतोऽर्थतश्च जानाति, सर्ववेदविदित्यर्थः ॥
३ ॥

शं॥वैराग्यहेतोः संसारस्वरूपं वर्णयति विरक्तस्य हि संसारात् भगवत्तत्त्वज्ञाने अधिकारः, न अन्यस्येति । ऊर्ध्वमूलं कालतः सूक्ष्मत्वात् कारणत्वात् नित्यत्वात् महत्त्वाच्च उच्यते ऊर्ध्वमिति। ब्रह्म अव्यक्तमायाशक्तिमत्, तत् मूलम् अस्येति सोऽयं संसारवृक्षः ऊर्ध्व-मूलः । श्रुतेश्च 'ऊर्ध्वमूलोऽवाक्शाखः एषोऽश्वत्थस्सनातनः' इति । पुराणे 'अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोच्छ्रितः। बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः॥ महा-

आ॥यति।ऊर्ध्वो विष्णुः, 'ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि द्रविणं सवर्चसम्'इति हि

ज॥नाध्ययेनेत्यर्थः । जगद्वृक्षस्योर्ध्वमूलत्वं घटयितुमूर्ध्वशब्दाभिधेयं तावदाह—ऊर्ध्व इति । कुतः? श्रौतप्रयोगादित्याह—ऊर्ध्वेति । आदौ तावदहमूर्ध्वेन विष्णुना पवित्रो निष्पापोऽस्मि, ततो वाजि-रूपश्च नेता च वाजिनीः सूर्यः, तत्र वसतीति वाजिनीवसुः, तेन वाजिनीवसुना विष्णुना अमृतं प्रारब्धकर्मनिर्मुक्तश्चास्मि, 'स तेजसि सूर्ये संपन्नः' इति श्रुतेः । ततश्च तेनैव सवर्चसं सप्रभम्, अनु-भूयमानमिति यावत् । द्रविणं धनं सुखं चास्मीत्यर्थः । वर्चसशब्दोऽकारान्तोऽप्यस्ति 'ब्रह्महस्तिभ्यां

रा॥र्हि वृक्षो वर्धते; यस्तमेवम्भूतमश्वत्थं वेद, स वेदवित्; वेदो हि संसारवृक्षच्छेदोपायं वदति; छेद्यवृक्षस्वरूपज्ञानं छेदनोपायज्ञानोपयोगीति वेदविदित्युच्यते ॥ १ ॥

ता॥इति;तत्राह—वेदो हीति।अत्र वेदशब्दोऽपवर्गार्थवेदभागपरः;ततः किमित्यत्राह—छेद्यवृक्षेति। अयमभिप्रायः—असङ्गशस्त्रच्छेद्यत्वानुपपत्तेरेव प्रणवादिपरत्वमप्ययुक्तमेव;'ततः परं तत्परिमार्गितव्यम्' इत्येतदपि तत्रासंगतं, 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' इतिवत्स्यादितिचेन्न, विरुद्धत्वात्-तत्रहि तन्निष्णातस्य परब्रह्माधिगम उच्यते; अत्र तु तच्छित्त्वा ततः परं परिमार्गितव्यमिति;अतोऽस्यान्यार्थासंभवात्संसारविषयत्वे सिद्धे तद्विदो वेदवित्त्वेन स्तुतिः,तज्ज्ञानस्य वेदान्तप्रतिपाद्यार्थज्ञानोपयोगितयैव—इति । 'ऊर्ध्वमूलम्' इत्यादिकं नैमित्तिकसृष्टिप्रक्रिययोक्तम् ॥ १ ॥

प्र-पा॥१.-वि-पु. ६-५-६४.'द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत्।शब्दब्रह्मणि निष्णातः परब्रह्माधिगच्छति'॥ परञ्चयत् - ब्रह्मेति शेषः। शब्दब्रह्मणि-शास्त्रजन्यज्ञाने, निष्णातः-निपुणः परब्रह्म-प्रत्यक्षरूपं विवेकजं ज्ञानं लभत इत्यर्थः ॥

शं॥भूतविशाखश्च विषयैः पत्रशाखवान्। धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः॥ आजीव्यस्सर्वभूतानां ब्रह्मवृक्षस्सनातनः । एतद्ब्रह्मवनं चैव ब्रह्मवृक्षस्य तस्य तत् ॥ एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना । ततश्चात्मरतिं प्राप्य तस्मान्नावर्तते पुनः' ॥ इत्यादि । तम् ऊर्ध्वमूलं संसारं मायामयं वृक्षम् आहुः । महदहङ्कारतन्मात्रादयः शाखा इव अस्य अधः भवन्तीति सोऽयम् अधश्शाखः, तम् अधश्शाखम् । न श्वोऽपि स्थाता इति अश्वत्थः तं क्षणप्रध्वंसिनम् अश्वत्थं प्राहुः कथयन्ति अव्ययं; संसारमायायाः अनादिकालप्रवृत्तत्वात् सोऽयं संसारवृक्षः अव्ययः अनाद्यनन्तदेहादिसन्तानाश्रयः । हि सः प्रसिद्धः । तम् अव्ययम् । तस्यैव संसारवृक्षस्य इदम् अन्यत् विशेषणान्तरं—छन्दांसि यस्य पर्णानि छन्दांसि छादनात् ऋग्यजुस्सामलक्षणानि यस्य संसारवृक्षस्य पर्णानीव पर्णानि , यथा वृक्षस्य रक्षणार्थानि पर्णानि, तथा वेदाः संसारवृक्षपरिरक्षणार्थाः, धर्माधर्मतद्धेतुफलप्रदर्शनार्थत्वात् । यथाव्याख्यातं संसारवृक्षं समूलं यः तं

आ॥श्रुतिः । ऊर्ध्वः उत्तमः सर्वतः । अधो निकृष्टं शाखा भूतानि। श्वोऽप्येकप्रकारेण न तिष्ठतीत्यश्वत्थः । तथाऽपि न प्रवाहव्ययः । पूर्वब्रह्मकाले यथा स्थितिः, तथा सर्वत्रा-

ज॥वर्चसः' इत्यत्र,योगविभागात्समासान्तो वा। विष्णुप्रसङ्गदर्शनाय श्रुतिशेषोदाहरणम्। इदानीं तस्य तत्र प्रवृत्तौ निमित्तमाह—उर्ध्वइति । उन्नतो ह्यूर्ध्व उच्यते। अतो ब्रह्मादिलोकस्थत्वादिलक्षणा सूक्ष्मत्वादिगुणयोगो वा नाश्रयणीयः । सर्वतः सर्वस्मात्प्रपञ्चात् , सर्वैश्च गुणैः। 'अधःशाखम्' इत्येतद्घटयन्नधःशब्दार्थं तावदाह—अध इति । शाखाः का इत्यत आह—शाखा इति । तानि हि मूलापेक्षयाऽपकृष्टानि । ननु वृक्षमात्रस्य सारूप्यमभिदधता कथमश्वत्थत्वमस्योच्यत इत्यत आह—श्वोऽपीति । 'सुपि स्थः' इति कः , श्वसः सकारस्य तकारो धातुसकारस्य लोपश्च निरुक्तत्वात् ; श्वः स्थाता श्वत्थः। श्वत्थो न भवतीत्यश्वत्थः। किमुत कालान्तर इत्यपिशब्दः। ननु पदार्थानां बहुकालस्थायित्वदर्शनात्कथमेतदित्यत उक्तम्—एकेति । तिष्ठतीति लुडर्थेऽनादरसूचनाय लट् । अथवाऽपिशब्देन वर्तमानातीतयोः समुच्चयः। ततः क्रियाप्रबन्धे लट् । तर्ह्यव्ययमिति व्याघात इत्यत आह—तथापीति । विकारित्वेऽपि । एतदपि नास्ति, जगत्प्रवाहस्य प्रलये व्ययादित्यत आह—पूर्वेति ।

**अधश्चोर्ध्वं च प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २**

रा॥**तस्य—मनुष्यादिशाखस्य वृक्षस्य तत्तत्कर्मकृता अपराश्चाधश्शाखाः पुनरपि मनुष्यपश्वादिरूपेण प्रसृता भवन्ति, ऊर्ध्वं च गन्धर्वयक्षदेवादिरूपेण प्रसृता भवन्ति; ताश्च गुणप्रवृद्धाः-गुणैस्सत्त्वादिभिः प्रवृद्धाः, विषयप्रवालाः-शब्दादिविषयपल्लवाः, कथमित्यत्राह—ब्रह्मलोकमूलस्यास्य वृक्षस्य मनुष्याग्रस्य, अधः मनुष्यलोके, मूलान्यनुसन्ततानि·**

---

ता॥अथ नित्यसृष्टिप्रक्रिययाप्युच्यते'अधश्च' इति। **अपराश्चे**ति पूर्वोक्तपुनरुक्तिपरिहारार्थम् । **पुनरपी**ति नित्यसृष्टिद्योतनम् । कर्मलोकमधिकृत्य ऊर्ध्वं प्रवृत्तेर्विवक्षितत्वाद्गन्धर्वादिपरत्वम् . अत एव पूर्वोक्तेन चतुर्मुखलोकावधिकाधश्शाखत्वेन अविरोध इत्यभिप्रायेणाह—**गन्धर्वयक्षदेवादिरूपेणे**ति। प्रागुक्तप्रक्रियया गुणानामुत्तरोत्तरजन्महेतुत्वेन देवमनुष्यादिशाखानां गुणप्रवृद्धत्वम्। गुणा इह साधारणास्सलिलस्थानीयाः ; प्रकाण्डस्थानीया वा । अत्र विषयशब्दस्य सर्वसाधारणज्ञानादिविषयपरत्वव्युदासायाह—**शब्दादी**ति । प्रवालशब्दस्यात्र विद्रुमार्थत्वासम्भवज्ञापनाय पल्लवशब्दः । शाखासु हि भोग्यत्वेन पल्लवास्समुद्भवन्ति । तद्वदेव देवादिषु शाखास्थानीयेषु भोग्यतया शब्दादेरुद्भवात्पल्लवस्थानीयत्वम् । ननु ऊर्ध्वमूलस्याधश्शाखत्वं मूलानुगुण्येनोपपद्यतां नाम ; पुनरधश्चोर्ध्वं च प्रसृतेः किं मूलमिति शङ्काभिप्रायेणाह—**कथमित्यत्राहे**ति। 'अधश्च मूलानि' इत्यवान्तरमूलोक्तिः। प्रासादशिखरप्ररूढप्रलम्बितायां लतायाः क्षितिसंसर्गजमूलप्रान्तरप्रसूतोर्ध्वशाखान्तरवदित्यभिप्रायेणाह—**ब्रह्मलोकमूलस्ये**ति । मनुष्यलोकग्रहणं तत्र कर्माधिकारभूयस्त्वज्ञापनार्थम् । समानाधिकरणसमासौचित्यात्कर्मणामेव च सर्वत्र मूलत्वोपपत्तेस्तदनुबन्धिनां गुणानामन्येषां वा मूलत्वनिर्देशायोगमभिप्रेत्याह—

---

शं॥**वेद सः वेदवित्, वेदार्थवित् इत्यर्थः। न हि समूलात् संसारवृक्षात् अस्मात् ज्ञेयः अन्यः अणुमात्रोऽपि अवशिष्टः अस्ति इत्यतः सर्वज्ञः सर्ववेदार्थविदिति समूलसंसारवृक्षज्ञानं स्तौति ॥ १ ॥**

**तस्य एतस्य संसारवृक्षस्य अवयवव्यापारकल्पना उच्यते—अधः मनुष्यादिभ्यो यावत् स्थावरम्, अतः ऊर्ध्वञ्च यावत् ब्रह्मणः विश्वसृजो धाम इत्येतदन्तं यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि, तस्य वृक्षस्य शाखा इव शाखाः प्रसृताः प्रगताः, गुणप्रवृद्धाः**

---

आ॥**पीत्यव्ययता । फलकारणत्वाच्छन्दसां पर्णत्वम् । न हि कदाचिदप्यजाते पर्णे फलोत्पत्तिः ॥ १ ॥**

**अव्यक्तेऽपि सूक्ष्मरूपेण सन्ति शरीरादौ च भूतानीत्यधश्चोर्ध्वं च प्रसृताः । गुणैः**

---

ज॥छन्दसां पर्णत्वं घटयति—**फले**ति। फलकारित्वसादृश्यादित्यर्थः। तत्र फलं मोक्षादिकम् । छन्दसां वेदानाम्। स्यादिदं, यदि पर्णानां फलकारणत्वं स्यात् : तदेव कुतः ? अन्वयव्यतिरेकाभ्यामित्याह—**नही**ति । किंतु जात एवेत्यन्वयोऽपि वाच्यः ॥ १ ॥

अधश्चेत्येतद्घटयति—**अव्यक्तेऽपी**ति । अनेन तस्य शाखा भूतान्यधश्च स्वापेक्षयाऽपकृष्टे शरीरादौ कार्ये चोर्ध्वं च उत्तमे कारणेऽव्यक्ते च प्रसृताः।सूक्ष्मरूपेण सन्तीति व्याख्यातं भवति।प्रसृता इत्यनेनोच्यन्त इति शेषः। अधः पातालादूर्ध्वं स्वर्गादावित्यादिव्याख्याने प्रकृतप्रक्रिये प्रसज्येते। गुणशब्दस्यानेकार्थत्वात् 'गुणप्रवृद्धाः' इत्यत्र विवक्षितमर्थमाह-- **गुणै**रिति। अर्वाचीनमूलैर्हि शाखाः

रा॥तानि च कर्मानुबन्धीनि-कर्माण्येवानुबन्धीनि मूलानि अधो मनुष्यलोके च भवन्तीत्यर्थः ; मनुष्यत्वावस्थायां कृतैर्हि कर्मभिः अधो मनुष्यपश्वादयः, ऊर्ध्वं च देवादयो भवन्ति ॥ २ ॥

ता॥**कर्माण्येवानुबन्धीनी**ति। पुरुषमनुबध्नन्तीत्यनुबन्धीनि ; यद्वा सुदृढाविच्छिन्नानीत्यर्थः। आत्मानुबन्धिनां कर्मणां मनुष्यलोकस्थमूलत्वोक्तेः किं नियामकमित्यत्र मूलत्वप्रकारमुपपादयति—**मनुष्यत्वावस्थायां कृतै**रिति । यथा न्यग्रोधादेरूर्ध्वशाखस्य शाखाग्रे बीजरूपं जटारूपं वा मूलं जायते ; तथा अधश्शाखस्यापि स्यादिति भावः ॥ २ ॥

शं॥**गुणैः** सत्त्वरजस्तमोभिः प्रवृद्धाः स्थूलीकृताः उपादानभूतैः, विषयप्रवालाः विषयाः शब्दादयः प्रवालाः इव देहादिकर्मफलेभ्यः शाखादिभ्यः अङ्कुरीभवन्तीव, तेन विषयप्रवालाः शाखाः । संसारवृक्षस्य परं मूलम् उपादानकारणं पूर्वम् उक्तम् । अथ इदानीं कर्मफलजनितरागद्वेषादिवासनाः मूलानीव धर्माधर्मप्रवृत्तिकारणानि अवान्तरभावीनि तानि अधश्च देवाद्यपेक्षया मूलानि अनुसन्ततानि अनुप्रविष्टानि कर्मानुबन्धीनि कर्म धर्माधर्मलक्षणम् अनुबन्धः पश्चाद्भावि,येषाम् उद्भूतिम् अनु उद्भवति,तानि कर्मानुबन्धीनि मनुष्यलोके विशेषतः । अत्र हि मनुष्याणां कर्माधिकारः प्रसिद्धः ॥ २ ॥

आ॥**सत्त्वादिभिः**। **प्रतीतिमात्रसुखत्वात्प्रवालाः विषयाः । मूलानि भगवद्रूपादीनि। भगवानपि कर्मानुबन्धेन हि फलं ददाति । तथाच भाल्लवेयशाखायां ' ब्रह्म वाऽस्य पृथङ्मूलं प्रकृतिः समूलं सत्त्वादयोऽर्वाचीनमूलम् । भूतानि शाखा छन्दांसि पर्णानि देवा नृतिर्यञ्चश्च शाखाः । पत्रेभ्यो हि फलं जायते । मात्राः शिफाः । मुक्तिः फलम् अमुक्तिः फलम् । मोक्षो रसोऽमोक्षो रसः । अव्यक्ते च शाखा व्यक्ते च शाखा अव्यक्ते च मूलं व्यक्ते च मूलम् । एषोऽश्वत्थो गुणालोलपत्रो न क्षीयते न न क्षीयते न ह्येष कदाचनान्यथा जायते नान्यथा जायते ' इति ॥ २ ॥**

ज॥प्रवृद्धा भवन्ति।सत्त्वादयश्चार्वाचीनमूलानीति वक्ष्यन्ते।विषयाणां प्रवालत्वं घटयति—**प्रतीतिमात्रे**ति।प्रतीतिसमयमात्रसुखहेतुत्वादित्यर्थः । विमर्दनासहत्वसाम्यादिति भावः । विषयाः प्रवाला इति सम्बन्धः।'अधश्च मूलानि'इत्यत्र रागद्वेषादिवासनामूलानीति व्याख्यानमसत् ,प्रक्रमविरोधादिति भावेनाह—**मूलानी**ति । आदिपदेन जडाजडप्रकृत्योः सत्त्वादीनां च ग्रहणम्; तेषामपि 'ऊर्ध्वमूलम्'इत्यत्र विवक्षितत्वात् । ननु भगवतः कथं कर्मानुबन्धित्वमित्यत आह—**भगवानपी**ति । अत्र कर्मानुबन्धित्वं नाम कर्मानुसारित्वम् । तच्च कर्मसंबन्धेन फलदातृत्वाद्भगवतोऽपि युक्तमित्यर्थः । यद्वा कर्मैव अनुबन्धश्चरमभावि कारणं कर्मानुबन्धः, तद्वत्त्वं कर्मानुबन्धित्वम् । तदपि कर्मानुबन्धेन फलदातृत्वाद्भगवतो युज्यत इति । श्लोकद्वयार्थे श्रुतिसम्मतिं चाह—**तथाचे**ति । अस्य जगद्वृक्षस्य। पृथग्वृक्षानन्तर्गतम्।सहभूतं मूलं समूलम् अर्वाचीनमूलं भूम्यन्तर्गतपादाख्यम्। 'छन्दांसि' इत्यस्योपपादनं—**पत्रेभ्यो ही**ति । देवादिशरीराणि चोपशाखाः । मात्राः भूतसूक्ष्माणि। शिफाः जटाः। मुक्त्यमुक्तिशब्दाभ्यां मोक्षतदितरपुरुषार्थसाधने ज्ञानकर्मणी उच्येते । फलमवान्तरम् । मोक्षामोक्षशब्दाभ्यां तु पुरुषार्थावेव । रसः श्रेष्ठं फलम् । गुणा विषयाः अलोलपत्राणि प्रवालपर्णानि यस्यासौ तथोक्तः । न क्षीयत इत्यनेनाश्वत्थशब्दार्थकथनम् । तत्किं क्षणिकः । न, क्षीयते प्रवाहव्ययो नास्तीत्यर्थः । तस्योपपादनं—**न ही**ति । द्विरुक्तिस्तात्पर्यार्था ॥ २ ॥

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा ।**

रा॥**अस्य—वृक्षस्य चतुर्मुखादित्वेनोर्ध्वमूलत्वं, तत्सन्तानपरम्परया मनुष्याग्रत्वेनाधश्शाखत्वं, मनुष्यत्वे कृतैः कर्मभिर्मूलभूतैः पुनरप्यधश्चोर्ध्वं च प्रसृतशाखत्वमिति यथेदं रूपं निर्दिष्टं, न तथा संसारिभिरुपलभ्यते; मनुष्योऽहं देवदत्तस्य पुत्रो यज्ञदत्तस्य पिता तदनुरूपपरिग्रहश्चेत्येतावन्मात्रमुपलभ्यते; तथाऽस्य वृक्षस्य अन्तो—विनाशोऽपि गुणमयभोगेष्वसङ्गकृत इति नोपलभ्यते ; तथाऽस्य गुणसङ्ग एवादिरिति नोपलभ्यते**

ता॥ननु सर्वप्रत्यक्षसम्मतेऽस्मिन् संसारे 'यस्तं वेद' इति कस्यचित्तद्वेदनेन प्रशंसनमयुक्तमित्यत्रोच्यते 'न रूपमस्य' इति । नात्र रूपानुपलम्भवचनस्य रूपाभावे तात्पर्यं. निर्दिष्टरूपविरोधादित्यभिप्रायेणाह—**अस्य वृक्षस्ये**ति । सर्वेषां संसारोपलम्भे सत्यपि प्रकृताकारेण नोपलम्भ इति तथाशब्दाभिप्रेतं विवृणोति—**चतुर्मुखादित्वेने**त्यादिना । **संसारिभि**रिति—अपवर्गोपयुक्तज्ञानरहितैरिति भावः; संसारिष्वेव यस्तथा वेद, स मुक्तप्राय इति वा । कूटस्थपितृपुत्रादिरूपेण लोकेऽपि मूलशाखापल्लवादिकं दृश्यत इत्यत्राह—**मनुष्योऽह**मिति । तेषां हेयस्यापि संसारस्योपादानोपयुक्तं ज्ञानमस्ति; न तु हानार्थमिति भावः।'नान्तः' इत्यादावपि तथाशब्दस्यानुषङ्गमाह—**तथास्ये**ति। समभिव्याहृतासङ्गशस्त्रच्छेद्यत्वात्तद्गुणमन्तशब्दार्थमाह—**विनाश** इति । आत्यन्तिकप्रलय इहासङ्गनिष्पादितान्तशब्देन विवक्षितः; तस्य च स्वरूपतः कारणतश्चानुपलम्भः ; नित्यप्रलयमात्रं हि संसारिभिर्दृश्यत इत्यभिप्रायेणाह—**गुणमयभोगेष्वसङ्गकृत** इति । भोगशब्दोऽत्र भोग्यपरः । प्रमाणसिद्धस्यान्तस्यादेः प्रतिष्ठायाश्च स्वरूपनिषेधभ्रमव्युदासाय 'उपलभ्यते'इतिपदमनुषञ्जितम्। गर्भादिरूपस्यावान्तरादेरुपलम्भात्प्रधानभूत आदिरिह विवक्षित इत्याह—**गुणसङ्ग एवे**ति । अत्र प्रतिष्ठाशब्देन परोक्तं परमात्माभिधानमयुक्तं, निस्सङ्गानां सङ्गविषयस्य तस्यासङ्गशस्त्रच्छेद्यवृक्षप्रतिष्ठात्वनिर्देशानौचित्यात् ; अत आदिभूतस्य सङ्गस्यापि निदानं क्षेत्रादिस्थानीयमज्ञानमिह अर्थौचित्यात्प्रतिष्ठोच्यत इत्याह—

शं॥**यस्तु अयं वर्णितः संसारवृक्षः न रूपम् अस्य इह यथा उपवर्णितं तथा नैव उपलभ्यते, स्वप्नमरीच्युदकमायागन्धर्वनगरसमत्वात्; दृष्टनष्टस्वरूपो हि स इति । अत एव न अन्तः न पर्यन्तः निष्ठा परिसमाप्तिः विद्यते । तथा न च आदिः, 'इतः आरभ्य**

आ॥**यथास्थितस्तथा नोपलभ्यते। अन्तादिर्विष्णुः । 'त्वमादिरन्तो जगतोऽस्य मध्यम्' इति भागवते । 'अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः' इति च मोक्षधर्मे । असङ्गशस्त्रेण सङ्गराहित्यसहितेन ज्ञानेन । 'ज्ञानासिनोपासनया सितेन' इति भागवते ।**

ज॥अस्य रूपं नोपलभ्यत इत्युक्ते प्रमाणबाधः ; अत उक्तं—**तथे**ति । तत्सापेक्षमित्यतः पूरयति—**यथे**ति। विकारित्वादिनेत्यर्थः।जगतो देशकालाभ्यां परिच्छेदस्योपलभ्यमानत्वात्"नान्तः'इत्याद्युक्तमयुक्तमित्यत आह—**अन्तादि**रिति । संहर्तृत्वादेरिति शेषः । अत्र सम्मतिमाह—**त्वमि**ति । मध्यं स्थितेः कर्ता । तस्यानुपलभ्यमानत्वे प्रमाणमाह—**अनादी**ति । आद्यन्तरहितम् । असङ्ग एव शस्त्रमिति व्याख्यानमसदिति भावेनाह—**असङ्गे**ति । असङ्गः सङ्गराहित्यं तेन सहितं ज्ञानमसङ्गशस्त्रम् ; दध्योदनादिवत्। वृत्तौ साहित्यस्यान्तर्भावादप्रयोग इति भावः । प्रतीतार्थः कुतो नेत्यतो ज्ञानस्यैव तत्र कारणत्वोक्तिरित्याह—**ज्ञाने**ति। 'छित्वा'इत्यस्य सबीजमुद्धृत्येति व्याख्यानमसदिति भावेनाह—**छेदश्चे**ति।

रा॥तस्य प्रतिष्ठा चानात्मन्यात्माभिमानरूपमज्ञानमिति नोपलभ्यते; प्रतितिष्ठत्यस्मिन्नेवेति ह्यज्ञानमेवास्य प्रतिष्ठा ॥

अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा ॥ ३
ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः ।

एनम्—उक्तप्रकारं सुविरूढमूलं—सुष्ठु विविधं रूढमूलमश्वत्थं सम्यग्ज्ञानमूलेन

ता॥अनात्मन्यात्माभिमानरूपमिति। एतेन सम्प्रतिष्ठा मध्यमितिव्याख्यापि निरस्ता।अज्ञाने कथं प्रतिष्ठाशब्दवृत्तिरित्यत्राह—प्रतितिष्ठतीति। अयं भावः—मूलस्थितिभूमिः वृक्षस्य प्रतिष्ठा;कर्म च संसारवृक्षस्य मूलत्वेनोक्तम्; तच्च 'अविद्यासञ्चितं कर्म'इति वचनादज्ञाने स्थितं, तदधीनत्वात्तदनुष्ठानस्य; ममकारस्यापि कर्महेतोरहङ्कार एव कन्द इति स इह संसारवृक्षप्रतिष्ठेति ॥

'एनम्'इति सञ्ज्ञास्पदप्रकृतिवैचित्र्यपरामर्श इत्याह—उक्तप्रकारमिति।सुष्ठुत्वं दृढनिरूढवासनत्वेनान्यैश्छेत्तुमशक्यत्वम्। विविधत्वं - प्रायश्चित्तादिभिरेकैकस्य कर्माख्यमूलस्य च्छेदेऽप्यनादिकालं मनोवाक्कायैर्बुद्धिपूर्वकमबुद्धिपूर्वकञ्च विधिनिषेधविषयविचित्रकर्मणामनन्तप्रकारसम्भृतत्वम्। असङ्गोऽपि कदाचित्तादात्विकव्याध्यादिक्लेशादपि भवति ; स तु न दृढः ; अतः—सम्यग्ज्ञानमूलेनेत्युक्तम्। विषयत्यागदशायामिव आत्मान्वेषणदशायामप्यसङ्गोऽनुवर्तनीय इति ज्ञापनाय ततश्शब्दः। अत एव

प्र-पा ॥ १. वि. पु. २-१३-७० ॥ २. सुदृढ. पा ॥

शं॥अयं प्रवृत्तः' इति न केनचित् अवगम्यते।न च सम्प्रतिष्ठा स्थितिः मध्यम् अस्य केनचित् उपलभ्यते। अश्वत्थम् एनं यथोक्तं सुविरूढमूलं सुष्ठु विरूढानि विरोहं गतानि सुदृढानि मूलानि यस्य तम् एनं सुविरूढमूलम् असङ्गशस्त्रेण, असङ्गः असङ्गता पुत्रवित्तलोकैषणाभ्यः व्युत्थानं, तेन असङ्गशस्त्रेण दृढेन परमात्माभिमुख्यनिश्चयदृढीकृतेन पुनःपुनः विवेकाभ्यासाश्मनिशितेन छित्वा संसारवृक्षं सबीजम् उद्धृत्य ॥ ३ ॥

ततः पश्चात् यत् पदं वैष्णवं तत् परिमार्गितव्यं, परिमार्गणम् अन्वेषणं, ज्ञातव्यमित्यर्थः। यस्मिन् पदे गताः प्रविष्टाः न निवर्तन्ति न आवर्तन्ते भूयः पुनः संसाराय।

आ॥छेदश्च विमर्श एव। ततश्च तस्यैवाबन्धकं भवति। तथाहि मूलस्थं ब्रह्म प्रतीयते। तच्चोक्तं तच्छ्रुतावेव 'विमर्शो ह्यस्य च्छेदः। स तत्र बध्नाति बध्नाति चान्यान्'इति ॥३॥

ज॥च्छस्त्वर्थः। विमर्शो विवेकः। व्याख्यानान्तरपरित्यागेनैवं व्याख्याने को हेतुरित्यत आह—ततश्चेति। यतो विमर्श एव प्रकृत्यादेर्विश्वस्य च्छेदो न सर्वथोद्धारणम्; तत एव तस्यैकस्यैवेदमबन्धकं भवतीति युज्यते। अन्यथैकेन च्छेदे कृते सर्वमुक्तिः स्यादिति भावः। इतश्चायमेव च्छेद इत्याह—तथाहीति। अत्र ह्यश्वत्थमेनं छित्वा ततः परं तत्परिमार्गितव्यम्' इति विश्वच्छेदस्य ब्रह्मप्रतीतावुपायत्वमुच्यते। तथा हि—विश्वस्य कार्यत्वादिना विमर्शे सति कार्यस्य कारणापेक्षत्वात् चेतनानधिष्ठितादुपादानादुत्पत्त्यसम्भवात्परतन्त्राणां मुख्यतोऽधिष्ठातृत्वायोगान्मूलस्थमुपादानकारणाधिष्ठातृ ब्रह्म प्रतीयते न विश्वविनाशे। अतो योग्यतावशाद्विमर्श एव च्छेदो न विनाश इति गम्यत इत्यर्थः। विश्वमिथ्यात्वज्ञानमेव च्छेद इति चेत्—न, अस्य मिथ्याज्ञानत्वात्, श्रुतिसंवादाच्चैवमेवेत्याह—तच्चेति। 'तं वै प्रपद्ये यं वै प्रपद्य' इति तच्छ्रुतावेव। अतस्तं छेदकमेव ॥ ३ ॥

रा॥दृढेन गुणमयभोगासङ्गाख्येन शस्त्रेण छित्वा ततो—विषयासङ्गाद्धेतोस्तत्पदं परिमार्गितव्यम्—अन्वेषणीयम्; यस्मिन् गता भूयो न निवर्तन्ते॥

कथमनादिकालप्रवृत्तो गुणमयभोगसङ्गस्तन्मूलं च विपरीतज्ञानं निवर्तत इत्यत आह—

**तमेव चाद्यं पुरुषं प्रपद्येद्यतः प्रवृत्तिः प्रसृता पुराणी ॥　　४**

अज्ञानादिनिवृत्तये तमेव चाद्यं—कृत्स्नस्यादिभूतं*'मयाध्यक्षेण प्रकृतिस्सूयते सचराचरम्'†'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते'‡'मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय' इत्यादिषूक्तमाद्यं पुरुषमेव शरणं प्रपद्येत्—तमेव शरणं प्रपद्येत; यतो—यस्मात् कृत्स्नस्य स्रष्टुरियं गुणमयभोगसङ्गप्रवृत्तिः, पुराणी - पुरातनी प्रसृता; उक्तं हि मयैतत्पूर्वमेव 'दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति; 'प्रपद्येयतः प्रवृत्तिः' इति वा पाठः; तमेवचाद्यं पुरुषं प्रपद्य-शरणमुपगम्य, इयतः—अज्ञान निवृत्त्यादेः कृत्स्नस्यैतस्य साधनभूता प्रवृत्तिः पुराणी-पुरातनी

ता॥ततः परम्' इति परशब्दाध्याहारेण व्याख्यान्तरमयुक्तमित्यभिप्रायेणाह-ततो विषयासङ्गाद्धेतोरिति।'आत्मानमन्विच्छेत्' इत्यादिसूचनायाह—अन्वेषणीयमिति। छन्दोनुरोधाय च्छान्दसं 'निवर्तन्ति' इति परस्मैपदमित्यभिप्रायेण स्वयमात्मनेपदं प्रायुङ्क्त ॥

ननु दृढस्यासङ्गशस्त्रस्य लाभे हि तेन च्छिद्येत; तदेव तु संसारिभिर्दुर्लभतरमिति शङ्कयोत्तरग्रन्थं सङ्गमयति—कथमिति। 'निर्मानमोहाः' इत्यादिसमनन्तरग्रन्थानुसन्धानेनाह—अज्ञानादिनिवृत्तय इति। आद्यत्वं पूर्वोक्तप्रकारं तच्छब्देन स्माप्यत इत्याह—मयेति। यदाज्ञातिलङ्घनाद्बन्धः, स एव हि प्रसादितो मोचक इत्यभिप्रायेणैवकारः। तत्प्रपञ्चनरूपस्य 'यतः प्रवृत्तिः' इत्यादेर्महदादिसृष्टिमात्रपरत्वव्युदासायेममेवार्थं प्रपत्तिवाक्ये प्रागुक्तं स्मारयति—उक्तं हीति। '[1]तेषामेवानुकम्पार्थं' '[2]मच्चित्तस्सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि' '[3]मामेकं शरणं व्रज' इत्यादिकमपि भाव्यम्। अत्र प्रसृतादिशब्दैस्सत्यत्वस्यैव प्रतीतेः, परेषामिन्द्रजालदृष्टान्तश्शब्दस्वारस्येन प्रत्यक्षादिभिश्च बाधितः। छन्दोवद्दृषीणां प्रयोगानुमतेः 'प्रपद्येत्' इति परस्मैपदम्। तत्र ह्यभिमतं पाठान्तरमर्थान्तरं चाह—प्रपद्येत्यादिना। उत्तमपुरुषत्वे वाक्यानन्वयात् 'इयतः' इति पदच्छेदः। एवं च शङ्कायास्साक्षादिदमुत्तरं स्यादिति भावः। इयच्छब्दस्यात्र प्रकृतसाकल्यपरत्वमाह—अज्ञाननिवृत्त्यादेः कृत्स्नस्येति। पुरुषव्यापारविषयत्वाय—साधनभूतेत्युक्तम्। षष्ठ्यभिहितं सम्बन्धसामान्यमिह साध्यसाधनभाव-

प्र-पा॥*गी-९-१०॥ †गी.१०-८॥ ‡गी-७-७॥　　३. गी. १८-५८॥ ४. गी. १८-६६॥
१. जाबाल. ६॥　　२. गी. १०-११॥　　५. स्वाभिमतं. पा॥ ६. प्रकृताप्रकृत. पा॥

शा॥कथं परिमार्गितव्यमिति? आह—तमेव च यः पदशब्देन उक्तः आद्यम् आदौ भवम्

आ॥तदर्थं च तमेव प्रपद्ये प्रपद्येत। तच्चोक्तं तत्रैव 'तं वै प्रपद्येत यं वै प्रपद्य न शो-

ज॥वाक्यार्थस्य समाप्तत्वात् 'तमेव चाद्यम्' इति व्यर्थमित्यतः सङ्गतिं सूचयन्नाह—तदर्थं चेति। विमर्शार्थेच। विश्वविमर्शाद्ब्रह्मज्ञानं भवतु, स विमर्श एव कथं स्यादित्याकाङ्क्षां तदर्थमित्यनेन सूचयति। तर्हि चिच्छिदिषुं प्रति तदुपायो विधेयः, न तु प्रपद्य इति वचनं सङ्गतमित्यतो 'व्यत्ययो बहुलम्' इति वचनमाश्रित्याह—प्रपद्येतेति। कुतो व्यत्यय इत्यतः श्रुतिस्मृतिसंवादादित्याह—तच्चेति।

रा॥प्रसृता ; पुरातनानां मुमुक्षूणां प्रवृत्तिः पुराणी;पुरातना हि मुमुक्षवो मामेव शरणमुपगम्य निर्मुक्तबन्धास्सञ्जाता इत्यर्थः ॥ ४ ॥

निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५

एवं मां शरणमुपगम्य निर्मानमोहाः—निर्गतानात्मात्माभिमानरूपमोहाः जितसङ्गदोषाः - जितगुणमयभोगसङ्गाख्यदोषाः,अध्यात्मनित्याः-आत्मनि यत् ज्ञानं तदध्यात्मम्, आत्मज्ञाननिरताः, विनिवृत्तकामाः-विनिवृत्ततदितरकामाः, सुखदुःखसंज्ञैर्द्वन्द्वैश्च विमु-

ता॥रूपविशेषे विश्रान्तमिति भावः । 'प्रसृता पुराणी' इत्यनेन शिष्टाचारप्रदर्शनमभिमतमित्याह—**पुरातनानामिति** । तदेव विवृणोति—**पुरातनाहीति** ॥ ४ ॥

अस्मिन्नर्थे 'निर्मानमोहाः'इत्याद्यनन्तरवाक्यमपि 'यतः' इत्युक्तस्य विवरणतया सुसङ्गतमित्यभिप्रायेणाह—**एवमिति** । अत्र सामर्थ्यात्सङ्गनिवृत्तेः कारणं निर्मानमोहत्वमिति तदनुरूपं व्याख्याति—**निर्गतानात्मात्माभिमानरूपमोहा** इति । 'अमूढाः'इति पृथगुक्तेरत्र मानमोहमेलनव्याख्यानमयुक्तमिति भावः।आत्मसङ्गव्यवच्छेदाय-**गुणमये**ति विशेषणम्। जितसङ्गत्वफलमध्यात्मनित्यत्वम्;तच्च 'अध्यात्मज्ञाननित्यत्वम्'इति प्रागुक्तं, तदाह—**आत्मनि यज्ज्ञानमिति**।योगकाले नैरन्तर्येणोत्थानकालेऽपि प्राचुर्येणाध्यात्मज्ञाननिरतत्वम्। स्वादुतमे स्वात्मज्ञाने निरतत्वात्तदितरकामनिवृत्तिः। विनिवृत्तकामत्वमिह विशेषतो निवृत्तकामत्वं;तच्च विषयसन्निधावप्युपेक्षकत्वम्।सङ्गकामयोर्हेतुहेतुमद्भावस्य पूर्वोक्तत्वाच्चापुनरुक्तिः। **सुखदुःखसंज्ञैः**-अनुकूलप्रतिकूलस्वभावैरित्यर्थः।इदं चोपायदशाविवक्षायां द्वन्द्वतितिक्षापरम्; फलदशापरत्वे दुःखात्यन्तनिवृत्तिपरम्।'[1]त्रिभिर्गुणमयैर्भावैरेभिस्सर्वमिदं जगत्।मोहितम्'इत्युक्तमायातरणादिहामूढत्वम्, तच्च देहात्मभ्रमनिवृत्तेः'निर्मानमोहाः'इत्यनेनोक्तत्वात्तद्व्यतिरिक्तात्मानात्मविषयस-

प्र-पा ॥ १. गी. ७-१३॥

शं॥आद्यं पुरुषं प्रपद्ये इत्येवं परिमार्गितव्यं,तच्छरणतया इत्यर्थः। कः असौ पुरुषः इति? उच्यते—यतः यस्मात् पुरुषात् संसारमायावृक्षप्रवृत्तिः प्रसृता निस्सृता, ऐन्द्रजालिकादिव माया, पुराणी चिरन्तनी ॥ ४ ॥

कथम्भूताः तत् पदं गच्छन्तीति ? उच्यते—निर्मानमोहाः मानश्च मोहश्च मानमोहौ, तौ निर्गतौ येभ्यः ते निर्मानमोहाः मानमोहवर्जिताः । जितसङ्गदोषाः सङ्ग एव दोषः सङ्गदोषः, जितः सङ्गदोषो यैः ते जितसङ्गदोषाः । अध्यात्मनित्याः परमात्मस्वरू-

आ॥चेति न हृष्यति न जायते न म्रियते तद्ब्रह्म मूलं तच्छित्सुः' इति। 'नारायणेन दृष्टश्च प्रतिबुद्धो भवेत्पुमान्' इति च मोक्षधर्मे । छेदनोपायो ह्यत्राकाङ्क्षितः । न च भगवतोऽन्यः शरण्योऽस्ति ॥ ४ ॥

आ॥तद्विश्वं छित्सुः। अभ्यासलोप इडभावश्च च्छान्दसः। चिच्छिदिषुः । विश्वविमर्शार्थी यद्ब्रह्म विश्वस्य मूलं तमेव पुरुषं प्रपद्येतेत्यर्थः । प्रपत्त्या प्रसन्नेन नारायणेन दृष्टः । पुमान्प्रतिबुद्धो विश्वविमर्शक्षमो भवेदित्यर्थः । इतश्च पुरुषव्यत्ययोऽत्र व्याख्येय इत्याह—**छेदनेति** । अतस्तदुपायविधानमेव सङ्गतमिति शेषः । न केवलमुत्तमपुरुषोऽत्रानुपयुक्तः ; किं त्वयुक्तश्चेत्याह—**न चेति** । तमेव प्रपद्ये इत्येवं परिमार्गितव्यमिति सम्बन्धस्त्वयुक्तः, अस्य परिमार्गणत्वाभावात् ॥ ४ ॥

रा॥क्ताः, अमूढाः—आत्मानात्मस्वभावज्ञाः, तदव्ययं पदं गच्छन्ति-अनवच्छिन्नज्ञानाकारमात्मानं यथावस्थितं प्राप्नुवन्ति, मां शरणमुपगतानां मत्प्रसादादेवैतास्सर्वाः प्रवृत्तयस्सुशकास्सिद्धिपर्यन्ता भवन्तीत्यर्थः ॥ ५ ॥

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥** ६

तदात्मज्योतिर्न सूर्यो भासयते, न शशाङ्कः, न पावकश्च; ज्ञानमेव हि सर्वस्य प्रका-

ता॥मस्तभ्रमनिषेधरूपमित्यभिप्रायेणाह-**आत्मानात्मस्वभावज्ञा** इति। यद्वा मोहहेतुनिवृत्तिलक्षकोऽत्रामूढशब्दः, अन्योन्यव्यावर्तकासाधारणधर्मप्रतीत्या ह्यात्मानात्मैक्यमोहो निवर्तनीय इति भावः। स्वरूपतो निर्विकारत्वादात्मनां व्ययो ज्ञानसङ्कोचविकासरूपः ; तन्निषेधफलितमाह—**अनवच्छिन्नज्ञानाकारमिति** । पद्यत इति पदं 'प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः' इति परिशुद्धात्मनोऽपि परमात्मवत्प्राप्यत्वात्पदत्वम्। नचात्र परमात्मा पदशब्दाभिप्रेतः, अनन्तरश्लोके तस्यैव तच्छब्दपरामृष्टस्य मम धामेति व्यधिकरणनिर्देशात्। नच पदशब्दधामशब्दयोरिह दिव्यस्थानविषयत्वं, 'परिमार्गितव्यम्' इति तस्यान्वेषणीयत्वविध्ययोगात् । तस्यहि फलतयास्तीति ज्ञातव्यत्वमात्रं; नत्वात्मवत्समाधिपर्यन्तगवेषणास्पदत्वम् । मम धामेति निर्दिष्टस्यैव हि संसारावस्था '[2]ममैवांशः' इत्यादिनोच्यते। अन्यथा परस्थानप्रतिपादनानन्तरं '[2]ममैवांशः' इति बद्धावस्थजीवनिर्देशोऽपि नातीव सङ्गत इति भावः । उक्तशङ्कापरिहारतया 'तमेव' इत्यादेः पिण्डितं तात्पर्यमाह—**मां शरणमि**ति ॥ ५ ॥

प्रकाशकान्तरनैरपेक्ष्यद्योतनाय तच्छब्दाभिप्रेतमाह—**आत्मज्योतिरि**ति । अयं भावः—तच्छब्दस्य प्रकृतपरामर्शित्वस्वारस्यात् 'पदमव्ययं तत्' इति परिशुद्धात्मस्वरूपस्य प्रकृतत्वादुत्तरश्लोकेऽपि 'ममैवांशो जीवलोके जीवभूतः' इति तस्यैवोक्तेरत्रापि श्रुतिसिद्धस्वयंज्योतिष्ट्वव्यञ्जकधामशब्दप्रयोगाज्जीवविषयोऽयं श्लोक इति । सूर्याद्यप्रकाश्यत्वं स्वभाववैपरीत्येन स्थापयति—**ज्ञानमेव ही**ति । **सर्वस्येति**—प्रकाश्यवर्गस्य, तत्प्रकाशकतयाभिमतसूर्यादिज्योतिषोऽपीति भावः। ज्ञानं चेत्सर्वस्य प्रकाशकं,

**प्र-पा**॥१. वि. पु. ६-७-९३॥'विज्ञानम्प्रापकम्प्राप्ये परे ब्रह्मणि पार्थिव । प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः' ॥—उक्तस्य समाधिरूपज्ञानस्य 'भेषजं भगवत्प्राप्तिः' इत्युक्तम्परब्रह्मप्राप्तिफलमाह—विज्ञानमिति ॥ इदं विज्ञानं प्राप्ये परे ब्रह्मणि प्रापकन् , तथैव ब्रह्मवत् भावनात्रयरहितो भगवदुपासकः आत्मा प्रापणीयः-प्रापयितव्यः 'ब्रह्मविदाप्नोति परम्' 'विद्ययामृतमश्नुते' 'भक्त्यात्वनन्यया शक्यः' 'भक्त्यामामभिजानाति' 'तत्प्राप्तिहेतुर्ज्ञानञ्च' इत्यादि' इति श्रीविष्णुचित्तार्यैर्व्याख्यातम् ॥ २ ॥

शं॥**पालोचने नित्याः तत्पराः। विनिवृत्तकामाः विशेषतो निर्लेपेन निवृत्ताः कामाः येषां ते विनिवृत्तकामाः यतयः संन्यासिनः द्वन्द्वैः प्रियाप्रियादिभिः विमुक्ताः सुखदुःखसंज्ञैः परित्यक्ताः गच्छन्ति अमूढाः मोहवर्जिताः पदम् अव्ययं तत् यथोक्तम् ॥ ५ ॥**

**तदेव पदं पुनः विशिष्यते—तत् धाम इति व्यवहितेन धाम्ना सम्बध्यते । तत् धाम तेजोरूपं पदं न भासयते सूर्यः आदित्यः सर्वावभासनशक्तिमत्त्वेऽपि सति । तथा**

आ॥**साधनान्तरमाह—निर्मानेति** ॥ ५ ॥

ज॥तर्हि ब्रह्मज्ञानसाधनं विश्वविमर्शः, तत्र साधनं च तत्प्रपत्तिरिति समस्तमुक्तं किमुत्तरेणेत्यत आह—**साधनान्तरमिति** ॥ ५ ॥

रा॥शकम्ःबाह्यानि तु ज्योतींषि विषयेन्द्रियसंबन्धविरोधितमोनिरसनद्वारेणोपकारकाणि। अस्य च प्रकाशको योगः, तद्विरोधि चानादिकर्म, तन्निवर्तनं चोक्तं भगवत्प्रपत्तिमूलमसङ्गादि : यद्गत्वा पुनर्न निवर्तन्ते, तत्परमं धाम—परमं ज्योतिः, मम—मदीयं मद्विभूतिभूतो ममांश इत्यर्थः ; आदित्यादीनामपि प्रकाशकत्वेन तस्य परमत्वम्

तर्हि बाह्येष्वपि किं सूर्याद्यपेक्षया? कथञ्च तेषु प्रकाशकत्वव्यवहार इत्यत्राह—**बाह्यानित्विति। सम्बन्धविरोधीति**- सामग्रीमध्यपातिविशिष्टसम्बन्धाकारविवक्षयोक्तम् । नहि कुड्यादिवत्तमो व्यवधायकं, तमोव्यवहितालोकस्थग्रहणात् । एवं सर्वप्रकाशकमात्मज्योतिस्स्वयमेव किं न प्रकाशते, केनवान्येन तत्प्रकाश्यमित्यत्राह—**अस्य चेति** । चस्त्वर्थश्शङ्कानिवृत्यर्थः । स्वयंप्रकाशस्यापि यथावस्थितसमस्ताकारग्रहणे संसारिणां योग एवोपाय इति भावः । प्रकाशकान्तरप्रतिक्षेपे वेद्यत्वनिषेधशङ्काप्यनेन परिहृता । विशेषनिषेधश्शेषाभ्यनुज्ञानपर इति भावः। योगोऽपि सर्वेषां किं न सिध्येत्?तत्राह—**तद्विरोधीति** । सांसारिकं कर्म योगोत्पत्तिप्रतिबन्धकमित्यर्थः । तर्हि सर्वेषां न सिध्येदिति शङ्कायां प्रकृतेन परिहरति—**तन्निवर्तनं चेति। गत्वा**—प्राप्येत्यर्थः । धामशब्दोऽत्र प्राग्वन्न नियमनस्थानपरः; अपि तु सूर्याद्यपेक्षाप्रतिक्षेपात्स्वरूपस्य प्रकाशरूपत्वसिद्धेर्ज्योतिर्वाची।तत एव मम परं ज्योतिरित्यन्वयो मन्दः। ममेति स्वसम्बन्धविधिस्तु मुक्तदशाभाविपरमसाम्यशङ्कितस्वातन्त्र्यपरिहारेण सार्थ इत्यभिप्रायेणाह—**परं ज्योतिर्मम मदीयमिति** । 'ममैवांशः' इति वक्ष्यमाणस्यापि निदानमिहाभिप्रेतमिति व्यञ्जयन् षष्ठ्युक्तं सम्बन्धसामान्यं विशेषे नियच्छति—**मद्विभूतिभूत** इति । विभूतित्वं च नग्रहिणो गृहादिवत्,अपित्वपृथक्सिद्धविशेषणांशत्वेनेत्याह—**ममांश** इति। अयमभिप्रायः—नतावन्निरवयव एकस्मिन् स्वरूपेंशव्यपदेशः. अंशस्यैकवस्त्वेकदेशरूपत्वेन भेदाश्रयत्वादंशांशिभावस्य । अन्यथैकस्मिन् कोंशः कश्चांशी? नहि स एव तस्यांश इति भ्रान्तोऽपि ब्रूयात् । नच भेदाभेदसम्भवः, व्याघातसर्वश्रुतिकोपादिप्रसङ्गात् । 'पादोऽस्य विश्वा भूतानि'[1] 'तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्' 'यथाग्नेः[2] क्षुद्रा विष्फुलिङ्गा व्युचरन्त्येवमेवास्मादात्मनस्सर्वे एवात्मानो व्युचरन्ति' इत्यादिश्रुतिप्रतीतांशत्वं विशिष्टे विशेषणांशतयेति '[3]अंशो नानाव्यपदेशात्' इत्यधिकरणे '[4]प्रकाशादिवत्तु नैवं परः' इति सूत्रे

प्र-पा ॥ १. पुरुषसूक्तं. १-२-१ ॥

२ श्वेताश्व. ४-१० ॥

३. बृह. उप. ४-१-२० ॥ 'सयथोर्णनाभिस्तन्तुनोच्चरेत् यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युचरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युचरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' ॥

४. शारी. २-३-४५ ॥ अंशाधिकरणस्थमिदं सूत्रम् । एकद्रव्यैकदेशत्वं हि अंशत्वम् । अतो जीवस्य ब्रह्मैकदेशत्वेन जीवदोषा ब्रह्मणो दोषा एवेत्याशङ्क्याह प्रकाशादिवत्तु नैवम्परः-इति ॥ तुशब्दश्चोद्यं व्यावर्तयति । ब्रह्मांशत्वेऽपि जीवस्य,जीवो यत्स्वरूपो यत्स्वभावश्च, नैवम्परः निरवद्यः सर्वज्ञः सत्यसङ्कल्पएव सर्वदा । कथम् ?—प्रकाशादिवत्-प्रकाशविशिष्टानां मणिद्युमणिप्रभृतीनां प्रकाशः विशिष्टैकदेशत्वेनयथांशः। आदिशब्दात् विशेषणतैकस्वभावजातिगुणशरीराणि गृह्यन्ते । विशेषणानां विशिष्टैकदेशतया तदंशत्वेऽपि विशेषणविशेष्ययोः स्वरूपस्वभावभेदो न विरुद्धः। 'य आत्मनि तिष्ठन्...यस्यात्मा शरीरम्' इति हिश्रुतिः॥

आ॥**स्वरूपं कथयति—न तदित्यादिना** ॥ ६ ॥

ज॥उत्तरवाक्यानां सङ्गत्यप्रतीतेस्तां सूचयन्नाह—**स्वरूपमिति** । अनेन कीदृशं तत्पदं यत्प्राप्तिः पुरुषार्थ इत्याकाङ्क्षायामिदमुच्यत इत्युक्तं भवति । **स्वरूपमित्यनेन** पदमित्युक्तस्य धामेति वक्ष्यमाणस्य चार्थोऽप्युक्तो भवति, स्थानतेजसोरसङ्गतत्वात् ॥ ६ ॥

रा॥आदित्यादीनि हि ज्योतींषि न ज्ञानज्योतिषः प्रकाशकानि, ज्ञानमेव सर्वस्य प्रकाशकम् ॥ ६ ॥

ममैवांशो जीवलोके जीवभूतस्सनातनः ।
मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७

इत्थमुक्तस्वरूपस्सनातनो ममांश एव सन् कश्चिदनादिकर्मरूपाविद्यावेष्टितो जीवभूतो जीवलोके वर्तमानो देवमनुष्यादिप्रकृतिपरिणामविशेषशरीरस्थानि मनष्षष्ठानीन्द्रियाणि कर्षति । कश्चिच्च पूर्वोक्तेन मार्गेणास्या अविद्यायाः मुक्तः स्वेन रूपेणावतिष्ठते; जीवभूतस्त्वति संकुचितज्ञानैश्वर्यः कर्मलब्धप्रकृतिपरिणामविशेषरूपशरीरस्थानामिन्द्रियाणां मनष्षष्ठानामीश्वरः तानि कर्मानुगुणमितस्ततः कर्षति ॥ ७ ॥

---

ता॥पितम् । अतोऽनेकेष्वेव केनचिदुपाधिनैकतयाभिमतेषु कश्चिन्निरूप्यमाणोंऽश इति व्यपदिश्यते । एवमेवहि पटादिराश्यादिष्वपि। तच्च विशेषणविशेष्यभावेनावस्थितेष्वपि विशिष्टैक्ये'विशेषणांशः'इत्यादिव्यपदेशेषु तुल्यम् । तस्मादत्रात्यन्तभिन्नयोर्जीवपरयोर्विभूतितद्वद्भावेन विशिष्टैक्याद्विशेषणभूतो जीवो निष्कृष्य व्यपदिश्यमानः प्रधानापेक्षयांश इति व्यपदिश्यत इति । अत्र निरङ्कुशपारम्यवत्परमात्मव्यतिरिक्तविषयधामशब्दनिर्दिष्टज्योतिर्विशेषणभूतं परमत्वं सन्निहितज्योतिरपेक्षयेति तत्फलितमाह—**आदित्यादीनामपी**ति ॥ ६ ॥

यद्येवं त्वद्विभूतितया तवांश एव, तर्हि नित्यसूरिवर्गवदविशेषेण सर्वेषां परिशुद्धाकारयोगः किं नस्यादित्यत्र बद्धस्यापि स्वविभूतित्वमनूद्य बद्धमुक्तादिव्यवस्थापनं 'ममैवांशः' इत्यादिनोच्यत इत्यभिप्रायेणाह—**इत्थमुक्तस्वरूप** इति ॥ ७ ॥*

---

प्र·पा ॥ * अत्र. ७-८-९ श्लोकानां तात्पर्यचन्द्रिका न लभ्यते ॥

---

शं॥न शशाङ्कः चन्द्रः,न पावकः न अग्निरपि। यत् धाम वैष्णवं पदं गत्वा प्राप्य न निवर्तन्ते, यच्च सूर्यादिः न भासयते तत् धाम परमं विष्णोः मम पदम्, यत् गत्वा न निवर्तन्ते इत्युक्तम् ॥ ६ ॥

ननु सर्वा हि गतिः आगत्यन्ता,'संयोगाः विप्रयोगान्ताः' इति प्रसिद्धम् । कथम् उच्यते 'तत् धाम गतानां नास्ति निवृत्तिः' इति? शृणु तत्र कारणम्—ममैव परमात्मनः नारायणस्य, अंशः भागः अवयवः एकदेशः इति अनर्थान्तरं, जीवलोके संसारे जीवभूतः कर्ता भोक्ता इति प्रसिद्धः सनातनः चिरन्तनः; यथा जलसूर्यकः सूर्यांशः जलनिमित्तापाये सूर्यमेव गत्वा तेनैव आत्मना गच्छति, एवमेव; यथा वा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाशः आकाशांशः सन् घटादिनिमित्तापाये आकाशं प्राप्य न निवर्तते इत्येवम् । अतः उपपन्नम् उक्तं 'यद्गत्वा न निवर्तन्ते' इति । ननु निरवयवस्य परमात्मनः कुतः अवयवः एकदेशः अंशः इति? सावयवत्वे च विनाशप्रसङ्गः अवयवविभागात् । नैष दोषः, अविद्याकृतोपाधिपरिच्छिन्नः एकदेशः अंश इव कल्पितो यतः। दर्शितश्च अयम् अर्थः क्षेत्राध्याये विस्तरशः । स च जीवो मदंशत्वेन कल्पितः कथं संसरति उत्क्रामति च इति? उच्यते—मनष्षष्ठानि इन्द्रियाणि श्रोत्रादीनि प्रकृतिस्थानि स्वस्थाने कर्णशष्कुल्यादौ प्रकृतौ स्थितानि कर्षति आकर्षति ॥ ७ ॥

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८

रा॥यच्छरीरमवाप्नोति, यस्माच्छरीरादुत्क्रामति, तत्रायमिन्द्रियाणामीश्वरः एतानि-इन्द्रियाणि भूतसूक्ष्मैस्सह गृहीत्वा संयाति वायुर्गन्धानिवाशयात्।यथा वायुः स्रक्चन्दनकस्तूरिकादि-आशयात्— तत्स्थानात् सूक्ष्मावयवैस्सह गन्धान् गृहीत्वान्यत्र संयाति, तद्वदित्यर्थः ॥ ८ ॥

शं॥कस्मिन् काले ? – यच्चापि यदापि उत्क्रामति ईश्वरः देहादिसङ्घातस्वामी जीवः,

आ॥कर्षतीत्युक्ते जीवस्यस्वातन्त्र्यं प्रतीतं, तन्निवारयति—शरीरमित्यादिना॥ यत्-यदा शरीरमवाप्नोति उत्क्रामति जीवः,तदेश्वर एवैतानि गृहीत्वा संयाति। 'यत्रयत्र च संयुक्तो धाता गर्भं पुनःपुनः । तत्रतत्रैव वसति न यत्र स्वयमिच्छति' इति मोक्षधर्मे । 'भावाभावावपि जानन्गरीयो जानामि श्रेयो न तु तत्करोमि । आशासु हर्म्यासु ह्रदासु कुर्वन्यथा नियुक्तोऽस्मि तथा वहामि' इति च । 'हत्वा जित्वापि मघवन्यःकश्चित्पुरुषायते। अकर्ता त्वेव भवति कर्ता त्वेव करोति तत्'इति च । 'तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनान्वारूढ उत्सर्जद्याति' इति च श्रुतिः । 'वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' इति च।गन्धानिव सूक्ष्माणि। भोगोऽस्यापि साधितः पुरस्तात् ॥ ८ ॥

अ॥पूर्ववाक्ये जीवस्य प्रकृतत्वात्तदुत्तरमपि तद्विषयमिति व्याख्यानमसत् , ईश्वरपदरूढार्थपरित्यागदोषादित्याशयवान् सङ्गतिं तावदाह—कर्षतीति। शरीरावाप्तौ मूलकारणात्,उत्क्रमणे शरीरात्,स्थितौ गोलकादिभ्यो विषयान्प्रतीन्द्रियाणि जीवः कर्षतीति पूर्वोक्तम्।तथाच तस्य नियामकान्तरानुक्त्या इन्द्रियकर्षणे स्वातन्त्र्यं प्रतीतम् ; तदयुक्तम्, पूर्वोक्तविरोधादित्याशङ्कयेश्वरस्यैव तत्प्रतिपादयंस्तज्जीवस्य स्वातन्त्र्यं निवारयतीत्यर्थः।श्लोकद्वयोपादानायादिपदम्।अत्र शरीरावाप्त्युत्क्रमणयोरुक्तत्वादीश्वरस्य तदयोगात्कथमिदं तद्विषयमित्यतो व्याचष्टे—यदिति । जीव इति पूर्ववाक्यादनुवर्तते । यदेति श्रवणात्तदेति लभ्यते । एतानीन्द्रियाणि । संयाति शरीरम् , लोकान्तरं च । कुतोऽयमर्थ इत्यतो जीवस्य शरीरप्राप्तौ तावदीश्वराधीनत्वे प्रमाणसम्मतिमाह—यत्रेति। संयुक्तः - प्रेरकत्वेन संयुक्तः यत्रयत्रैव योनौ गर्भं धाता, तत्रतत्रैव वसति जीवः । प्रवृत्तावपीश्वराधीनत्वे जीवस्य प्रमाणसंवादमाह—भावेति । भावाभावौ लौकिके शुभाशुभे गरीयः श्रेयो मोक्षमपि तथाऽपि तन्न करोमि साधयितुं न स्वतन्त्रोऽस्मि; किन्तु आशासु दिक्षु हर्म्यासु हर्म्येषु ह्रदासु ह्रदेषु तास्ताः क्रियाः कुर्वन्निव प्रतीयमानोऽहं यथेश्वरेण नियुक्तोऽस्मि, तथा तां वहामि । हननादिक्रियाः कृत्वा यः कश्चित्परमपुरुषवत्स्वातन्त्र्यमात्मनो मन्यते, सोऽप्यकर्तैव भवति। यतस्तद्धननादिकर्तेश्वर एव करोति , शरीरोत्क्रमणमपीश्वराधीनमित्यत्र श्रुतिसम्मतिमाह—तद्यथेति । अनः शकटम् । सुसमाहितं पुरुषेण सम्यगधिष्ठितमुत्सर्जद्ग्रामादिकमुत्सृजच्छारीर आत्मा जीवः प्राज्ञेनात्मना परमात्मना अन्वारूढोऽधिष्ठितः । उत्सर्जत् शरीरमुत्सृजन्। वागित्यनेनोत्क्रमणे परदेवता वागादीन्याकर्षतीत्युच्यते। अनेकेष्वाकृष्यमाणेषु सत्सु गन्धोपादानेऽभिप्रायमाह—गन्धानिवेति । गन्धवतः पुष्पाद्यवयवानित्यर्थः । ननु श्रोत्रमित्यादिना विषयभोगोऽस्योच्यते, न चेश्वरस्यासावस्ति ; किं तु जीवस्यैव;तत्कथमिदमीश्वरविषयमित्यत आह—भोग इति । पुरस्तात्—सप्तमे ॥ ८ ॥

रा॥ कानि पुनस्तानीन्द्रियाणीत्यत्राह—

श्रोत्रं चक्षुस्स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९

एतानि मनष्षष्ठानीन्द्रियाण्यधिष्ठाय स्वस्वविषयवृत्त्यनुगुणानि कृत्वा तान् शब्दादीन् विषयानुपसेवते उपभुङ्क्ते ॥ ९ ॥

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १०

एवं गुणान्वितं सत्त्वादिगुणमयप्रकृतिपरिणामविशेषमनुष्यत्वादिसंस्थानपिण्डसंसृष्टं पिण्डविशेषादुत्क्रामन्तं पिण्डविशेषेऽवस्थितं वा गुणमयान् विषयान् भुञ्जानंवा कदाचिदपि प्रकृतिपरिणामविशेषमनुष्यत्वादिपिण्डाद्विलक्षणं ज्ञानैकाकारम् विमूढा

---

ता॥ कर्मकलापनिगलितस्य कलेवरकारागृहेऽवस्थानं, तत्रोत्क्रमणप्रवेशादिक्लेशः, तत्रस्थस्य च विषमधुकल्पक्षुद्रतरविषयोपसेवा चोक्तानि । अथ तदुपरि तन्निदानभूतमात्मापहरणचौर्यमुपक्षिप्य योग्यानुपलम्भं च परिहरति—'उत्क्रामन्तम्' इति श्लोकेन । गुणान्वितत्वमितरेषां हेतुरित्यभिप्रायेण पूर्वं तद्व्याख्या। उत्क्रमणादिकथनं सर्वावस्थोपलक्षणमित्यभिप्रायेण—**कदाचिदपीत्युक्तम्**। 'अहम्' इति नित्यमुपलभ्यमाने सर्वेषां स्वात्मनि, भुञ्जानतादौ च स्वात्मसाक्षिके कथं केचिन्नानुपश्यन्तीत्युच्यत इत्यत्राह—**मनुष्यत्वादिपिण्डाद्विलक्षण** इति । प्रकृतिपरिणामविशेषमनुष्यत्वादिविशिष्टपिण्डादित्यर्थः । ज्ञानैकाकारत्वोक्तिर्वैलक्षण्यप्रकाराणामुपलक्षणार्था। 'विमूढा नानुपश्यन्ति' इति भगवतस्सानुक्रोशोक्तिः। यथाव-

---

शं॥ तदा 'कर्षति' इति श्लोकस्य द्वितीयपादः अर्थवशात् प्राथम्येन सम्बध्यते। यदा च पूर्वस्मात् शरीरात् शरीरान्तरम् अवाप्नोति तदा गृहीत्वा एतानि मनष्षष्ठानि इन्द्रियाणि संयाति सम्यक् याति गच्छति । किमिव इति? आह—**वायुः** पवनः **गन्धानिव आशयात्** पुष्पादेः ॥ ८ ॥

कानि पुनः तानि इति?—**श्रोत्रं चक्षुः स्पर्शनं च** त्वगिन्द्रियं **रसनं** जिह्वा **घ्राणमेव च, मनश्च** षष्ठं प्रत्येकम् इन्द्रियेण सह, **अधिष्ठाय** देहस्थः **विषयान्** शब्दादीन् **उपसेवते** ॥ ९ ॥

एवं देहगतं देहाच्च—**उत्क्रामन्तं** देहं पूर्वोपात्तं परित्यजन्तं **स्थितं वाऽपि** देहे तिष्ठन्तं **भुञ्जानं वा** शब्दादींश्च उपलभमानं **गुणान्वितं** सुखदुःखमोहाख्यैः गुणैः अन्वितम् अनुगतं संयुक्तमित्यर्थः । एवम्भूतमपि एनम् अत्यन्तदर्शनगोचरप्राप्तं **विमूढाः** दृष्टादृष्टविषयभोगबलाकृष्टचेतस्तया अनेकधा मूढाः **न अनुपश्यन्ति** अहो! कष्टं वर्तते इति

---

आ॥ इन्द्रियद्वारापि सोऽपि भुङ्क्ते। 'तद्य इमे वीणायां गायन्त्येतं ते गायन्ति' इति च श्रुतिः । गुणान्वितमेव भुङ्क्ते । 'न हवै देवान्पापं गच्छति' इति श्रुतेः ॥ ९ ॥

---

ज॥ अस्तीश्वरस्य भोगः; किं तु जीवेन्द्रियैर्नास्तीत्यतो जीवविषयमेतदित्यत आह—**इन्द्रियेति** । राजाद्यन्तर्गतं गायन्तीत्यनेन हि तच्छ्रोत्रेण गानभोगो लभ्यते । विषयभोगाङ्गीकारे दुष्टस्यापि भोगः स्यादित्यत उत्तरवाक्यगतं विशेषणमाश्रित्याह—**गुणेति** । गुणमेवेत्यर्थः । एतद्भुञ्जानस्य विशेषणमिति केचित्; तान्प्रत्याह—**न ह वा** इति ॥ ९ ॥

रा॥नानुपश्यन्ति ; विमूढाः—मनुष्यत्वादिपिण्डात्माभिमानिनः; ज्ञानचक्षुषस्तु पिण्डात्मविवेकविषयज्ञानवन्तः सर्वावस्थमप्येनं विविक्ताकारमेव पश्यन्ति ॥ १० ॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११

मत्प्रपत्तिपूर्वकं कर्मयोगादिषु यतमानास्तैर्निर्मलान्तःकरणा योगिनो योगाख्येन चक्षुषा आत्मनि—शरीरेऽवस्थितमपि शरीराद्विविक्तं स्वेन रूपेणावस्थितमेनं पश्यन्ति । यतमाना अप्यकृतात्मानः—मत्प्रपत्तिविरहिणः ततएवासंस्कृतमनसः,ततएवाचेतसः—आत्मावलोकनसमर्थचेतोरहिताः—नैनं पश्यन्ति ॥ ११ ॥

एवं रविचन्द्राग्नीनामिन्द्रियसन्निकर्षविरोधिसन्तमसनिरसनमुखेनेन्द्रियानुग्राहकतया प्रकाशकानां ज्योतिष्मतामपि प्रकाशकज्ञानज्योतिरात्मा मुक्तावस्थो जीवावस्थश्च

---

ता॥स्थितात्मदर्शनमूलं विमूढत्वं तद्विषयमेवेत्याह—**मनुष्यत्वादिपिण्डात्माभिमानिन** इति। नित्यस्वप्रकाशत्वाद्यतिरेकाय विविक्ताकारत्वोक्तिः ॥ १० ॥

उक्तएवार्थस्सहेतुकमुपपाद्यते—'यतन्तः' इति श्लोकेन। 'यतन्तो योगिनः' इति पूर्वप्रपञ्चितमिह स्मारितमित्याह—**मत्प्रपत्तिपूर्वकमिति** । आत्मशब्दोऽत्रार्थान्तरानन्वयात्प्रस्तुतशरीरविषयः । तथा सत्यदर्शनशङ्काहेतुश्चानूदितो भवतीत्यभिप्रायेणाह—**शरीरेऽवस्थितमपी**ति। यतमानानां कथमकृतात्मत्वमित्यत्राह—**मत्प्रपत्तिविरहिण** इति। अत्रासंस्कृतमनस्त्वं—शरणवरणाभावः । विद्यमानस्यापि चेतसः प्रकृतोपयोगाभावादसत्कल्पत्वमचेतश्शब्देन विवक्षितमित्याह—**आत्मावलोकनसमर्थचेतोरहिता** इति ॥ ११ ॥

'यदादित्यगतं तेजः' इत्यादेः पूर्वोत्तरासङ्गतिपरिहाराय सुखग्रहणाय चोक्तमर्थं निष्कृष्याह—**एवं रविचन्द्राग्नीनामिति** । आत्मज्योतिषो विभूतित्वोक्त्यनन्तरं तत्प्रकाशनासमर्थतया व्यवच्छेद्यत्वेन

---

शं॥अनुक्रोशति भगवान् ये तु पुनः प्रमाणजनितज्ञानचक्षुषः ते एनं पश्यन्ति ज्ञानचक्षुषः विविक्तदृष्टयः इत्यर्थः ॥ १० ॥

**केचित्**—यतन्तः प्रयत्नं कुर्वन्तः योगिनश्च समाहितचित्ताः एनं प्रकृतम् आत्मानं पश्यन्ति 'अयम् अहम् अस्मि' इति उपलभन्ते आत्मनि स्वस्यां बुद्धौ अवस्थितम्।यतन्तोऽपि शास्त्रादिप्रमाणैः, अकृतात्मानः असंस्कृतात्मानः तपसा इन्द्रियजयेन, दुश्चरितात् अनुपरताः, अशान्तदर्पाः, प्रयत्नं कुर्वन्तोऽपि न एनं पश्यन्ति अचेतसः अविवेकिनः ॥

---

आ॥तर्हि किमिति न दृश्यत इत्यत आह—उत्क्रामन्तमित्यादिना ॥ १० ॥

यतन्तो ज्ञानं प्राप्य अकृतात्मानः अशुद्धबुद्धयः ॥ ११ ॥

---

ज॥उक्तमेव किमित्युच्यत इति मन्दाशङ्कानिरासार्थमुत्तरश्लोकद्वयस्य सङ्गतिमाह—**तर्ही**ति । यदि जीवातिरिक्तो देहे नियामकः स्यादिति शेषः । उक्तानुवादेन विमूढत्वमनुपलम्भे कारणम् । न तदभाव इत्युच्यत इति भावः ॥ १० ॥

'यतन्तो योगिनश्च' इति कारणान्तरमुच्यते' इति प्रतीतिनिराकरणार्थमाह—**यतन्त** इति।आत्मा जीवश्चेत्सर्वदाऽकृत एव, शरीरं चेदसम्भव इत्यत आह—**अकृतेति** । आत्मा बुद्धिः, अकृतत्वं चाशुद्धत्वम् । केशान् करोतीत्यादौ शोधनेऽपि करोतेः प्रयोगादिति भावः ॥ ११ ॥

रा॥भगवद्विभूतिरित्युक्तम्-'तद्धाम परमं मम' 'ममैवांशो जीवलोके जीवभूतस्सनातनः' इति । इदानीमचित्परिणामविशेषभूतमादित्यादीनां ज्योतिष्मतां ज्योतिरपि भगवद्विभूतिरित्याह—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२

'अखिलस्य जगतो भासकमेतेषामादित्यादीनां यत्तेजः,तन्मदीयं तेजः—तैस्तैराराधितेन मया तेभ्यो दत्तमिति विद्धि ॥ १२ ॥

ता॥प्रसक्तानां प्राकृतज्योतिषामपि विभूतित्वोक्तिर्युक्तेत्युक्तं भवति । अन्येषां तेजः कथमन्यस्य स्यात् ? अतोऽत्रादित्यादितादात्म्यं प्रतीयत इत्यत्राह—तैस्तैराराधितेनेति । श्रूयते हि '[1]येन सूर्यस्तपति तेजसेद्धः''[2]यस्यादित्यो भामुपयुज्य भाति''[3]न तत्र सूर्यो भाति'इत्युपक्रम्य'तस्य भासा सर्वमिदं विभाति' इति। अतस्सर्वं स्वत ईश्वरशेषभूतं सत् तत्तत्कर्मानुरूपात्तत्सङ्कल्पात्कियन्तं कालमन्येषामपि शेषत्वं भजत इति भावः । अत्र तेजश्शब्देन चैतन्यज्योतिर्विवक्षा 'जगद्भासयतेऽखिलम्' इत्यादिना न सङ्गच्छते ; नह्यादित्यादिगतत्वेन चैतन्यमस्माकं घटादीन् प्रकाशयति। सर्वत्र चैतन्याविशेषेऽप्यादित्यादिषु सत्त्वाधिक्याद्दर्पणादिवदित्यप्यसारम् , तन्मते चैतन्यस्य व्यङ्ग्यत्वाद्यसम्भवादिति ज्योतिषां प्रकाशकत्वशक्तिस्स्वकीयेत्युक्तम् ॥ १२ ॥

प्र-पा ॥ १. काठके. ३-प्र. ९. अनु ॥ २ ॥ ३. कठ. २-५-१५ ॥

शं॥यत् पदं सर्वस्य अवभासकमपि आदित्यादिकं ज्योतिः न अवभासयते, यत् प्राप्ताश्च मुमुक्षवः पुनः संसाराभिमुखाः न निवर्तन्ते, यस्य च पदस्य उपाधिभेदम् अनु विधीयमानाः जीवाः घटाकाशादयः इव आकाशस्य अंशाः, तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं च विवक्षुः चतुर्भिः श्लोकैः विभूतिसंक्षेपमाह भगवान्—यत् आदित्यगतम् आदित्याश्रयं किं तत् ? तेजः दीप्तिः प्रकाशः जगत् भासयते प्रकाशयति अखिलं समस्तं ; यत् चन्द्रमसि शशभृति तेजः अवभासकं वर्तते, यच्च अग्नौ हुतवहे, तत् तेजः विद्धि विजानीहि मामकं मदीयं मम विष्णोः तत् ज्योतिः ॥

अथवा यत् आदित्यगतं तेजः चैतन्यात्मकं ज्योतिः, यत् चन्द्रमसि, यच्च अग्नौ वर्तते,तत् तेजः विद्धि मामकं मदीयं विष्णोः तत् ज्योतिः ॥

ननु स्थावरेषु जङ्गमेषु च तत् समानं चैतन्यात्मकं ज्योतिः, तत् कथम् इदं विशेषणं 'यदादित्यगतम्' इत्यादि ?

नैष दोषः; सत्त्वाधिक्यात् आविस्तरत्वोपपत्तेः।आदित्यादिषु हि सत्त्वम् अत्यन्त-

आ॥पूर्वोक्तमेव ज्ञानं प्रपञ्चयति—यदादित्यगतमित्यादिना ॥ १२ ॥

ज॥ननु ' न तद्भासयते ' इत्यादिना स्वरूपं कथितं, तत्किमुत्तरेणेत्यत आह—पूर्वोक्तमेवेति । ' अधश्च मूलान्यनुसन्ततानि ' इति यत्सर्वान्तर्यामिस्वरूपं विज्ञानमुक्तं,यच्चोर्ध्वशब्देन सर्वोत्तमत्वं, तदध्यायशेषेण प्रपञ्चयतीत्यर्थः ॥ १२ ॥

रा॥पृथिव्याश्च भूतधारिण्या धारकत्वशक्तिर्मदीयेत्याह—

**गामाविश्य च भूतानि धारयाम्यहमोजसा ॥**

**पुष्णामि चौषधीस्सर्वास्सोमो भूत्वा रसात्मकः ॥** १३

**अहं पृथिवीमाविश्य सर्वाणि भूतान्योजसा ममाप्रतिहतसामर्थ्येन धारयामि, तथाहममृतरसमयस्सोमो भूत्वा सर्वौषधीः पुष्णामि ॥ १३ ॥**

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**

**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥** १४

**अहं वैश्वानरः— जाठरानलो भूत्वा सर्वेषां प्राणिनां देहमाश्रितः तैर्भुक्तं खाद्यचो**

ता॥एवमन्येषामपि सर्वेषां तत्तद्विशेषकार्यजननशक्तिस्स्वकीयेति पृथिवीसोमवैश्वानराणां धारणाप्यायनपचनशक्तिभिरुपलक्ष्यते, अन्यथा स्वशक्तिमात्रकथने प्रकृतवैरूप्यादित्यभिप्रायेणाह—**पृथिव्याश्च भूतधारिण्याः धारकत्वशक्तिर्मदीयेति।सर्वाणीति**—चराणि स्थावराणि चेत्यर्थः।अन्ये हि पदार्थाः प्रतिघातिना संयोगेन धारयन्ति;अतस्तद्व्यवच्छेदार्थम्'ओजसा'इति स्वासाधारणशक्तिनिर्देशः।तदभावे पृथिव्या धारकत्वशक्तिः प्रतिहन्येतेत्यभिप्रायेणाह—**ममाप्रतिहतसामर्थ्येनेति**। श्रूयते च "येन द्यौरुग्रा पृथिवी च दृढे"[1]"स दाधारपृथिवीं द्यामुतेमां"[2]"येनेमे विधृते उभे[3] । विष्णुना विधृतेभूमी"[4] "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः"[5]इति। सोमत्वाकारोऽत्र रसात्मक इति विशेष्यते । तेन पोषणद्वारविवक्षामाह—**अमृतरसमयस्सोमो भूत्वेति** । अत्र विशेषणशक्त्या रसैः पुष्णामीति गम्यते ॥ १३ ॥

जाठरानलो भूत्वेति'कोष्ठेऽग्निर्भुक्त मृच्छति'इति तेन ह्युक्तमिति भावः।ननु"त्रेधा विहितंवा इद-

प्र-पा ॥ १. ४. का. १-प्र-८-अ. ५-पं ॥
२. ४. का २-प्र. ८. अ. २. पं॥
३. आरण्यके. १. प्र. ८. अ. २. पं ॥
४. बृ. ५-८-९ ॥
५ ॥
६ ॥

शां॥प्रकाशम् अत्यन्तभास्वरम्;अतः तत्रैव आविस्तरं ज्योतिः इति तत् विशिष्यते,न तु तत्रैव तत् अधिकं इति।यथा हि लोके,तुल्येऽपि मुखसंस्थाने, न काष्ठकुड्यादौ मुखम् आविर्भवति, आदर्शादौ तु स्वच्छे स्वच्छतरे च तारतम्येन आविर्भवति ; तद्वत् ॥ १२ ॥

किंच—गां पृथिवीम् आविश्य प्रविश्य धारयामि भूतानि जगत् अहं ओजसा बलेन;यत् बलं कामरागविवर्जितम् ऐश्वरं रूपं जगद्विधारणाय पृथिव्याम् आविष्टं, येन पृथिवी गुर्वी न अधः पतति, न विदीर्यते च । तथा च मन्त्रवर्णः 'येन द्यौरुग्रा पृथिवी च दृढे' इति, 'स दाधार पृथिवीम्' इत्यादिश्च । अतः गामाविश्य च भूतानि चराचराणि धारयामि । किंच पृथिव्यां जाताः ओषधीः सर्वाः व्रीहियवाद्याः पुष्णामि पुष्टिमतीः स्वादुमतीश्च करोमि सोमो भूत्वा रसात्मकः सोमः सन् रसात्मकः रसस्वभावः।सर्वरसानाम् आकरः सोमः। स हि सर्वरसात्मकः सर्वाः ओषधी स्वात्मरसान् अनुप्रवेशयन् पुष्णाति ॥ १३ ॥

आ॥गां भूमिम्॥ १३ ॥

ज॥धेनोरावेशो न भूतधारणे कारणमित्यत आह—गामिति ॥ १३ ॥

रा॥चूष्यलेह्यपेयात्मकं चतुर्विधमन्नं प्राणापानवृत्तिभेदसमायुक्तः पचामि ॥ १४ ॥

अत्र परमपुरुषविभूतिभूतौ सोमवैश्वानरौ 'अहं सोमो भूत्वा' 'वैश्वानरो भूत्वा इति-तत्सामानाधिकरण्येन निर्दिष्टौ। तयोश्च सर्वस्य भूतजातस्य परमपुरुषसामानाधिकरण्यनिर्देशहेतुमाह—

**सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च।**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५**

तयोस्सोमवैश्वानरयोः सर्वस्य च भूतजातस्य सकलप्रवृत्तिनिवृत्तिमूलज्ञानोदयदेशे हृदि सर्वं मत्संकल्पेन नियच्छन् अहमात्मतया सन्निविष्टः। तथाहुश्श्रु-

ता॥मन्नमशनं खादः' इति वचनात्कथं चातुर्विध्यं?, तत्राह—**खाद्यचूष्यलेह्यपेयात्मकमिति**। आकारान्तरेण सङ्ग्रहादन्यत्र त्रेधोपदेश इति भावः। 'अपानप्राणयोर्मध्ये प्राणापानसमाहितः। समन्वितस्समानेन सम्यक्पचति पावकः' इत्यादिष्वान्तरपवनवृत्तिसन्धुक्षितो ह्यग्निः पचनाय प्रभवतीत्युच्यत इत्यभिप्रायेणाह—**प्राणापानवृत्तिभेदसमायुक्त** इति ॥ १४ ॥

एकएव हि वायुश्शारीरोऽनेकवृत्तिरिति 'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते' इति सूत्रभाष्येण 'प्राणोऽपानो व्यान उदानस्समान इत्येतत्सर्वं प्राण एव' इति श्रुत्योपपादितम्। 'सर्वस्यचाहम्' इति श्लोकस्यासाङ्गत्यशङ्कापरिहारायोक्तसामानाधिकरण्यहेतुपरत्वेन सङ्गतिमाह—**अत्र परमपुरुषविभूतिभूतावित्यादि**ना। चशब्द उक्तसमुचयार्थ इत्यभिप्रेत्य उक्तार्थमाह—**तयोस्सोमवैश्वानरयोरिति**। 'सर्वस्य' इत्यस्य 'हृदि' इत्येतत्समभिव्याहारसामर्थ्यलब्धार्थमाह-**सर्वस्य भूतजातस्येति**। 'हृदि' इति निर्देशस्य प्रयोजनं सूचयितुं तत्स्वभावमाह—**सकलप्रवृत्तीति**। आकाशवन्निविष्टत्वव्यवच्छेदायाह—**आत्मतया सन्निविष्ट इति**। आत्मत्वोपपादनायोक्तं—**सर्वं मत्सङ्कल्पेन नियच्छन्निति**। **तथाहुरिति**—नियम-

प्र-पा ॥ १ ॥

२. शारी. २-४-११॥ 'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते'-प्राणापानादिवृत्तिभेदात् प्राण एव पञ्चधाव्यपदिश्यते। मनोवत्—यथा एकमेव मनः कामादिवृत्तिभेदेन तैश्शब्दैरभिधीयत इति श्रुतिराह-'कामस्सङ्कल्पः' इत्यारभ्य 'ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति। अपानादिसमानपर्यन्तं व्यपदिश्य 'एतत्सर्वं प्राण एव' इति-व्यपदेशात् प्राणएवपञ्चवृत्तिरित्यवगम्यते ॥

३. बृ १-५-३॥

शं॥किंच—अहम् एव वैश्वानरः उदरस्थः अग्निः भूत्वा-'अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते' इत्यादिश्रुतेः। वैश्वानरः सन् प्राणिनां प्राणवतां देहम् आश्रितः प्रविष्टः प्राणापानसमायुक्तः प्राणापानाभ्यां समायुक्तः पचामि पक्तिं करोमि अन्नं चतुर्विधं भोज्यं भक्ष्यं चूष्यं लेह्यं च। 'भोक्ता वैश्वानरः अग्निः; अग्नेः भोज्यम् अन्नं सोमः, तदेतत् उभयम् अग्नीषोमौ सर्वं" इति पश्यतः अन्नदोषलेपः न भवति ॥ १४ ॥

किंच सर्वस्य च प्राणिजातस्य अहम् आत्मा सन् हृदि बुद्धौ संनिविष्टः। अतः

आ॥ वेदनिर्णयात्मिका मीमांसा वेदान्ताः। तथाच सामवेदे प्राचीन-

जा॥वेदान्तकृदित्युपनिषदां कर्तेत्यन्यथाप्रतीतिनिरासार्थमाह—**वेदेति**। वेदो-वेदार्थः। तस्यान्तो निर्णयस्तदात्मिका। तादर्थ्यात्ताच्छब्द्यम् मीमांसा ब्राह्मी। तस्याः कर्तेति शेषः। कुत एतदित्यत आह—**तथा चेति**।

रा॥तयः*'अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा'†'यः पृथिव्यां तिष्ठन्'‡'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमयति, §'पद्मकोशप्रतीकाशम् हृदयं चाप्यधोमुखम्'¶ 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म'इत्याद्याः,स्मृतयश्च + 'शास्ता विष्णुरशेषस्य जगतो यो जगन्मयः' × 'प्रशासितारं सर्वेषामणीयांसमणीयसां' ÷ 'यमो वैवस्वतो राजा यस्तवैष हृदिस्थितः' इत्याद्याः,अतो मत्त एव सर्वेषां स्मृतिर्जायते;स्मृतिः-पूर्वानुभूतविषयमनुभवसंस्कारमात्रजं ज्ञानम्.ज्ञानम्—इन्द्रियलिङ्गागमयोगजो वस्तुनिश्चयः; सोऽपि मत्तः अपोहनंच,अपोहनं-ज्ञाननिवृत्तिः,अपोहनम्-ऊहनं वा,ऊहनमूहः, ऊहो नामेदं प्रमाणमित्थं प्रवर्तितुमर्हतीति प्रमाणप्रवृत्त्यर्हताविषयं सामग्र्यादिनिरूपणजन्यं प्रमाणानुग्राहकं ज्ञानम् ;सचोहो मत्त एव; वेदैश्च सर्वैरहमेव वेद्यः; अतोऽग्निसूर्यवायुसोमेन्द्रादीनां मदन्तर्यामिकत्वेन मदात्मकत्वात्तत्प्रतिपादनपरैरपि सर्वैर्वेदैरहमेव वेद्यः देवमनुष्यादि-

ता॥नार्थमन्तः प्रविष्टत्वेनात्मत्वेन चेममाहुरित्यर्थः।प्रथमपादोक्तार्थो द्वितीयपादेनोच्यमानार्थे हेतुरित्याह अत इति । सर्वेषां जायत इति चार्थसिद्धकथनम् । श्रुत्युपबृंहणस्मृतिभ्रमव्युदासायाह—स्मृतिरिति । बाह्यविषयानन्वितत्वमतव्युदासायोक्तं—पूर्वानुभूतविषयमिति । प्रत्यभिज्ञानप्रत्यक्षव्यावृत्त्यर्थं मात्रपदम्। गोबलीवर्दन्यायमभिप्रेत्य ज्ञानपदं व्याचष्टे—इन्द्रियलिङ्गेति।'अपोढदोषः' इत्यादिप्रयोगानुसारेणापोहनशब्दस्य निवृत्तिपरत्वम्, निवृत्तेः प्रतियोगिसाकाङ्क्षत्वेन प्रकृतज्ञानप्रतियोगिकत्वं चाभिप्रेत्याह-अपोहनं ज्ञाननिवृत्तिरिति। पूर्वम् 'अप परी वर्जने' इत्यपेत्यस्य वर्जनद्योतकत्वमभिप्रेत्य व्याख्यातम्ः इदानीं तदविवक्षया 'अध्याहारस्तर्क ऊहः' इति कोशानुसारेण ज्ञानपदोक्तप्रमाणज्ञानानुग्राहकतर्कपरत्वमुचितमित्यभिप्रायेण व्याचष्टे—अपोहनमूहनं वेति । ऊहनशब्दश्च भावे ल्युडन्त इत्याशयेनाह—ऊहनमूह इति । इत्थं प्रवर्तितुमर्हतीति—चाक्षुषप्रमा रूपिरूपतदेकाश्रययोग्यचक्षुस्सम्बन्धविषये प्रवर्तितुमर्हतीत्येवमादिरूपप्रमाणप्रवृत्त्यर्हताविषयमित्यर्थः । 'सर्वस्यचाहं हृदि सन्निविष्टः' इत्युक्तसर्वान्तरात्मत्वस्य 'वेदैश्च सर्वैरहमेव वेद्यः'इत्यत्रापि हेतुत्वमाह— अत इति । सर्वैर्वेदैरहमेव वेद्य इति—'नारायणं महाज्ञेयं' 'वचसां वाच्यमुत्तमम्' इत्युक्तप्रधानवेद्योऽहमेवेत्यर्थः । शरीरवाचिशब्दैरात्मन एव प्रधानवेद्यत्वे दृष्टान्तमाह—देवमनुष्यादीति । 'चत्वारः पञ्चदशरात्रा देवत्वं गच्छन्ति' 'वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्। शरीरजैः कर्मदोषैर्याति स्थावरतां नरः' इत्याद्यनन्यथासिद्धवैदिकलौकिकप्रयोगान्मनुष्यादिशब्दानामात्मपर्यन्तत्वं मुख्यमेवेति भावः । वेदान्तशब्दस्योपनिषत्परत्वे वेदनाशपरत्वे प्रकृतासङ्गत्यानुपपत्त्या चान्तशब्दस्य चरमवाचित्वमभिप्रेत्य व्या-

प्र·पा॥ *आरण्यके· ३·प्र ११. अनु· २ पं ॥
† बृ. ५-७ ३. शतपथ· १४-५-७-३० ॥
‡ बृ ५-७-२२ ॥
§ तै. ना· ११ अनु॥ ¶ छा· ८-१-१ ॥
+ वि. पु. १-१७-२० ॥
× मनु. १२-१२२ ॥ ÷ मनु. ७-९२ ॥
१. अष्टा. १-४-८८ ॥ 'अपपरी वर्जने'—एतौवर्जने कर्मप्रवचनीयौ स्तः। अपहरेस्संसारः, परिहरेस्संसारः । अत्र 'पञ्चम्यपाङ्परिभिः' इतिपञ्चमी। एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यादितितत्सूत्रार्थ. । परिरत्र वर्जने । लक्षणादौ तु हरिं परि ॥
२. नामलिङ्गानुशासने. १. काण्डे धीवर्गे ॥
३. पुरुषसूक्ते ॥
४. जितन्तेस्तोत्रे. 'कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् । योगानां परमां सिद्धिं परमं ते पदं विदुः' ॥
५ ॥
६. मनु. १२-९ ॥

शां॥मत्तः आत्मनः सर्वप्राणिनां स्मृतिः ज्ञानं तदपोहनं च;येषां पुण्यकर्मणां पुण्यकर्मानु-

रा॥शब्दैर्जीवात्मेव।वेदान्तकृत्-वेदानाम्*'इन्द्रं यजेत'†'वरुणं यजेत'इत्येवमादीनामन्तः- फलम्;फले हि ते सर्वे वेदाः पर्यवस्यन्ति;अन्तकृत्-फलकृत्वेदोदितफलस्य प्रदाता चाह- मेवेत्यर्थः। तदुक्तं पूर्वमेव ‡'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति' इत्यारभ्य §'लभते च ततः कामान् मयैव विहितान् हि तान्'इति,¶'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति च; वेदविदेवचाहं वेदविच्चाहमेव, एवं मदभिधायिनं वेदमहमेव वेद, इतोऽन्यथा यो वेदार्थं ब्रूते न स वेदविदित्यभिप्रायः ॥ १५ ॥

अतो मत्त एव सर्ववेदानां सारभूतमर्थं शृणु—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६

क्षरश्चाक्षरश्चेति द्वाविमौ पुरुषौ लोके, प्रथितौ। तत्र क्षरशब्दनिर्दिष्टः पुरुषो जीवशब्दाभिलपनीयब्रह्मादिस्तंबपर्यन्तक्षरणस्वभावाचित्संसृष्टसर्वभूतानि; अत्राचित्संसर्गरूपैकोपाधिना पुरुष इत्येकत्वनिर्देशः। अक्षरशब्दनिर्दिष्टः - कूटस्थः,

ता॥चष्टे—वेदानामिति।इन्द्रं यजेतेति—इन्द्रं यजेत वरुणं यजेतेत्येवमर्थवाक्यानामित्यर्थः। ''ऐन्द्रं दध्यमावास्यायाम्''ऐन्द्रं पयोऽमावास्यायां''तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इत्यादीनामितियावत्। अन्तशब्दस्य कथं फलपरत्वमित्यतस्तदुपपादयति - फले हीति। 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इतिवत्। 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यनेन फलितसर्वकर्मसमाराध्यत्वानन्तरं तत्फलप्रदत्वोक्तिस्तैरेव सङ्गतेति सूचयन्फलितमर्थं ससंवादमाह—वेदोदितफलस्येत्यादिना। एवकारस्य यथाश्रुतान्वये अयोगव्यवच्छेदार्थत्वं स्यात्;तच्चायुक्तम्,भगवति वेदवित्त्वायोगस्यायुक्तेः; अतो विशेष्यान्वयमाह- वेदविच्चाहमेवेति। 'येच वेदविदो विप्राः' इति भगवदतिरिक्तानामपि वेदवित्त्वप्रतीतेः—अहमेवेति कथमितरयोगव्यवच्छेद इत्यतस्तदभिप्रायमाह—एवं मदभिधायिनमिति ॥ १५ ॥

सर्ववेदसाररूपपुरुषोत्तमयाथात्म्यप्रतिपादनमुक्तेन सङ्गमयन्नवतारयति—अतो मत्तएवेति। लोक्यतेऽनेनेति व्युत्पत्त्या प्रमाणपरत्वमभिप्रेत्य 'प्रथितः' इत्येतदनुषज्य वचनविपरिणामेन योजयति—लोके प्रथिताविति।प्रमाणञ्च 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इत्यादिकमभिप्रेतम्। पुरुषशब्दनिर्दिष्टात्मनस्स्वरूपेण क्षरत्वायोगाच्छरीरद्वारा तदित्यभिप्रेत्य तृतीयपादं व्याचष्टे—तत्र क्षरशब्दनिर्दिष्ट इत्यादिना। 'क्षरः' इत्येकत्वनिर्देशेन 'भूतानि'इति बहुत्वनिर्देशस्तूपाधिकृत इति शङ्काव्युदासायाह—अत्राचित्संसर्गेति।बद्धात्मनां स्वरूपतो भेदाभावे सर्वदुःखसुखप्रति-

प्र-पा॥ *शतपथ.५-१-६॥ †शतपथ.२-३-३७॥ २॥ ३. यजु. २. का. ३. प्र. १२.
‡गी.७-२१॥ §गी.७-२२॥ ¶गी ९-२४॥ अ. १. पं॥ ४. गी. ९-२४ ॥
१. यजु. २. का. ५. प्र. ४. अ. १. पं॥ ५. भारते. वनप. ८६-२६॥ ६. तै. २. प्र॥

शं॥रोधेन ज्ञानस्मृती भवतः, तथा पापकर्मणां पापकर्मानुरूपेण स्मृतिज्ञानयोः अपोहनं च अपगमनं च। वेदैश्च सर्वैः अहमेव परमात्मा वेद्यः वेदितव्यः। वेदान्तकृत् वेदान्तार्थसम्प्रदायकृत् इत्यर्थः, वेदवित् वेदार्थवित् एव च अहम् ॥ १५ ॥

आ॥श्रुतिः 'स वेदान्तकृत्स कालक इति स ह्येव युक्तिसूत्रकृत्सकालकः' इति ॥ १५ ॥

ज॥युक्तिसूत्रकृत् वेदार्थनिर्णयार्थयुक्तिसूचकवाक्यकृत्। स कालक इति द्वितीयेन कलधातोर्ज्ञानार्थतया प्रसिद्धत्वान्निगदव्याख्यानमेतदित्याचष्टे ॥ १५ ॥

रा॥ अचित्संसर्गवियुक्तः स्वेन रूपेणावस्थितो मुक्तात्मा । स त्वचित्संसर्गाभावादचित्परिणामविशेषब्रह्मादिदेहासाधारणो न भवतीति कूटस्थ इत्युच्यते । अत्राप्येकत्वनिर्देशोऽचिद्वियोगरूपैकोपाधिनाभिहितः। नहीतः पूर्वमनादौ काले मुक्त एकएव। यथोक्तं *'बहवो ज्ञानतपसा पूता मद्भावमागताः'†'सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च'इति॥

ता॥सन्धानं सर्वेषां स्यादिति भावः। कूटस्थशब्दोऽनेकसन्ततिमूलपुरुषे प्रसिद्धः;सचात्र न परमपुरुषः, 'उत्तमः पुरुषस्त्वन्यः' इति तस्य पृथग्वक्ष्यमाणत्वात्। नापि हिरण्यगर्भादिः, तस्य देहसम्बन्धित्वेन क्षरशब्दनिर्दिष्टत्वात्. नापि मुक्तात्मा,रूढ्याद्यविषयत्वादित्यतस्तत्र योगवृत्तिमभिप्रेत्य मुक्तात्मपर इत्याह —अचित्संसर्गवियुक्त इति। योगवृत्तिमुपपादयति—सत्विति। ब्रह्मादिदेहेति—ब्रह्मादिदेहसम्बन्धायत्तविचित्रसुखदुःखाद्यसाधारणाकारो न भवतीत्यर्थः । एतेन 'स्वेन रूपेणाभिनिष्पद्यते' इति श्रुत्युक्तासङ्कुचितज्ञानैकाकारत्वलक्षणसाधारणाकारो भवतीत्युक्तं भवति । तथाच कूटवत्तिष्ठतीति कूटस्थइति व्युत्पत्तिरपि सूचिता। साधारणाकारत्वमेवात्र कूटसादृश्यमिति भावः । अत्राप्येकत्वनिर्देश एकोपाधिक्रोडीकारनिबन्धन एवेत्याह—अत्रापीति। निर्देशः. अभिहित इत्येतत्'पाकं पचति'इति वद्द्रष्टव्यम् । उक्तार्थे हेत्वभिप्रायेण मुक्तात्मबहुत्वं सप्रमाणमाह—पूर्वमनादौ काल इति ॥ १६ ॥

प्र-पा ॥ * गी. ४-१० ॥ † गी. १४-२ ॥ १. छां. ८-१२-२ ॥

शं॥भगवतः ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेपः उक्तः विशिष्टोपाधिकृतः 'यदादित्यगतं तेजः' इत्यादिना। अथ अधुना तस्यैव क्षराक्षरोपाधिप्रविभक्ततया निरुपाधिकस्य केवलस्य तत्त्वनिर्दिधारयिषया उत्तरे श्लोका आरभ्यन्ते । तत्र सर्वमेव अतीतानागताध्यायार्थजातं त्रिधा राशीकृत्य आह—द्वौ इमौ पृथग्राशीकृतौ पुरुषौ इति उच्येते लोके संसारे—क्षरश्च क्षरतीति क्षरः विनाशी इति एको राशिः ; अपरः पुरुषः अक्षरः तद्विपरीतः, भगवतः मायाशक्तिः, क्षराख्यस्य पुरुषस्य उत्पत्तिबीजं, अनेकसंसारिज-

आ॥क्षरभूतानि ब्रह्मादीनि।कूटस्था प्रकृतिः॥ तथाच शार्कराक्षश्रुतिः 'प्रजापतिप्रमुखाः सर्वजीवाः क्षरोऽक्षरः पुरुषो वै प्रधानम् । तदुत्तमं चान्यमुदाहरन्ति जालाजालं मातरिश्वानमेकम्' इति ॥ १६ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये पञ्चदशोऽध्यायः ॥ १५ ॥

---

ज॥क्षराक्षरशब्दौ जडजीवार्थावित्यपव्याख्याननिरासार्थमाह—क्षरेति । भूतग्रहणं युक्तिसूचनार्थम् । नहि जडमात्रे भूतशब्दो रूढः ; किंतु जीवेष्वपि । पुरुषशब्दस्य चैतदुपलक्षणम् । प्रकृतिश्चेतना । अक्षरम्' इति वक्तव्ये 'कूटस्थः' इति वचनमपि युक्तिसूचनार्थमेव। नहि जीवानां कूटस्थत्वमस्ति, सुखादिमत्त्वेन विकारित्वात् । श्रुतिसम्मत्यायमेवार्थ इत्याह—तथा चेति । 'क्षरः' इत्यनुवादेन प्रजापतीत्यादि व्याख्यानम् । अन्यं परमात्मानम् । क्षरान्तर्भूतोऽपि मातरिश्वा विवक्षाविशेषेणाक्षरोऽपि भवतीत्युच्यते। जालेति जालं संसारबन्धः । सोऽस्यास्तीति जालः अर्श आदिभ्योऽच् । तद्रहितश्चाजालः, अभिमानाभावात् ॥ १६ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां पञ्चदशोऽध्यायः ॥ १५ ॥

---

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७

रा॥उत्तमः पुरुषस्तु ताभ्यां क्षराक्षरशब्दनिर्दिष्टाभ्यां बद्धमुक्तपुरुषाभ्यामन्यः-अर्थान्तरभूतः परमात्मेत्युदाहृतस्सर्वासु श्रुतिषु। परमात्मेति निर्देशादेव ह्युत्तमः पुरुषो बद्धमुक्तपुरुषाभ्यामर्थान्तरभूत इत्यवगम्यते;कथं?यो लोकत्रयमाविश्य बिभर्ति-लोक्यत इति लोकः, तत्त्रयं-लोकत्रयम्; अचेतनं तत्संसृष्टश्चेतनो मुक्तश्चेति प्रमाणावगम्यमेतत्त्रयं य आत्मतया आविश्य बिभर्ति, स तस्माद्व्याप्याद्भर्तव्याच्चार्थान्तरभूतः, इतश्चोक्ताल्लोकत्रयादर्थान्तरभूतः;यतस्सोऽव्ययः,ईश्वरश्च;अव्ययस्वभावो हि व्ययस्वभावादचेतनात्तत्संबन्धेन तदनुसारिणश्च चेतनादचित्संबन्धयोग्यतया पूर्वसंबन्धिनो मुक्ताच्चार्थान्तर-

ता॥अप्रात्तत्वादन्यत्वस्य विधेयत्वं वदन् तस्य प्रतियोगिसापेक्षत्वात्प्रकृतक्षराक्षरपुरुषयोरेव प्रतियोगित्वमाह—**उत्तमःपुरुषस्तु ताभ्यामिति**। 'परमात्मेत्युदाहृतः' इत्यस्य विधेयपरत्वासंभवेन अन्यत्वहेतुपरत्वमाह—**सर्वासु श्रुतिषु चेति**।'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः' 'आत्मा नारायणः पर' इत्यादिष्वित्यर्थः । परमात्मेतिनिर्देशहेतुत्वोपपादकत्वेनोत्तरार्धमवतारयति—**कथमिति** । लोकशब्दस्य भुवनपरत्वे लोकत्रयं—भूरादिलोकत्रयं, स्वर्गमर्त्यपाताललक्षणलोकत्रयं वा स्यात्। तथाच तद्व्यापनभरणयोस्सर्वात्मत्वपर्यवसितपरमात्मत्वोपपादकत्वेन क्षराक्षरात्मकसर्वान्यत्वसाधकत्वं न स्यात् । कृतकमकृतकं कृतकाकृतकमिति लोकत्रयपरत्वेऽपि तत्रत्यपुरुषेषु लक्षणा स्वीकार्या;ततो वरं योगवृत्त्याश्रयणमित्यभिप्रेत्य व्याचष्टे—**लोक्यत इति लोक**इत्यादिना। कथमचाक्षुषयोर्बद्धमुक्तयोर्लोकनकर्मत्वमित्यत आह—**प्रमाणावगम्यमेतत्त्रयमिति** । 'यः' इति-'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' 'भर्ता सन् भ्रियमाणो बिभर्ति' इत्यादिकमत्राभिप्रेतम् । **सः** इति-परमात्मेति निर्दिष्ट इत्यर्थः । 'यः' इत्यस्य तत्परत्वात्प्रत्येकं विशेषणानामन्यत्वसाधनसामर्थ्यात्तदर्थस्थितिमात्रविवक्षायामत्रानपेक्षितोक्त्या पदान्तरवैयर्थ्यादित्यभिप्रायेणाह-**इतश्चेति**।अत्रावेशभरणेश्वरत्वानां कर्मकर्तृभावेन अन्यत्वोपस्थापकत्वम्, अव्ययत्वस्य तु साक्षात्स्वभावविरोधादित्यभिप्रायेणाह—**अव्ययस्वभावो हीति** । एवमवान्तरवैषम्यं दर्शयिष्यति 'अव्ययस्वभावतया व्यापनभरणैश्वर्यादियोगेनच' इति । **तत्संबन्धेन तदनुसारिणइति**—तदधीनजन्मविनाशादिक्लेशभाज इत्यर्थः । तद्वज्ज्ञानसङ्कोचविकासलक्षणविकारयोगिन इति वा । योग्यता नाम, सहकारिसन्निधौ कुर्वत्स्वभावत्वं, सहकार्यभावप्रयुक्तकार्याभाववत्त्वं वा। सा च मुक्तस्याप्यस्तीति स्वभावविरोधस्तत्राप्यविशिष्ट इत्याह—**अचित्संबन्धयोग्यतया पूर्वसंबन्धिन इति** । अनवच्छिन्नात्मव्ययत्वं मुक्तस्यापि नास्तीति भावः। ईश्वरशब्दोऽत्र नानुपयुक्तसंज्ञामात्ररूप

प्र-पा ॥ १. पुरुषसूक्ते ॥ २. आरण्यके. ३. प्र. ११. अ ॥ ३. आरण्यके. ३. प्र. १४. अ ॥ ४. गी. भा. १९ ॥

शा॥न्तुकामकर्मादिसंस्काराश्रयः, अक्षरः पुरुषः उच्यते।कौ तौ पुरुषौ इति ? आह स्वयमेव भगवान्—क्षरःसर्वाणि भूतानि, समस्तं विकारजातं इत्यर्थः। कूटस्थः कूटः राशिरिव स्थितः । अथवा कूटः माया वञ्चना जिह्मता कुटिलता इति पर्यायाः, अनेकमायावञ्चनादिप्रकारेण स्थितः कूटस्थः, संसारबीजानन्त्यात् न क्षरति इति अक्षरः उच्यते॥ आभ्यां क्षराक्षराभ्यां अन्यः विलक्षणः क्षराक्षरोपाधिद्वयदोषेण अस्पृष्टः नित्यशु-

रा॥भूत एव; तथैतस्य लोकत्रयस्येश्वरः, ईशितव्यात्तस्मादर्थान्तरभूतः ॥ १७ ॥

**यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥** १८

'यस्मादेवमुक्तैस्स्वभावैः क्षरं पुरुषमतीतोऽहं' अक्षरान्मुक्तादप्युक्तैर्हेतुभिरुत्कृष्टतमः, अतोऽहं लोके वेदे च पुरुषोत्तम इति प्रथितोऽस्मि।वेदार्थावलोकनाल्लोक इति स्मृ-

ता॥इत्यभिप्रायेणाह—**तथैतस्येति**।अत्रात्मलक्षणान्तर्गतानुप्रवेशधारणनियमनानां कण्ठोक्तौ स्वार्थधारणादिवशादेव शेषित्वमपि सिध्यतीत्यभिप्रायेण संग्रहश्लोके स्वाम्योक्तिः । तथाच तत्र नियन्तृत्वमुपलक्षणीयम्।एवम् 'अव्ययत्वव्यापनभरणस्वाम्यैः'इत्यनन्तराध्यायारम्भभाष्येऽपि द्रष्टव्यम्।यद्वा केवलनियन्तृत्वादिविशिष्टेष्वपीश्वरशब्दस्य प्रयुक्तचरत्वाभावात्स्वाम्योपश्लिष्टनियमनवेषे च निरूढप्रयोगत्वादीश्वरशब्देनैव शेषित्वमप्युपस्थापितम्।अपिचात्र 'यः' इति व्यासयाथात्म्यानुवादे 'मयि सर्वमिदं प्रोतम्'इत्यादिपुरोवादपरामर्शात्तत्प्रकरणे 'भूमिरापः' इत्यादिनोक्तं शेषित्वमप्याकृष्यत इति 'पतिं विश्वस्यात्मेश्वरम्' इति पतिशब्दस्थाने चेश्वरशब्दः प्रयुक्त इति भावः ॥ १७ ॥

एवं प्रतिज्ञातमन्यत्वं श्रुतिस्मृतिप्रसिद्धधात्वर्थया समाख्यया स्थापितम्। तदेव पुनस्तथाभूतसमाख्यान्तरेण 'उत्तमः पुरुषः'इत्यनुवादस्मारितेन स्थिरीक्रियते'यस्मात्' इतिश्लोकेन।एतेन पूर्वश्लोके परात्त्वनिर्देशोऽपि स्वविषय एवेति दर्शितम्।अत्र यतोऽसावग्निमान्,अतएव धूमवान्'इत्यादिवत्साध्यमेव साधकं प्रति नियामकतया हेतुर्व्यपदिश्यते। तच्च साध्यं सहेतुकमिह समाख्यानिदानमित्यभिप्रायेणाह-**यस्मादेवमुक्तैस्स्वभावैरिति**। 'क्षरमतीतः' इति तत्स्वभावगन्धानाघ्रातत्वमुच्यते।अत्रापि क्षरशब्दः प्रस्तुतैकार्थ्यान्न प्रधानविषय इत्याह—**क्षरं पुरुषमिति** । अक्षरशब्दस्य प्रधानेश्वरादिष्वपि प्रयोगात्तद्व्यवच्छेदाय 'कूटस्थोऽक्षरः'इत्युक्तैकार्थ्यमाह—**अक्षरान्मुक्तादिति** । एतेन पुरुषोत्तमशब्दनिरुक्तिरप्यत्र दर्शिता । **उक्तैर्हेतुभिरिति**—'षष्ठी हेतुप्रयोगे'इति नियमस्य प्रयोजनरूपहेतुविषयतयैव प्रयोगप्राचुर्यान्न तृतीयानुपपत्तिः । उत्तमशब्दे प्रकृतिप्रत्ययभेदेन विवक्षितमाह—**उत्कृष्टतमइति** । मुक्तो हि बद्धादुत्कृष्टः ; ततोऽप्यसौ सर्वान्तरात्मत्वादिभिरुक्तैर्हेतुभिरुत्कृष्टतमः । प्रथितशब्देन केवलप्रथनविधेः प्रकृतानन्वयात्सविशेषणोऽसौ विशेषणोपसंक्रामीत्यभिप्रायेण-**पुरुषोत्तमइतीति** इतिकरणम्।नात्र लोकशब्दो भुवनविषयः, जनविषयोवा,तत्र प्रकृतनिरुक्तिविवक्षाप्रमाणत्वासंभवात्। नच काव्यादिप्रयोगपरता, तत्राप्यतितरां स्वारस्याभावात् । अतो वेदसहपाठात्तदनुवर्तिस्मृतिपरोऽयम् । तत्र च लोक्यते-

प्र-पा॥ १. गी. भा. १६-अ-१-श्लो. अव॥ २. गी-७-७॥ ३.गी. ७-४॥ ४.पुरुषसूक्ते॥ ५ अष्टा. २-३-२६. 'षष्ठी हेतुप्रयोगे'हेतुशब्दप्रयोगे हेतौद्योत्ये षष्ठी स्यात्।अन्नस्य हेतोर्वसति॥

शं॥द्धबुद्धमुक्तस्वभावः उत्तमः उत्कृष्टतमः पुरुषस्तु अन्यः अत्यन्तविलक्षणः आभ्यां परमात्मा इति परमश्च असौ देहाद्यविद्याकृतात्मभ्यः, आत्मा च सर्वभूतानां प्रत्यक्चेतनः, इत्यतः परमात्मा इति उदाहृतः उक्तः वेदान्तेषु । स एव विशिष्यते—यः लोकत्रयं भूर्भुवस्स्वराख्यं स्वकीयया बलशक्त्या आविश्य प्रविश्य बिभर्ति स्वरूपसद्भावमात्रेण बिभर्ति धारयति अव्ययः न अस्य व्ययः विद्यते इति अव्ययः. कः? ईश्वरः सर्वज्ञः नारायणाख्यः ईशनशीलः ॥ १७ ॥

यथाव्याख्यातस्य ईश्वरस्य "पुरुषोत्तमः" इत्येतत् नाम प्रसिद्धम् । तस्य नामनिर्वचनप्रसिद्ध्या अर्थवत्त्वं नाम्नो दर्शयन् "निरतिशयः अहं ईश्वरः' इति आत्मानं दर्श-

**रा॥तिरिहोच्यते।श्रुतौ स्मृतौ चेत्यर्थः;श्रुतौ तावत् *'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इत्यादौ; स्मृतावपि †'अंशावतारं पुरुषोत्तमस्य ह्यनादिम-**

**ता॥**ऽनेन वेदार्थ इति व्युत्पत्त्या वृत्तिरित्यभिप्रायेणाह-**वेदार्थावलोकनादिति।श्रुतौ स्मृतौ चेत्यर्थ** इति—अयमभिप्रायः-श्रूयते नित्यमिति हि श्रुतिः। अतो वक्तृदोषप्रसङ्गाभावादशिथिलसम्प्रदायत्वाच्च तदुक्तं तावत्प्रामाणिकमेव। स्मृतिरप्यल्पश्रुतैर्दुरवबोधसकलशाखानुगतमर्थं सङ्कलय्योपबृंहयन्ती परमाप्ततममन्वादिप्रणीता प्रमाणमेवेति तया वेदार्थावलोकनं युक्तम् इति। '¹परं ज्योतिरुपसम्पद्य' इति मुक्तोपसम्पत्तव्यतया निर्दिष्टो निरतिशयदीप्तियुक्तः पुरुष एवात्र '²स उत्तमः पुरुषः' इति परामृश्य विशेष्यते,तदुपबृंहणाय हि 'उत्तमः पुरुषस्त्वन्यः' इति तत्तुल्यव्यस्तप्रयोगोऽयं प्रदर्शित इत्यभिप्रायेण 'परं ज्योतिः'इत्यादिवाक्योदाहरणम्।अत्र'प्रथितः पुरुषोत्तमः'इत्युक्तसमस्तप्रयोगप्रदर्शनार्थतयां '³अंशावतारं पुरुषोत्तमस्य'इतिस्मृत्युदाहृतिः।अत्र'विष्णोः'इति संज्ञानिर्देशेऽपि'पुरुषोत्तमस्य इति विशेषणैकार्थ्यस्य विवक्षितत्वाद्योगरूढोऽयं शब्द इति सिद्धम्।एतेन '⁴रूढ्यातु कामं पुरुषोत्तमोऽस्तु'इति प्रलपन् वेदबाह्यः प्रत्युक्तः। ननु कथं यौगिकार्थविवक्षायामस्य साधुता, न तावदसौ समानाधिकरणसमासः '⁵सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः'इति प्रथमानिर्दिष्टस्योत्तमशब्दस्योपसर्जनतया पूर्वनिपातापातात्। नापि व्यधिकरणः। उत्तमः पुरुष इवेत्युपमितविवक्षानुपपत्तेः : तदर्थतयोदाहृतायां श्रुतावपि वैयधिकरण्यादर्शनात्।नचासौ षष्ठीसमासः,निर्धारणे तन्निषेधात्।नचान्यस्यापीह सम्भव इति। मैवं षष्ठीसमासस्यैवात्र युक्तत्वात्;नहि वयमत्र निर्धारणार्थतां ब्रूमः।पुत्रादिवत्सम्बन्धिशब्दो ह्यसौ।अधमादिसापेक्षं ह्युत्तमत्वम्। इदञ्च सूचितम्-**उक्तैर्हेतुभिरुत्कृष्टतम** इति जातिगुणाद्यसम्बन्धिशब्देषु हि निर्धारणे षष्ठी।सम्बन्धसामान्यविहिताच षष्ठी तत्तत्सम्बन्धिशब्दसमभिव्याहारानुरोधेन तत्सम्बन्धविशेषं प्रतिपादयति। एवमेव हि नागोत्तमादिशब्दानां साधुत्वं वैयाकरणैर्व्याख्यातम्। अत्र च 'उत्तमःपुरुषस्त्वन्यः' 'क्षरमतीतोऽहमक्षरादपि चोत्तमः' इति चार्थकथनमात्रं, नतु तत्समासांशद्वयविवक्षा। एवमेव '²स उत्तमः पुरुषः' इति श्रुत्युदाहरणमपि। केचित्तु पञ्चमीसमासं व्याकुर्वते। नचोत्तमशब्दयोगे पञ्चमी न शिष्टेति वाच्यं;यथा'⁶यस्मादधिकम्'इत्यादिसौत्रप्रयोगादशिष्टस्यापि परिग्रहः;'एवमक्षरादपि चोत्तमः' इत्यादिप्रयोगवलादेव तत्परिग्रहोपपत्तेः।इदमपि सूचितम् **मुक्तादप्युक्तैर्हेतुभिरुत्कृष्टतम** इति।योगविभागाच्च पञ्चम्या उत्तमादिशब्दैस्समासोऽप्यनुशिष्टएव। एवं सप्तमीसमासत्वेऽपि न दोषः, शौ-

**प्र-पा॥** * १. छां. ८-१२-२॥

२. छां ८-१२-३ ॥

† ३. वि पु- ५-१७-३३॥ ४॥

५. अष्टा. २ १-६१ ॥ 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः'—सद्वैद्यः। महावैयाकरणः। अत्र 'आन्महतः' इति वक्ष्यमाणेन महत आकारः। पूज्यमानैः किम्। उत्कृष्टो गौः। पङ्कादुद्धृत इत्यर्थः॥

६. अष्टा. २-३ ९॥ 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी'—अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात्। उप परार्धे हरेर्गुणाः। परार्धादधिका इत्यर्थः। ऐश्वर्येतु स्वस्वामिभ्यां पर्यायेण सप्तमी।अधि भुवि रामः। अधि रामे भूः।'सप्तमी शौण्डैः'इति समासपक्षेतु रामाधीना:।'अषडक्ष'इत्यादिनाखः।'अषडक्षाशितङ्ग्वलङ्कर्मालंपुरुषाध्युत्तरपदात्खः' स्वार्थे।अषडक्षीणो मन्त्रः। द्वाभ्यामेव कृत इत्यर्थः। आशिता गावोऽस्मिन्नित्याशितङ्गवीनमरण्यम्। निपातनात्पूर्वस्य मुम्। अलं कर्मणे अलंकर्मीणः। अलंपुरुषीणः। ईश्वराधीनः। नित्योऽयं खः, उत्तरसूत्रे विभाषाग्रहणात्॥

**शं॥यति भगवान् यस्मात् क्षरम् अतीतः अहं संसारमायावृक्षम् अश्वत्थाख्यम्, अक्षरादपि संसारमायावृक्षबीजभूतादपि च उत्तमः उत्कृष्टतमः ऊर्ध्वतमो वा,अतः ताभ्यां क्षरा-**

रा॥ध्यान्तमजस्य विष्णोः' इत्यादौ ॥ १८ ॥

**यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥** १९

**य एवम्-उक्तेन प्रकारेण पुरुषोत्तमं मामसम्मूढो जानाति-क्षराक्षरपुरुषाभ्यामव्यय-**

---

**त॥**ण्डादिष्वपठितत्वेऽपि तत्रापि योगविभागाभ्यनुज्ञानादेव तदुपपत्तेः।एतत्सर्वं विजानद्भिर्महाकविभिरपि विवक्षितयोग एवायं प्रयुज्यते प्रतिपाद्यतेच।तथादिकाव्ये '[1]नच तेन विना निद्रां लभते पुरुषोत्तमः' इति । तदेतत्सर्वमभिसन्धाय भगवद्यामुनमुनिभिरुक्तं स्तोत्रे '[2]कैः पुण्डरीकनयनः पुरुषोत्तमः कः' इति ॥ १८ ॥

एवं पुरुषोत्तमशब्दनिर्वचनं तथानुचिन्तनार्थमिति व्यञ्जयन् पुरुषोत्तमत्ववेदनं स्तौति—**'यो मामेवम्'** इति श्लोकेन । पुरुषोत्तमत्वेन जानातीति विवक्षायामसम्मूढपदनैरर्थक्यम् । अतएव 'पुरुषोत्तमं...माम्' इत्यर्थस्थितिं निर्दिश्य तत्र यथावज्ज्ञानम्-'असम्मूढो जानाति'इत्युच्यते।तदाह—**य एवमुक्ते**नेति। एकीकृत्य मोहरहितत्वमसम्मूढत्वम् । तच्च पूर्वोक्तस्वप्रकारान्यत्वानुसन्धानादित्याह—**क्षराक्षरे**ति। एवमसम्मूढशब्देन पराभिमतजीवेश्वरैक्यवेदनस्य भ्रान्तिरूपत्वं प्रकृतिपुरुषेश्वरभेदस्य पारमार्थिकत्वं च व्यञ्जितम्। स सर्ववित्'इत्यत्र पुरुषोत्तमशब्दार्थवेदनेनाष्टादशविद्यास्थानादिवेदनासिद्धेरत्र चान-

---

**प्र-पा॥**१. श्रीरामायणे-बालकाण्डे १८ स. २९-३०.श्लो॥'नच तेन...पुरुषोत्तमः।मृष्टमन्नमुपानीतमश्नाति नच तं विना'॥रामस्य लक्ष्मणे अनुरागं दर्शयति-नचेति ॥ तेन विना 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' इति तृतीया । निद्रां नलभते—प्राणं विना कथं निद्रां लभेतेत्यर्थः। किं च—कौसल्यया आनीतं मृष्टान्नं तं विना नाश्नाति । दक्षिणबाहुं विना कथमश्नातीति भावः। पुरुषोत्तमः प्रेमशालिविषये सर्वात्मना विश्लेषासह इत्यर्थः।'क्षणेऽपि तेयद्विरहोऽतिदुस्सहः' इत्युक्तम् ॥

२. स्तोत्ररत्ने. १२ श्लो ॥ 'कः श्रीश्श्रियः परमसत्त्वसमाश्रयः कः कः पुण्डरीकनयनः पुरुषोत्तमः कः। कस्यायुतायुतशतैककलांशकांशे विश्वं विचित्रचिदचित्प्रविभागवृत्तम्'॥ पूर्वोक्तमेव लिङ्गान्तरैर्द्रढयति-कइति॥ अत्र त्वदन्यइति वक्ष्यमाणस्यानुषङ्गः कार्यः ; त्वदन्यः त्वत्त इतरः. श्रियः व्युत्पत्तिषट्केन चेतनाननुगृह्णानायाः भवन्तं श्रितायाश्च लक्ष्म्याः, श्रीः श्रयणीयः 'श्रियः श्रीश्च भवेत्'इति दर्शितः, कः पुरुषसूक्ते परमात्मभूतो भवानेवहि'ह्रीश्चते लक्ष्मीश्च पत्न्यौ'इतिनिर्दिश्यते, परमस्य अनवधिकातिशयस्य सत्त्वस्य समाश्रयः अवलम्बः 'महान्प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः'इति निर्दिष्टः, कः पुण्डरीकनयनः पुण्डरीके इव नयने यस्यसः'तस्य यथाकप्यासं पुण्डरीकमेवमक्षिणी'इति निर्दिष्टः कः, पुरुषाभ्यां बद्धमुक्तजीवाभ्याम् उत्तमः 'यस्मात्क्षरमतीतोऽहमक्षरादपिचोत्तमः । अतोऽस्मि लोके वेदेच प्रथितः पुरुषोत्तमः' इत्यादिना गीयमानमहिमा कः, विचित्रयोः चिदचितोः विलक्षणलक्षणतया विस्मयावहयोः चेतनाचेतनयोः प्रविभागेन व्यवस्थया वृत्तं निष्पन्नं विश्वं जगत् कस्य भवतोऽन्यस्य अयुतायुतशतैककलांशकांशे अयुतायुतशतस्य अपरिच्छिन्नस्य महिम्नः एककलायाः एकस्यांशस्य अंशकस्य अल्पावयवस्यापि अंशे (व्यवस्थितं) 'यस्यायुतायुतांशांशे' इति भाष्यम् ॥

---

**शा॥**क्षराभ्यां उत्तमत्वात् अस्मि भवामि लोके वेदे च प्रथितः प्रख्यातः।पुरुषोत्तमः इत्येवं मां जना विदुः, कवयः काव्यादिषु च इदं नाम निबध्नन्ति ॥ १८ ॥

**अथ इदानीं यथानिरुक्तं आत्मानं यो वेद,तस्य इदं फलम् उच्यते-यः माम् ईश्वरं यथोक्तविशेषणं एवं यथोक्तेन प्रकारेण असंमूढः संमोहवर्जितः सन् जानाति'अयम् अहम्**

रा॥स्वभावतया व्यापनभरणैश्वर्यादियोगेन च विसजातीयं जानाति,स सर्ववित् मत्प्राप्त्युपायतया यद्वेदितव्यं तत्सर्वं वेद। भजति मां सर्वभावेन-येच मत्प्राप्त्युपायतया मद्भजनप्रकारा निर्दिष्टास्तैश्च सर्वैर्भजनप्रकारैर्मां भजते, सर्वैर्मद्विषयैर्वेदनैर्मम या प्रीतिर्या च मम सर्वैर्मद्विषयैर्भजनैः; उभयविधा सा प्रीतिरनेन वेदनेन मम जायते ॥ १९ ॥

इत्येतत्पुरुषोत्तमत्ववेदनं पूजयति—

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २०

ॐ तत्सदिति.

इति श्रीमद्भगवद्गीतासूपनिषत्सु परब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
पुराणपुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥
श्रीकृष्णाय परब्रह्मणे नमः.

---

इत्थं मम पुरुषोत्तमत्वप्रतिपादनं सर्वेषां गुह्यानां गुह्यतममिदं शास्त्रं त्वमनघत-

ता॥पेक्षितकेशकीटादिसङ्ख्यावेदनेन स्तुत्यसम्भवात् तस्य भजति मां सर्वभावेन'इत्यत्र'मन्दप्रयोजनत्वाच भजनानुष्ठानोपयोगिविषयतया नियच्छति-मत्प्राप्त्युपायतयेति।भजनक्रियावशीकृतस्सर्वभावशब्दो भजनावान्तरभेदतया प्राक्प्रपञ्चितकीर्तनयतनादिप्रकारपरः । 'वासुदेवस्सर्वम्' इत्याद्यर्थविवक्षातोऽप्ययमेवार्थः स्तुत्युपयोगातिशयादिहोपादेय इत्यभिप्रायेणाह—ये चेति । भावशब्दोऽत्र क्रियावाची पदार्थमात्रवाची वा सत्प्रकाराख्यविशेषे विश्रान्तः । नन्वत्र तत्त्वहितवेदनं हितानुष्ठानञ्च शास्त्रफलं विवक्षितम् । तत्र नतावत्पुरुषोत्तमत्ववेदनमेव परव्यूहविभवगुणचेष्टितादिसर्ववेदनं सर्वविधभजनकरणञ्च स्वरूपान्यथात्वात् । नचारोप्य स्तुतिः, अनूर्जितत्वान्निष्फलत्वाच्च। नचात्र हेतुफलभावविवक्षा, 'एतद्बुध्वा बुद्धिमान् स्यात्'इत्यनन्तरेण पौनरुक्त्यात् अतो निरर्थकमिदमित्यत्राह-सर्वैर्मद्विषयैरिति॥

यदि पुरुषोत्तमत्ववेदनमात्रेण भगवतस्सर्वविधा प्रीतिर्जायते, तर्हि भजनाद्यनुष्ठानविधिवैयर्थ्यं : तत्राह—इत्येतदिति । सर्वासां प्रतीतीनामेतदेव हि मूलकारणम् । फलसाम्याद्वा सर्वस्य विदितत्वकृतकृत्यत्ववचनमिति भावः । इत्येतदित्यादिकमुत्तरश्लोकावतारिका वा । रहस्यतया गोपनीयतमत्वं पारमार्थिकत्वं फलप्रकर्षञ्च व्यञ्जयन्निगमयति—'इति गुह्य'इति श्लोकेन। एतदेव गीताशास्त्रनिगमनमिति वदतां प्रतिक्षेपायाह—पुरुषोत्तमत्वप्रतिपादनमिति । पञ्चदशेऽध्याय इत्यर्थः । 'अनघ'इति सम्बु-

प्र-पा ॥ १. गी. ७ ॥

शं॥अस्मि' इति पुरुषोत्तमं,सः सर्ववित् सर्वं वेत्तीति भजति मां सर्वभावेन सर्वात्मतया हे भारत ॥ १९ ॥

अस्मिन् अध्याये भगवत्तत्त्वज्ञानं मोक्षफलम् उक्त्वा, अथ इदानीं तत् स्तौति—इति एतत् गुह्यतमं गोप्यतमम्, अत्यन्तरहस्यम् इत्येतत् किं तत्? शास्त्रम् । यद्यपि गीताख्यं समस्तं "शास्त्रं" उच्यते: तथापि अयमेव अध्यायः इह 'शास्त्रं' इति उच्यते स्तुत्यर्थं, प्रकरणात्। सर्वो हि गीताशास्त्रार्थः अस्मिन् अध्याये समासेन उक्तः। न केवलं गीताशास्त्रार्थ एव, किन्तु सर्वश्च वेदार्थः इह परिसमाप्तः । 'यः तं वेद सः

**रा॥या योग्यतम इति कृत्वा मया तवोक्तम्। एतद्बुद्ध्वा बुद्धिमांस्यात्कृतकृत्यश्च-मां प्रेप्सुना उपादेया या बुद्धिस्सा सर्वा उपात्ता स्यात्। यच्च तेन कर्तव्यम्, तत्सर्वं कृतं स्यादित्यर्थः। अनेन श्लोकेनानन्तरोक्तं पुरुषोत्तमविषयं ज्ञानं शास्त्रजन्यमेवैतत्सर्वं**

---

ता॥द्धिरधिकारिसूचनार्थेत्याह—**अनघतया योग्यतम इति कृत्वे**ति।एवं भारतसम्बुद्धिरपि जन्मतोऽधिकारित्वसूचनार्थम्। **इद**मिति—अस्य 'वक्ता श्रोता च दुर्लभः' इत्यभिप्रायः। **इदं**—शास्त्रान्तरेभ्य उत्कृष्टतममिति वा। उक्तं चाभियुक्तैः 'यस्मिन् प्रसादसुमुखे कवयोऽपि ते ते शास्त्राण्यशासुरिह तन्महिमाश्रयाणि। कृष्णेन तेन यदिह स्वयमेव गीतं शास्त्रस्य तस्य सदृशं किमिहास्ति शास्त्रम्' इति। **मया**—वक्तव्यतत्त्ववेदिना, त्वदधिकारवेदिना, तव सख्याचेत्यर्थः। प्रागुक्तशास्त्रानुवादताभ्रमव्युदासायाह—**तवोक्त**मिति। '[2]सा विद्या या विमुक्तये' '[2]विद्यान्या शिल्पनैपुणम्' '[3]तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्' 'एतज्ज्ञानमिति प्रोक्तम् अज्ञानं यदतोऽन्यथा' इत्यादिभिरन्यासां बुद्धीनाम् अबुद्धिप्रायतोक्तेरिह बुद्धिशब्दविवक्षितमाह—**मां प्रेप्सुनोपादे**येति। कृत्यशब्दोऽप्यत्र मुमुक्ष्वपेक्षितविषयः। तस्यैव '[2]तत्कर्म यन्न बन्धाय' इत्यादिषु ग्रहणात्, अन्येषाञ्च '[2]आयासायापरं कर्म' इति निन्दनादित्यभिप्रायेणाह—**यच्च तेन कर्तव्य**मिति। प्रस्तुतोऽर्थस्तज्ज्ञानं वात्र प्रशंसनीयम्, किमत्र शास्त्रग्रहणेन? तथात्र पूर्वश्लोकपौनरुक्त्यमित्यत्राह—**अनेन श्लोके**नेति। अयमभिप्रायः—सार्थकशास्त्रज्ञानशक्त्या 'एतद्बुद्ध्वा' इत्यनूद्यते; अतोऽर्थज्ञान एव तात्पर्यं, तत्र शास्त्रशब्दग्रहणं शास्त्रमात्रजन्यस्यापि ज्ञानस्य फलाविनाभावापेक्षयेति। स सर्ववित्' इत्यादेः 'बुद्धिमान्स्यात्' इत्यादेश्च अर्थैक्यमभिसन्धाय पुनरुक्तिपरि-

---

**प्र-पा** ॥ १ ॥

२. वि. पु. १. अं. १९. अ. ४१. श्लो ॥ प्रह्लादचरिते-'तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये। आयासायापरं कर्म विद्यान्या शिल्पनैपुणम्'॥अस्यार्थः श्रीविष्णुचित्तार्यैरभिहितः—'का तर्हि विद्येत्यत्राह—तत्कर्मेति॥या विद्या विमुक्तये, सा विद्या। अर्थशास्त्रादिविद्या शिल्पनैपुणम्।तत् कर्म,यत् न बन्धाय,अपितु-विद्याङ्गत्वेन मोक्षाय। अपरं कर्म प्रवृत्तिकर्म' इति ॥

३. वि. पु. ६. अं. ५. अ. ८७. श्लो॥ परविद्यायाम् 'संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम्। सन्दृश्यते वाप्यधिगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्'॥अस्यार्थः श्रुतप्रकाशिकाकारैरभिहितः (पुराणघट्टे)—'अस्तदोषं विकाररूपदोषरहितम्, अनेन प्रकृतिव्यावृत्तिः। शुद्धं कर्मवश्यत्वाशुद्धिरहितम्, अनेन कर्मवश्याशुद्धबद्धजीवव्यावृत्तिः। परं निर्मलं मलसंबन्धाहित्वरूपदोषरहितम्, अनेन मुक्तव्यावृत्तिः। एकरूपं समाभ्यधिकराहितम्, अनेन नित्यसिद्धव्यावृत्तिः। एवंविधं परं ब्रह्म येन आगमोत्थेन ज्ञानेन ज्ञायते,येन साक्षात्कारलक्षणेन ज्ञानेन संदृश्यते, येन परमभक्तिदशापन्नेन ज्ञानेन प्राप्यते, तत् ज्ञानं तदेव ज्ञानशब्दाभिधेयम्, ततोऽन्यदज्ञानमित्यर्थः,'स ज्ञायते'इति पाठे अयमर्थः—सः ईश्वरः येन तत्तद्दशापन्नेन ज्ञानेन ज्ञायते साक्षात्क्रियते गम्यते, तत् ज्ञानम् अस्तदोषं शुद्धं परं निर्मलम् एकरूपम्, तत् ज्ञानम्, अतोऽन्यत् अज्ञानम् इति वाक्यभेदेन योजनीयम्। 'अर्थेनैव विशेषोहि निराकारतया धियाम्' इतिन्यायात् ज्ञानस्य अस्तदोषत्वादिकं विषयविशेषकृतम्' इति ॥

---

**शं॥वेदवित्' 'वेदैश्च सर्वैरहमेव वेद्यः' इति च उक्तम्। इदम् उक्तं कथितं मया हे अनघ अपाप एतत् शास्त्रं यथादर्शितार्थं बुद्ध्वा बुद्धिमान् स्यात् भवेत् न अन्यथा कृतकृत्यश्च भारत कृतं कृत्यं कर्तव्यं येन सः कृतकृत्यः; विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत् कर्तव्यं तत् सर्वं भगवत्तत्त्वे विदिते कृतं भवेत् इत्यर्थः; न च अन्यथा कर्तव्यं परिसमाप्यते कस्यचित् इत्यभिप्रायः। 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति च**

रा॥करोति; नतु साक्षात्काररूपमित्युच्यते ॥ २० ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीमते रामानुजाय नमः.

---

ता॥हारश्चात्र कृतः। भारत एतद्बुद्ध्वा त्वमपि कृतकृत्य इतिच भावः ॥ २० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥

---

शं॥उक्तम् 'एतद्धि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः।प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा' इति च मानवं वचनम्। यतः एतत् परमार्थतत्त्वं मत्तः श्रुतवान् असि, अतः कृतार्थः त्वं भारत इति ॥ २० ॥

इति श्रीपरमहंसपरिव्राजकाचार्य गोविन्दभगवत्पूज्यपादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ श्रीमद्गीताभाष्ये पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीः

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः.



अचिन्मिश्राद्विशुद्धाच्च चेतनात्पुरुषोत्तमः ।
व्यापनाद्भरणात्स्वाम्यादन्यः पञ्चदशोदितः ॥ १९ ॥

श्रीमद्यामुनमुनये नमः.



---

श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा.

अत्र 'अचिन्मिश्राद्विशुद्धाच्च'इत्यस्य सूचनीयां सङ्गतिं विवृण्वन् क्षराक्षरशब्दव्याख्यानतां व्यनक्ति 'क्षेत्राध्याये क्षेत्रक्षेत्रज्ञभूतयोः प्रकृतिपुरुषयोस्स्वरूपं विशोध्य विशुद्धस्यापरिच्छिन्नज्ञानैकाकारस्यैव पुरुषस्य प्राकृतगुणसङ्गप्रवाहनिमित्तो देवाद्याकारपरिणतप्रकृतिसम्बन्धोऽनादिरित्युक्तम् । अनन्तरे चाध्याये पुरुषस्य कार्यकारणोभयावस्थप्रकृतिसम्बन्धो गुणसङ्गमूलो भगवतैव कृत इत्युक्त्वा गुणसङ्गप्रकारं सविस्तरं प्रतिपाद्य गुणसङ्गनिवृत्तिपूर्वकात्मयाथात्म्यावाप्तिश्च भगवद्भक्तिमूलेत्युक्तम् । इदानीं भजनीयस्य भगवतः क्षराक्षरात्मकबद्धमुक्तविभूतिमत्तां विभूतिभूतात्क्षराक्षरपुरुषद्वयान्निखिलहेयप्रत्यनीककल्याणैकतानतयात्यन्तोत्कर्षेण विसजातीयस्य भगवतः पुरुषोत्तमत्वं वक्तुमारभते'इति । अत्र व्यापनभरणस्वाम्यानि—'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' इति प्रतिपादितानि । एवं प्राधान्यतश्चिदचिदीश्वररूपतत्त्वत्रयविशोधनं क्रमादध्यायत्रयेण कृतमित्यनुसन्धेयम् ॥ १९ ॥

श्रीमते निगमान्तमहादेशिकाय नमः.



# श्रीमद्भगवद्गीता

## षोडशोऽध्यायः.



रा॥अतीतेनाध्यायत्रयेण प्रकृतिपुरुषयोर्विविक्तयोस्संसृष्टयोश्च याथात्म्यं तत्संसर्गवियोगयोश्च गुणसङ्गतद्विपर्ययहेतुकत्वं, सर्वप्रकारेणावस्थितयोः प्रकृतिपुरुषयोर्भगवद्विभूतित्वं, विभूतिमतो भगवतो विभूतिभूतादचिद्वस्तुनश्चिद्वस्तुनश्च बद्धमुक्तोभयरूपादव्ययत्वव्यापनभरणस्वाम्यैरर्थान्तरतया पुरुषोत्तमत्वेन याथात्म्यंच वर्णितम्; अनन्तरमुक्तस्य कृत्स्नस्यार्थस्य स्थेम्ने शास्त्रवश्यतां वक्तुं शास्त्रवश्यतद्विपरीतयोर्दैवासुरसर्गयोर्विभागं श्रीभगवानुवाच—

---

**ता॥**तृतीयषट्कस्य त्रिकभेदादिप्रकारः प्रागेवास्माभिः प्रपञ्चितः । तत्र त्रिकभेदं प्रदर्श्य त्रिभिस्सङ्गततया षोडशमवतारयितुं तत्त्वत्रयविशोधनपरस्य त्रयोदशादित्रिकस्यार्थं क्रमादनुवदति —**अतीतेनाध्यायत्रयेणे**ति । गुणसङ्गतद्विपर्ययहेतुकत्वमिति पाठः । कप्रत्ययप्रयोगाभावेऽप्यत्र बहुव्रीहित्वमेवेति । '[1]इति गुह्यतमं शास्त्रम्' इति पूर्वाध्यायान्ते शास्त्रमुपक्षिप्तम् । अनघभारतशब्दाभ्याञ्च तदधिकारी सूचितः । सएवहि '[2]मा शुचस्सम्पदं दैवीमभिजातोऽसि पाण्डव' इति वक्ष्यते । तत्रोक्तार्थव्यवसायस्य शास्त्राधीनत्वात्पुरुषस्य शास्त्रवश्यत्वं तावद्वक्तव्यम् । तच्च '[3]तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि' इत्यध्यायान्ते वक्ष्यति । तदर्थमेवच पूर्वाध्यायान्तसूचिताधिकारिविशेषविवेचनायात्रादौ दैवासुरविभागोक्तिः । तदभिप्रायेण संगृहीतं '[4]दैवासुरविभागोक्तिपूर्विका शास्त्रवश्यता । तत्त्वानुष्ठानविज्ञानस्थेम्ने षोडश उच्यते' इति। तदेतत्सर्वमभिप्रेत्याह—**अनन्तर**मिति।**उक्तस्य कृत्स्नस्यार्थस्ये**ति—वक्ष्यमाणस्यानुष्ठानविवेकस्याप्युपलक्षणम्। उक्तैकदेशविशोधनरूपत्वाद्वा तदविवक्षा। सङ्ग्रहश्लोकोक्तानुष्ठानमपि **कृत्स्नस्ये**ति विशेषणेन अन्तर्भावितम् । हेयोपादेयस्वभावकथनस्य हानोपादानार्थतया फलितमाह—**शास्त्रवश्यतां वक्तु**मिति । शास्त्रवश्यत्वकथने देवासुरविभागोक्तिः कुत्रोपकुरुते ; तत्राह—**शास्त्रवश्यतद्विपरीतयो**रिति । भगवदाज्ञा हि शास्त्रं, तदनुवर्तिनो देवास्तेनानुगृह्यन्ते ; अतस्तथा वर्तितव्यम् । तदाज्ञातिक्रामिणोऽसुरास्तेन निगृह्यन्ते ; अतस्तथा न वर्तितव्यमिति भावः । नैसर्गिकविरोधद्योतनायात्र वक्ष्यमाणसर्गशब्दोपादानम् । विभागोऽत्र गुणक्रियादिभिर्वक्ष्यमाणैः '[5]यया सुतं भयं शोकम्' इत्यादिभिः।तमश्शीलं हि भयम्; तत्सात्त्विकस्य दैवसर्गस्य न भवतीत्यभिप्रायेण भयनिरूपणार्थं तत्प्रतियोगिस्वरूपं शिक्षयति—

---

**प्र-पा** ॥ १. गी. १५. २० ॥
२. गी. १६-५ ॥
३. गी. १६-२४ ॥
४. गी. सं. २० ॥
५. गी. १८-३५ ॥

श्रीभगवानुवाच—

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १
अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २
तेजः क्षमा धृतिश्शौचमद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३

रा॥**इष्टानिष्टवियोगसंयोगरूपस्य दुःखस्य हेतुदर्शनजं दुःखं भयम्, तन्निवृत्तिरभयम् ; सत्त्वसंशुद्धिः—सत्त्वस्यान्तःकरणस्य रजस्तमोभ्यामस्पृष्टत्वम् ; ज्ञानयोगव्यवस्थितिः-प्रकृतिवियुक्तात्मस्वरूपविवेकनिष्ठा; दानं-न्यायार्जितधनस्य पात्रे प्रतिपादनम् ; दमः-मनसो विषयौन्मुख्यनिवृत्तिसंशीलनम् ; यज्ञः-फलाभिसन्धिरहितभगवदाराधन-**

ता॥**इष्टानिष्टे**ति। वियोगसंयोगशब्दाविष्टानिष्टाभ्यां यथाक्रममन्वेतव्यौ।इदञ्च स्वरूपकथनम्; नतु भयलक्षणानुप्रविष्टम् ; आगामिदुःखहेतुदर्शनजं दुःखमित्येव हि तत्। सत्त्वसंशुद्धिः—सत्त्वाधिष्ठानमन्तःकरणमिह सत्त्वम् ; तस्य समीची शुद्धिस्संशुद्धिः, सर्वदोषनिवृत्तिः। तत्र कन्दभूतरजस्तमोनिवृत्त्या कामरागासूयावञ्चनादिसर्वदोषनिवृत्तिमभिप्रेत्याह— **रजस्तमोभ्यामस्पृष्टत्व**मिति । ज्ञानयोगशब्दोऽत्र न कर्मयोगादीनां व्यवच्छेदार्थः, तेषामपि सात्त्विकोपादेयत्वात् ; अतः कर्मज्ञानभक्तीनां साधारणं शास्त्रीयं शुद्धात्मस्वरूपविवेचनमिह विवक्षितमित्याह—**प्रकृतिवियुक्ते**ति । ज्ञानमेवात्रोपायत्वाद्योगः। यद्वा शास्त्रजन्यज्ञाननिष्पाद्यं चिन्तनं ज्ञानयोगः । **न्यायार्जिते**त्यादिकं दान्तस्य शास्त्रीयाकारप्रदर्शनम् , अनेवंकरणस्य राजसतामसत्वेन वक्ष्यमाणत्वात् । एतच्च यथाविभवमनुसन्धेयम् । दमनं दमः ; तच्चान्तःकरणकर्मकम् अमार्गान्निवर्तनं प्रकरणान्तरादिसिद्धमाह—**मनस** इति । बाह्येन्द्रियनियमनं हि शान्तिशब्देन वक्ष्यति । एतेन केषाञ्चिदनयोश्शब्दयोर्व्युत्क्रमेणार्थव्याख्यानं निरस्तम् । 'यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम्' इत्यासुरयज्ञानां वक्ष्यमाणत्वादत्र मोक्षप्रकरणेऽभिमतं सात्त्विकं यज्ञविशेषमाह—**फलाभिसन्धिरहिते**ति । समस्तनित्यनैमित्तिकोपलक्षणतयात्र यज्ञोपादान-

**प्र-पा** ॥ १. गी. १६ ॥

शं॥**दैवी आसुरी राक्षसी च इति प्राणिनां प्रकृतयः नवमे अध्याये सूचिताः । तासां विस्तरेण प्रदर्शनाय 'अभयं सत्त्वसंशुद्धिः' इत्यादिः अध्यायः आरभ्यते । तत्र संसारमोक्षाय दैवी प्रकृतिः, निबन्धाय आसुरी राक्षसी च इति, दैव्याः आदानाय प्रदर्शनं**

आ॥ॐ ॥ **साधनविघ्नहर्त्रे नमः । ॐ । पुमर्थसाधनविरोधीन्यनेनाध्यायेन दर्शयति ।**

ज॥अध्यायप्रतिपाद्यं दर्शयति—**पुमर्थे**ति । यद्यपि पूर्वयोरध्याययोः साधनप्रतिपादन एव तात्पर्यं, तथापि तन्न प्रपञ्चितम् ; किं नाम बन्धस्वरूपम् । साधनमनुतिष्ठता च तद्विरोधिनां त्यागोऽवश्यं करणीयः । पूर्वाध्याये च निर्मानेत्यादिना पुमर्थयोर्ज्ञानमोक्षयोः साधनं 'यतन्तोऽप्यकृतात्मानः' इत्यादिना तद्विरोधि च संक्षेपेणोक्तम् । तदुभयमिदानीं प्रपञ्चनीयम् । सुरासुरलक्षणं च तथेति तदनेनाध्यायेन दर्शयतीत्यर्थः । तपो वक्ष्यमाणमिति कश्चित् ; तदसत् , देवद्विजेत्यादिनोक्तस्यात्र ग्रहणे शौचा-

रा॥रूपमहायज्ञाद्यनुष्ठानम्;स्वाध्यायः-सविभूतेर्भगवतस्तदाराधनप्रकारस्य च प्रतिपादकः कृत्स्नो वेद इत्यनुसन्धाय वेदाभ्यासनिष्ठाः तपः-कृच्छ्रचान्द्रायणद्वादश्युपवासादेर्भगवत्प्रीणनकर्मयोग्यतापादनस्य करणम् ;आर्जवं-मनोवाक्कायवृत्तीनामेकनिष्ठता परेषु;अहिं-

ता॥मित्यादिशब्दः। अपकृष्टदेवताविषयस्य अल्पफलकाम्यकर्मविधायकस्य च वेदभागस्य यावानर्थउदपानन्यायान्मुमुक्षुणानभ्यसनीयत्वमाशङ्क्य तत्रापि त्रैवर्गिकवेदाभ्यासाद्व्यावृत्तिं प्रकरणलब्धामाह—**स विभूते**रिति । 'सर्वे वेदा यत्पदमामनन्ति' 'सर्वे वेदा यत्रैकं भवन्ति' इत्यादिक्रमेणानुसन्धाय पठत उपनिषदभ्यासविधिप्रयुक्तस्य सर्वे प्रणवाष्टाक्षरषडक्षरद्विपट्कनिषदुपनिषदभ्यासकल्पमित्यभिप्रायः । एतेन 'अन्या वाचो विमुञ्चथ' इत्यादिकमप्यन्यपरं निर्वृत्तम्, 'ओमित्येवात्मानं ध्यायथ' इति ध्यानदशायां प्रणवस्यैवोपादेयत्वे तात्पर्याच्च । यद्यपि स्वेनाधीयत इति स्वाध्यायः स्वशाखा ; तथापि 'नैचैकं प्रति शिष्यते' इति न्यायात्सर्वशाखानुगतस्यार्थस्यानुसन्धेयत्वात् ,जपविधेश्च सर्वत्राविशेषात्**वेदाभ्यासनिष्ठे**ति सामान्येनोक्तम्। शास्त्रीयो भोगसङ्कोचस्तप इति लक्षिते तद्विशेषानुदाहरति—**कृच्छ्रे**ति । 'एकभुक्तेन नक्तेन तथैवायाचितेन च । उपवासेन दानेन न निर्द्वादशिको भवेत्' इत्यादिविहितद्वादशीसमाराधनार्थैकादश्युपवासोऽत्र द्वादश्युपवास इत्युक्तः । यद्वा तिथिव्रतेषु तिथिद्वयव्रते च द्वादश्युपवासोऽप्यस्त्येव । आदिशब्देन करणत्रयनिष्पाद्यानां वक्ष्यमाणानां तपसां ग्रहणम् । राजसतामसग्राह्यफलार्थतपोव्यवच्छेदार्थमाह—**भगवत्प्रीणनकर्मयोग्यतापादनस्ये**ति । तपसा शुद्धस्य ह्यर्चनादिष्वधिकारः । अत्रान्येषामपि करणत्रयस्य स्वस्मिन्नैकरूप्यात्तद्व्यावृत्त्यर्थमाह—**परेष्वि**ति ।

**प्र-पा** ॥ १. कठ. १२-१५॥

२. आरण्यके. ३ प्र. ११. अनु. १. पं ॥

३. मुण्ड. २ २-५६. 'यस्मिन् द्यौः पृथिवी चान्तरिक्षं चोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥ अरा इव रथनाभौ संहता यत्र नाड्यस्स एषोऽन्तश्चरते बहुधा जायमानः । ओमित्येवं ध्यायथात्मानं स्वस्ति वः पाराय तमसःपरस्तात्'॥यस्मिन् अक्षरशब्दवाच्ये परमात्मनि , द्युपृथिव्यन्तरिक्षमनःप्राणादिकं समवेतं, तमेकमेव स्वेतरसमस्तवस्तुनियन्तृत्वेन व्यापकतया आत्मानं जानीत। अनात्मविषया वाचस्त्यजत। अमृतस्यैष सेतुः-नद्यादिषु सेतुर्हि कूलस्य प्रतिलम्भक , सं सारार्णवपारभूतस्यामृतस्य एष प्रतिलम्भक इत्यर्थः ॥ —'सन्ततं सिराभिस्तु लम्बत्याकोशसन्निभम्' इत्युक्तरीत्या, यत्र-हृदये, रथनाभौ समर्पिता अरा इव नाड्यस्संहताः, तत्र मध्ये, स एष प्रकृत आत्मा (परमात्मा) 'अजायमानो बहुधा विजायते । तस्य धीराः परिजानन्ति योनिम्'इति देवादीनां समाश्रयणीयत्वाय तत्तज्जातीयस्वरूपसंस्थानगुणकर्मसमन्वितः स्वस्वभावमजहदेव स्वेच्छया बहुधा जायमानस्सन्, चरते-वर्तत इत्यर्थः। तमसः परे वर्तमानाय वःपाराय परतीराय,'पारावारे परार्वाची तीरे' इति नैघण्टुकाः। प्राप्यभूतायेति यावत् । तत्प्राप्तये-'ओमित्येवमात्मानं ध्यायथ'इत्यन्वयः । एवं ध्यानाय प्रवृत्तेभ्यो युष्मभ्यं स्वस्ति भवतु ॥ ६॥

४ ॥

५. अत्रिस्मृतौ. १-१२४. याज्ञवल्क्यस्मृतौच ३.अध्या. प्रायश्चित्तप्रकरणे. ५ ३१९. श्लो. तत्र 'उपवासेन चैवायं पादकृच्छ्रः प्रकीर्तितः' इति पाठो दृश्यते । एवम्पाठोऽन्यत्रान्वेषणीयः ॥

आ॥तपो ब्रह्मचर्यादि 'ब्रह्मचर्यादिकं तपः' इत्यभिधानम् ॥ १॥

ता॥देरपि तपोग्रहणेन गृहीतत्वात्पुनरुक्तिप्रसङ्गात्।अतो वक्ष्यमाणान्तर्गत यदत्र पृथगुच्यते तद्व्यतिरिक्तमेव। तच्च प्रधानस्यैवोपलक्षणत्वोपपत्तेः नोपवासादीतिभावेन सप्रमाणकमाह—**तप** इति ॥ १ ॥

रा॥सा-परपीडावर्जनम्;सत्यं—यथादृष्टार्थगोचरभूतहितवाक्यम्,अक्रोधः-परपीडाफलचित्तविकाररहितत्वम्; त्यागः—आत्महितप्रत्यनीकपरिग्रहविमोचनम्; शान्तिः-इन्द्रियाणां विषयप्रावण्यनिरोधसंशीलनम्; अपैशुनं-परानर्थकरवाक्यनिवेदनाकरणम्; दया

ता॥कौटिल्यप्रसङ्गस्थले हि तन्निवृत्तिर्वक्तव्येत्यभिप्रायः।परपीडावर्जनमिति-स्वपीडोपलक्षणम्। स्वपीडापि मूर्खाणां परपीडाभिप्रायेति वा भावः। यथादृष्टार्थवचनेनैव सत्यवादी भवति; तथापि 'सत्यं भूतहितं प्रोक्तम्' इति नियमात् भूतहितोक्तिः। परपीडा फलेति प्राग्वद्व्याख्यम्। स्वभावार्थशास्त्रप्राप्तानां निद्राशनमहायज्ञदण्डकुण्डिकादीनां त्यागायोगाद्विशेषे नियच्छति—आत्महितप्रत्यनीकेति। दमशब्देन मनोनियमनस्योक्तत्वात् 'शान्तो दान्तः' इत्यादिष्विव शान्तिरिह बाह्येन्द्रियगतेत्यभिप्रायेणाह—इन्द्रियाणामिति। अक्रोधाहिंसादिष्विव प्रतियोगिलक्षणद्वारेण अपैशुनं लक्षयति—परानर्थेति। 'दया' इत्येतावता भूतविषयत्वे सिद्धेऽपि पुनरुपादानं बहुवचनं च शत्रुमित्रादिसर्वविषयाभिप्रायेण। यथोक्तं गौतमेन '[3]दया सर्वेषु भूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यम

प्र-पा॥ १॥
२. बृ ६-४ २२॥
३. गौतमधर्मे. ७-१०॥ 'अथाष्टावात्मगुणाः दया सर्वभूतेषु ..अस्पृहेति'॥

शं॥क्रियते, इतरयोः परिवर्जनाय च॥श्रीभगवान् उवाच-अभयम् अभीरुता सत्त्वसंशुद्धिः सत्त्वस्य अन्तःकरणस्य संशुद्धिः संव्यवहारेषु परवञ्चनामायानृतादिपरिवर्जनं शुद्धसत्त्वभावेन व्यवहारः इत्यर्थः। ज्ञानयोगव्यवस्थितिः ज्ञानं शास्त्रतः आचार्यतश्च आत्मादिपदार्थानाम् अवगमः, अवगतानाम् इन्द्रियाद्युपसंहारेण एकाग्रतया स्वात्मसंवेद्यतापादनं योगः, तयोः ज्ञानयोगयोः व्यवस्थितिः व्यवस्थानं तन्निष्ठता एषा प्रधाना दैवी सात्त्विकी सम्पत्।यत्र येषाम् अधिकृतानां या प्रकृतिः सम्भवति,सात्त्विकी सा उच्यते दानं यथाशक्ति संविभागः अन्नादीनाम्। दमश्च बाह्यकरणानाम् उपशमः अन्तःकरणस्य उपशमं शान्तिं वक्ष्यति, यज्ञश्च श्रौतः अग्निहोत्रादिः, स्मार्तश्च देवयज्ञादिः, स्वाध्यायः ऋग्वेदाद्यध्ययनम् अदृष्टार्थम् तपः वक्ष्यमाणं शारीरादि आर्जवम् ऋजुत्वं सर्वदा॥ १॥

किंच—अहिंसा अहिंसनं प्राणिनां पीडावर्जनम्,सत्यम् अप्रियानृतवर्जितं यथाभूतार्थवचनम्, अक्रोधः परैः आक्रुष्टस्य अभिहतस्य वा प्राप्तस्य क्रोधस्य उपशमनम्, त्यागः संन्यासः, पूर्वं दानस्य उक्तत्वात्। शान्तिः अन्तःकरणस्य उपशमः अपैशुनम् अपिशुनता; परस्मै पररन्ध्रप्रकटीकरणं पैशुनं, तदभावः अपैशुनम्, दया कृपा भूतेषु

आ॥पैशुनं परोपद्रवनिमित्तदोषाणां राजादेः कथनम्। 'परोपद्रवहेतूनां दोषाणां पैशुनं वचः। राजादेस्तु मदाद्भीतेरदृष्टिर्दर्प उच्यते' इत्यभिधानात्। लौल्यं रागः 'रागो

ज॥पैशुनाभावोऽपैशुनं च परस्यापराधावचनमिति। तदसत्, शिष्यादिदोषानुवादस्य शिक्षार्थस्यापि तत्त्वप्राप्तेरित्याशयेनाह—पैशुनमिति। राजादेस्तच्छ्रावणम्। परोपद्रवनिमित्तेति दोषेषूपचारः। अनेन परोपद्रवायेति सूचयति। वचः-कथनम्। मदात्कारणात्, भीतेरदृष्टिरनुत्पत्तिरिति यावत्। भीतेर्भीतिकारणस्य तथात्वेनादृष्टिरिति वा। बालादीनां भीतेरदर्शनं व्यावर्तयितुं मदादित्युक्तम्। अनेन धात्वर्थोऽप्यनुगतः। एतेनासुरलक्षणं दर्पोऽपि व्याख्यातः। अलोलुप्त्वाचापलत्वयोर्भेदं क्रमेण सप्रमाणकं

रा॥भूतेषु—**सर्वभूतेषु दुःखासहिष्णुत्वम्**; **अलोलुप्त्वम्**-**अलोलुपत्वम्**; **अलोलुत्वमिति वा पाठः; विषयेषु निस्स्पृहत्वमित्यर्थः ; मार्दवम्—अकाठिन्यम् ; साधुजनसंश्लेषार्हतेत्यर्थः; ह्रीः—अकार्यकरणे व्रीडा ; अचापलं—स्पृहणीयविषयसन्निधावचञ्चलत्वम्, तेजः—दुर्जनैरनभिभवनीयत्वम्; क्षमा—परनिमित्तपीडानुभवेऽपि परेषु तं प्रति चित्तविका-**

ता॥स्पृहा' इति । अन्यत्रच 'सर्वभूतदया पुष्पम्' इत्यादि। तदाह—**सर्वभूतेष्विति**। 'तापत्रयेणाभिहतं यदेतदखिलं जगत् । तदा शोच्येषु भूतेषु करुणां न करोति कः' इति हि करुणाख्यचित्तपरिकर्म प्रह्लादः प्राह । दुःखासहिष्णुत्वं तन्निराकरणेच्छेत्यर्थः । लुपिधातौ यङ्लुगन्ते क्विपि कृते लोलुविति पकारान्तं पदम् ; अचि कृते तु लोलुप इति; तद्व्यञ्जयति—**अलोलुप्त्वम् अलोलुपत्वमिति** । 'लूञ् छेदने' इति धातौ लोलू इति यङ्लुगन्तम्, तत्र 'त्वे च' इति च्छान्दसं ह्रस्वमभिप्रेत्याह—**अलोलुत्वमितिवा पाठ** इति । अयोग्यस्पृहारूपं लौल्यमिह निषिध्यत इत्यभिप्रायेणाह—**विषयेष्विति** । मुख्यस्य मार्दवस्यात्मानन्वयात्पूर्वभाषित्वमुखसौम्यत्वादिव्यङ्ग्यमौपचारिकं दर्शयितुमाह—**अकाठिन्यमिति** । कठिनं हि द्रव्यमन्येषाम् अनुप्रवेशानर्हम् ; तद्वदिह स्तब्धप्रकृतिरिति तद्व्यतिरेकविवक्षया फलतो मार्दवं व्यनक्ति—**साधुजनेति** । अवमतत्वादीनां योगोपकारकत्वात्तन्मूला व्रीडा सत्त्वनिष्ठानामयुक्ता; अत उपयुक्तं ह्रीविशेषमाह—**अकार्यकरणे व्रीडेति**। प्रख्याताभिजनविद्यावृत्ता हि महान्तः परेष्वप्यकार्यकारिष्वपत्रपन्ते; स्वयं तु किमुतेति भावः। अलोलुपत्वाचापलत्वयोरपौनरुक्त्यायाह—**स्पृहणीयविषयसन्निधाविति**। एतेन क्रीडापरिहासमृगयाक्षादिष्वप्रसङ्गोऽपि दर्शितः। भूतेतरविषयस्तेजश्शब्दः पराभिभवनसामर्थ्ये अन्यानपेक्षतायां वा प्रयुज्यते ; अतोऽत्राभिभावकत्वाविनाभूतमनभिभवनीयत्वं विवक्षितम् ; तच्च दुर्जनावकाशप्रदायिकार्पण्याभावद्वारेत्यभिप्रायेणाह—**दुर्जनैरिति** ।—अक्रोधात् क्षमाया विशेषं दर्शयति—**परनिमित्तपीडानुभवेऽपीति** । निरपराधेषु निर्विकारता ह्यौदासीन्यमात्रम् ; न तु क्षमा ; पठ्यते च निरपराधेष्वपि क्रोधः—'ब्राह्मणा गणिका वैद्यास्सारमेयाश्च कुक्कुटाः । दृष्टमात्रेण कुप्यन्ति न जाने तत्र कारणम्' इतीत्यभिप्रायः । **परेषु तं प्रतीति**—परेषां पीडानुभवं प्रतीत्यर्थः । भयचापलनिवृत्तेः पृथगुक्तत्वादुपस्थितायामपि महत्यामा-

**प्र-पा॥** १.पाद्मपुराणे पातालखण्डे. ७३-५७-५८॥ 'अहिंसा प्रथमम्पुष्पम्पुष्पमिन्द्रियनिग्रहः । सर्वभूतदया पुष्पं क्षमा पुष्पं विशेषतः।ज्ञानं पुष्पं तपः पुष्पं ध्यानं पुष्पं तथैव च।सत्यमष्टविधं पुष्पं विष्णोः प्रीतिकरम्भवेत्' ॥

२. वि-पु. १-१७-७०. दैत्यपुत्रान्प्रति प्रह्लादः सर्वात्मकत्वमेकस्य मानुसन्धायि, तथापि तापत्रयदग्धेषु भूतेषु द्वेषो न कार्यः,किन्तु करुणैव कार्येत्याह— तापत्रयेणेति ॥ तापत्रयेण-आध्यात्मिकादिदुःखत्रयेण, मदमत्सरादिना जगदेतदभिहतमिति यदा बुद्धिः, तदा शोच्येषु-कृपाविषयेषु तेषु भूतेषु कः प्राज्ञः द्वेषं करोति- इत्यस्यार्थः ।

३. द्वेषं प्राज्ञः करोति कः. पा ॥

४. अष्टा. ३-३-६४ ॥ त्वप्रत्यये परे ङ्यापोर्वा ह्रस्वः । अजत्वम्, अजात्वम् । रोहिणित्वम्, रोहिणीत्वम् ॥ ५ ॥

शं॥**दुःखितेषु।अलोलुप्त्वम् इन्द्रियाणां विषयसन्निधौ अविक्रिया मार्दवं मृदुता अक्रौर्यम् ह्रीः लज्जा अचापलम् असति प्रयोजने वाक्पाणिपादादीनाम् अव्यापारयितृत्वम्॥ २ ॥**

आ॥**लौल्यं तथा रक्तिः' इत्यभिधानात्।अचापलं स्थैर्यम्। 'चपलश्चञ्चलोऽस्थिरः' इत्यभिधानात् ॥ २ ॥**

ज॥दर्शयति—**लौल्यमिति** । लोलुप्त्वपर्यायोऽयमिति अत एवमुक्तम् ॥ २ ॥

रा॥ररहितता ; धृतिः—महत्यामप्यापदि कृत्यकर्तव्यतावधारणम् ;शौचं बाह्यान्तरकरणानां कृत्ययोग्यता शास्त्रीया; अद्रोहः—परेष्वनुपरोधः ; परेषु स्वच्छन्दवृत्तिनिरोधरहितत्वमित्यर्थः ; नातिमानिता—अस्थाने गर्वोऽतिमानित्वम्, तद्रहितता : एते गुणाः दैवीं संपदमभिजातस्य भवन्ति-देवसंबन्धिनी संपत् दैवी, देवा भगवदाज्ञानुवृत्तिशीलाः,

ता॥पादि शास्त्रीयानुष्ठानसंकल्पस्य अप्रच्युतावलम्बनमिह सात्त्विकी धृतिरित्यभिप्रायेणाह-महत्यामिति। 'महत्यापदि संप्राप्ते स्मर्तव्यो भगवान् हरिः' इति सुकरमुख्यकर्तव्यापरित्यागादितरदपि कर्तव्यं कृतमेव हि स्यादिति भावः । वक्ष्यति च सात्त्विकीं धृतिं 'धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिस्सा पार्थ सात्त्विकी' इति। योगेनाव्यभिचारिण्या-मोक्षसाधनभूतभगवदुपासनाख्यप्रयोजनेन प्रयोजनान्तरनिरपेक्षयेत्यर्थः । शरीरवाङ्मनांसि ह्यशुचिपुरुषस्पर्शाशुचिद्रव्योपयोगादिभिरुपहतसत्त्वानि तेषुतेषु कर्मस्वयोग्यानि शास्त्रैरिशष्यन्ते। तदभावोऽत्र शौचमित्याह—बाह्येति। प्रत्यक्षसिद्धकरणपाटवादिरूपकृत्ययोग्यताव्यवच्छेदायाह—शास्त्रीयेति । अहिंसाया उक्तत्वादद्रोहस्य ततो विशेषप्रदर्शनायाह—परेष्वनुपरोधइति । प्रबलेन हि दुर्बलास्स्ववशे स्थापितास्स्वाच्छन्द्यान्निवार्यन्ते ; सोऽयमुपरोधः : तदकरणमत्रानुपरोध इत्याह—स्वच्छन्देति । स्वस्य तु योगोपकारी स्वच्छन्दवृत्तिनिरोधस्तप एव । अतः परेष्विति विशेषितम् । मानो गर्व इति पर्यायस्तु सामान्यत इह निषेद्धुमिष्टः ; तथापि वंशवीर्यश्रुताद्यनुगुणम्मात्रया भवन्नसौ सह्येतापि ; अन्यथा भवन्नसुराणां धर्मतया वक्ष्यमाणोऽत्र न प्रसङ्गमर्हतीत्यभिप्रायेण सोपसर्गमाननिषेध इत्याह—अस्थाने गर्वइति । 'दैवीं संपदम्' इत्युक्ते देवानां विभूतिः प्रतीयेत, सा चात्र नान्वेति ; अतोऽभिप्रेतमवतारयितुं व्युत्पत्तिं तावदाह —देवसंबन्धिनीति। 'सत्त्वं देवगुणं विद्यादितरावासुरौ गुणौ' इति विभागात्, 'सत्त्वात्संजायते ज्ञानम्' इति सत्त्वस्यानुष्ठानपर्यन्तज्ञानहेतुत्वाच्च सत्त्वोत्तरत्वादेव भगवदाज्ञां नातिवर्तन्ते : तदादावेवाह—भगवदाज्ञानुवृत्तिशीलाइति । सैव च तेषां संपदभिमता । अविवेकिनां भोग्य-

प्र-पा॥ १.भारते-सभा. ९०-४२॥ वस्त्रापहारसमये द्रौपदी—'ततो दुश्शासनो राजन् द्रौपद्या वसनम्बलात् । सभामध्ये समाक्षिप्य व्यपाक्रष्टुम्प्रचक्रमे॥४०॥ आकृष्यमाणे वसने विललाप सुदुःखिता । ज्ञातम्मया वसिष्ठेन पुरा गीतं महात्मना॥ ४१ ॥ महत्यापदि सम्प्राप्ते ..हरिः । इति निश्चित्य मनसा शरणागतवत्सलम् ॥४२॥ आकृष्यमाणे वसने द्रौपदी कृष्णमस्मरत्' ॥

२. गी. १८-३३॥

३ ॥

४. गी. १४-१७॥

शां॥किंच—तेजः प्रागल्भ्यं, न त्वग्गता दीप्तिः । क्षमा आक्रुष्टस्य ताडितस्य वा अन्तर्विक्रियानुत्पत्तिः—उत्पन्नायां विक्रियायाम् उपशमनम् अक्रोधः इति अवोचाम । इत्थं क्षमायाः अक्रोधस्य च विशेषः । धृतिः देहेन्द्रियेषु अवसादं प्राप्तेषु तस्य प्रतिषेधकः अन्तःकरणवृत्तिविशेषः, येन उत्तम्भितानि करणानि देहश्च न अवसीदन्ति । शौचं द्विविधं, मृज्जलकृतं बाह्यम्, आभ्यन्तरं च मनोबुद्ध्योः नैर्मल्यं मायारागादिकालुष्याभावः;

आ॥ क्षमा तु क्रोधाभावेन सहापकर्तुरनपकारः । 'अक्रोधदोषकृच्छत्रोः क्षमावान्स

जा॥अक्रोध इत्युक्तत्वात् क्षमेति पुनरुक्तिरित्यत आह—क्षमा त्विति । क्रोधं दोषम् अपकारं च

रा॥तेषां संपत्, सा च भगवदाज्ञानुवृत्तिरेव, तामभिजातस्य—तामभिमुखीकृत्य, जातस्य, तां निर्वर्तयितुं जातस्य भवन्तीत्यर्थः ॥ ३ ॥

दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥ ४

दम्भः—धार्मिकत्वख्यापनाय धर्मानुष्ठानम्; दर्पः—कृत्याकृत्याविवेककरो विषयानुभवनिमित्तो हर्षः; अतिमानश्च—स्वविद्याभिजनाननुगुणोऽभिमानः; क्रोधः—

ता॥तत्साधनसमृद्धिवत्तेषां भगवदाज्ञानुवृत्तेः प्रीतिविषयत्वात्परमपुरुषार्थहेतुत्वाच्चेत्याह - साचेति। उक्तंच 'महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः। भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्' इति। अन्यत्रच '²विष्णुभक्तिपरो देवः' इति । जातस्येत्यकर्मकस्य जायतेः ³पैतत्यादिष्विवोपसर्गवशाद्द्वितीयान्वयमाह—तामभिमुखीकृत्येति। '⁴अभिरभागे' इति कर्मप्रवचनीययोगाद्वा द्वितीया। अभिमुखीकृत्य-अभिलक्ष्य; यथा दैवी सम्पद्भवति, तथा कृत्वा जातस्येति यावत्। ईदृशगुणयुक्तानामेवंविधायास्संपदोऽवश्यंभावित्वमत्र अभिमुखीकरणं विवक्षितम् । तथाच स्मर्यते '⁵जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकस्सतु विज्ञेयस्स वै मोक्षार्थचिन्तकः' इति । तदिदमाह—तां निर्वर्तयितुं जातस्येति ॥ ३ ॥

'दम्भो दर्पः' इत्यादौ भवन्तीत्यनुषज्यते । धार्मिकत्वख्यापनायेति—न तु भगवदाज्ञानुवृत्तिबुद्ध्येत्यर्थः। कृत्याकृत्याविवेककर इति शास्त्रातिलङ्घनहेतुरिति भावः। अतिमानशब्दोक्तगर्वापरपर्यायात्तत्कारणाभिमानाद्दर्पस्य विशेषमाह—विषयानुभवनिमित्त इति । एतेनाचार्यभगवत्सन्दर्शनादिनिमित्तहर्षव्यवच्छेदः। अस्थान इति पूर्वोक्तमत्र स्वविद्याभिजनाननुगुण इत्यनेन विवृतम्। विद्याभिजनग्रहणं वीर्यादेरप्युपलक्षणम् । '⁶वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च । वेषवाग्वृत्तिसारूप्यमाचरन्विचरेदिह' इत्यस्योल्लङ्घनमिहाभिप्रेतम् । बाह्यकुदृष्टिषु चोरादिषु च वाक्पारुष्यं दण्ड-

प्र-पा ॥ १. गी. ९-१३ ॥
२. विष्णुधर्मे. १०९-७४. आग्नेयपुराणेच ३७३-१२. 'द्विविधो भूतसर्गोऽयन्दैव आसुर एवच। विष्णुभक्तिपरो दैवो विपरीतस्तथासुरः' ॥
३. भवत्यादिष्विव. पा ॥
४. अष्टा. १-४-९१ ॥ भागवर्जे लक्षणादौ अभिरुक्तसंज्ञः स्यात् । (कर्मप्रवचनीयसंज्ञः स्यादित्यर्थः)। हरिमभि वर्तते। भक्तो हरिमभि । देवंदेवमभिसिञ्चति । अभाग इत्येष निषेधः किमर्थः ? 'यदत्र ममाभिष्यात्, तद्दीयताम्' इत्यत्र कर्मप्रवचनीयसंज्ञा माभूदित्येवमर्थः । अन्यथा नयोपसर्गसंज्ञाबाधेन षत्वं न स्यात् ॥
५. भार. शा. मो. ३७७ ७५ ॥
६. मनु ४-१७ ॥

शं॥एवं द्विविधं शौचम् । अद्रोहः परजिघांसाभावः अहिंसनम् । नातिमानिता अत्यर्थं मानः अतिमानः, सः यस्य विद्यते सः अतिमानी, तद्भावः अतिमानिता, तदभावः नातिमानिता आत्मनः पूज्यतातिशयभावनाभाव इत्यर्थः । भवन्ति अभयादीनि एतदन्तानि सम्पदम् अभिजातस्य किं विशिष्टां संपदं ? दैवीं, देवानां या सम्पत् ताम् अभिलक्ष्य जातस्य देवविभूत्यर्हस्य भाविकल्याणस्य इत्यर्थः, हे भारत ॥ ३ ॥

आ॥निगद्यते ' इत्यभिधानात् ॥ ३ ॥

जा॥न करोतीत्यक्रोधदोषकृत् । शत्रोरपकर्तुः ॥ ३ ॥

रा॥परपीडाफलचित्तविकारः; पारुष्यं साधूनामुद्वेगकरः स्वभावः; अज्ञानं—परावरतत्त्व-कृत्याकृत्याविवेकः; एते स्वभावा आसुरीं संपदमभिजातस्य भवन्ति; असुरा भगवदाज्ञा-तिवृत्तिशीलाः ॥ ४ ॥

**दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ।**

दैवी—मदाज्ञानुवृत्तिरूपा संपत्, विमोक्षाय—बन्धान्मुक्तये भवति—क्रमेण म-त्प्राप्तये भवतीत्यर्थः;आसुरी—मदाज्ञातिवृत्तिरूपा संपत्, निबन्धाय भवति—अधोगति-प्राप्तये भवतीत्यर्थः ॥

---

ता॥पारुष्यं च नातीव दोष इत्यभिप्रायेणाह—**साधूनामुद्वेगकरस्स्वाभाव** इति। अतएव साधुबहि-ष्काराच्छास्त्रबहिष्कारोऽपि स्यादेवेत्यर्थः । प्रातकालनिद्रादिरूपमनुपयुक्तविषयं चाज्ञानमासुराणाम-न्येषामपि तुल्यमदोषश्च । तद्व्यवच्छिनत्ति—**परावरे**ति । ईदृशाज्ञानमूलमागमान्तरेषु परावरतत्त्वव्य-त्ययकल्पनं, वेदविरुद्धाचारपरिग्रहश्च।पूर्वोक्तकतिपयगुणव्यतिरेकप्रदर्शनमिहोपलक्षणार्थम्। चकारेण वा-नुक्तसमस्तसमुच्चयः । आसुरीं सम्पदमभिव्यङ्क्तुमाह—**भगवदाज्ञातिवृत्तिशीला** इति । यान् प्रत्यु-च्यते '[1]पैश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चैव मानसं समभिप्लुतम्' इति; '[2]विपरीतस्तथासुरः' इति च । प्रजापतिवाक्ये च देहात्माभिमानादिमूलत्रिवर्गमात्रनिष्ठामधिकृत्योच्यते '[3]असुराणां ह्येषोपनिषत्' इति । अत्र सम्पच्छब्दो भगवदाज्ञातिलङ्घनरुचीनामभिप्रायेणोपलम्भाभि-प्रायेण वा सम्पद्यत इत्येतावन्मात्रविवक्षया वा नेतव्यः ॥ ४ ॥

दैवासुरस्वभावयोरश्रद्धोद्वेगजननाय '[4]ऊर्ध्वं गच्छन्ति सत्त्वस्थाः' इत्यादिनोक्तमिह संक्षिप्य स्मार्यते—'दैवी सम्पत्' इत्यर्धेन। विमोक्षस्येष्टप्राप्तिपर्यन्ततां वक्तुमात्यन्तिकानिष्टनिवृत्तिरूपं शब्दस्य मुख्यार्थमाह—**बन्धान्मुक्तय** इति । अव्यवहितहेतुत्वविवक्षायां समाधिपर्यन्तशास्त्रार्थवैयर्थ्यं स्या-दित्यभिप्रायेणाह—**क्रमेणे**ति । आत्मसाक्षात्कारादिद्वारेति वा । निबन्धः-नियतो बन्धः। तत्र 'अधो-गच्छन्ति' इत्येतत्स्मारयति—**अधोगती**ति ॥

---

प्र-पा ॥ १. भारते-शा मो-३५७-७७ ॥ २. विष्णुधर्मे. १०९-७८. आग्नेयपुराणे च. ३८३-१२ ॥ ३. छा. ८-८-५ ॥ ४. गी १४-१८ ॥

---

शं॥अथ इदानीम् आसुरी सम्पत् उच्यते—दम्भः धर्मध्वजित्वम्। दर्पः विद्याधनस्व-जनादिनिमित्तः उत्सेकः। अतिमानः पूर्वोक्तः । क्रोधश्च, पारुष्यमेव च परुषवचनं यथा काणं 'चक्षुष्मान्,' विरूपं 'रूपवान्', हीनाभिजनम् 'उत्तमाभिजनः' इत्या-दि । अज्ञानं च अविवेकज्ञानं कर्तव्यादिविषयमिथ्याप्रत्ययः । अभिजातस्य पार्थ, किम् अभिजातस्येति? आह—संपदम् आसुरीम् असुराणां सम्पत् आसुरी ताम् अ-भिजातस्य इत्यर्थः ॥ ४ ॥

अनयोः सम्पदोः कार्यम् उच्यते—दैवी सम्पत् या, सा विमोक्षाय संसारबन्ध-नात्।निबन्धाय नियतः बन्धः निबन्धः तदर्थम् आसुरी सम्पत् मता अभिप्रेता।तथा रा-क्षसी च।तत्र एवम् उक्ते सति अर्जुनस्य अन्तर्गतं भावं 'किम् अहम् आसुरीसम्पद्युक्तः?' 'किं वा दैवीसंपद्युक्तः' इत्येवम् आलोचनारूपम् आलक्ष्य आह भगवान्—मा शुचः शोकं मा कार्षीः । सम्पदं दैवीम् अभिजातः असि अभिलक्ष्य जातोऽसि, भावि-

रा॥एतच्छ्रुत्वा स्वप्रकृत्यनिर्धारणादतिभीतायार्जुनायैवमाह—

**मा शुचस्सम्पदं दैवीमभिजातोऽसि पाण्डव ॥ ५**

**शोकं मा कृथाः ; त्वं तु दैवीं संपदमभिजातोऽसि, पाण्डव—धार्मिकाग्रेसरस्य हि पाण्डोस्तनयस्त्वमित्यभिप्रायः ॥ ५ ॥**

**द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६**

**अस्मिन् कर्मलोके कर्मकराणां भूतानां सर्गौ द्विविधौ—दैवश्चासुरश्चेति; सर्गः—**

ता॥अत्र 'मा शुचः' इति वचनं न शास्त्रोपक्रमप्रक्रान्ताशोच्यविषयशोकप्रतिषेधार्थम् , तस्य बहुधा परिहृतत्वात् , 'सम्पदं दैवीमभिजातोऽसि' इत्यनेन तत्परिहारासम्भवाच्च । अतो 'निबन्धायासुरी मता' इत्युक्ते शास्त्रीयमर्यादानतिलङ्घिन्यपि स्वात्मनि 'स्थिरो निगूढाहङ्कारः' इति प्रक्रियया धीरोदात्तनायकगुणभूतस्य निगूढस्वाहङ्कारत्वस्य स्वात्मसाक्षिकत्वात्तावन्मात्रेणापि स्वस्मिन्नासुरत्वमतिशङ्कमानस्य श्रुतद्विविधसंपत्कस्य भीभत्सोस्स्वप्रकृत्यनिर्धारणात्पुनरपारसंसारसागरनिमज्जनभीत्या शोचतो दैवप्रकृतित्वज्ञापनेन शोकमपनयतीत्याह—**एतच्छ्रुत्वे**ति । अत्राप्यस्थाने शोकं त्वमेवाहारयसीत्यभिप्रायेणाह—**शोकं मा कृथा**इति । नहि दैवप्रकृतीनां धर्मोत्तराणामासुराः पुत्रास्संभवन्तीत्यभिप्रायेण पाण्डवशब्दसंबुद्धिरित्याह—**धार्मिकाग्रेसरस्ये**ति ॥ ५ ॥

स्वरूपादिभिस्समेषु सर्वेषु आत्मसु दैवासुरविभागस्य किं निदानमिति शङ्कां सविशेषानुवादेन परिहरन्नत्यन्तपरिहर्तव्यत्वज्ञापनाय प्रसक्तस्यासुरवृत्तान्तस्य विस्तरमुपलक्षयति '**द्वौ भूतसर्गौ**'इति श्लोकेन। 'अस्मिल् लोके' इति न लोकान्तरव्यवच्छेदार्थम् ,सर्वत्र देवासुरविभागसिद्धेः; न च निरर्थकाधिकरणमात्रनिर्देशो युक्तः; अतो लोकोपलम्भसिद्धाकारेण विहितनिषिद्धकरणसूचनमिह विवक्षितमित्यभिप्रायेणाह—**कर्मकराणा**मिति।कर्मलोकविवक्षया वा 'अस्मिन्'इति विशेषणम्।'सर्गः स्वभावनिर्मोक्ष-

प्र-पा॥१. दशरूप. २-परिच्छेदे. ४ श्लो॥ 'महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः । स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः' महासत्त्वः-शोकक्रोधाद्यनभिभूतान्तस्सत्त्वः, अविकत्थनः - अनात्मश्लाघनः, निगूढाहङ्कारः-विनयच्छन्नावलेपः, दृढव्रतः-अङ्गीकृतनिर्वाहकः धीरोदात्तः । यथा नागानन्दे जीमूतवाहनः—'सिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति । तृप्तिं न पश्यामि तवैव तावत्किं भक्षणात्त्वं विरतो गरुत्मन्' इति । यथा च रामं प्रति—'आहूतस्याभिषेकाय विसृष्टस्य वनाय च । न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः' इति ॥ २ ॥

शं ॥ **कल्याणः त्वम् असि इत्यर्थः, हे पाण्डव ॥ ५ ॥**

आ॥**दैवीं सम्पदमभिजातः प्रतिजातः ॥ ५ ॥**

ज॥सम्पदं दैवीमभिजातोऽसीत्यत्राभिजात उत्तमजन्मा, नायं धातुः सकर्मकः, तत्कथं द्वितीयेत्याशङ्क्य 'अभिलक्ष्य जातः' इति केचिद्व्याचक्षते, तदसत्,अर्जुनस्य देवत्वेन देवत्वमुद्दिश्य जन्मायोगादित्याशयवानाह—दैवीमिति । अनेनैतदाचष्टे नायमभिरुपसर्गः । येन तस्य जनिसम्बन्धे द्वितीयानुपपत्तिर्लक्षिसंबन्धे चोक्तानुपपत्तिः स्यात्। किं तु प्रत्यर्थे लक्षणे कर्मप्रवचनीयः, तथा च कर्मप्रवचनीययुक्ते द्वितीयोपपद्यते। तथा 'वृक्षमभि वृक्षंप्रति विद्योतते' इत्यत्र वृक्षो विद्योतनस्य लक्षणमित्यर्थः। एवं दैवीसम्पज्जातस्य तव लक्षणमित्यर्थः सम्पद्यते । तथा चार्जुनस्य प्राप्तदेवत्वविरोध इति । अत एव 'सम्पदं दैवीमभिजातस्य' 'अभिजातस्य पार्थ संपदमासुरीम्' इत्येतद्विहायेदं व्याख्यातम् । अर्जुनस्य देवत्वप्रसिद्धेः एतत्साहचर्यात्तत्राप्येतदर्थत्वोपपत्तेः ॥ ५ ॥

रा॥उत्पत्तिः, प्राचीनपुण्यपापरूपकर्मवशाद्भगवदाज्ञानुवृत्तितद्विपरीतकरणायोत्पत्तिकाल एव विभागेन भूतान्युत्पद्यन्त इत्यर्थः;तत्र दैवस्सर्गो विस्तरशः प्रोक्तः—देवानां मदाज्ञानुवृत्तिशीलानामुत्पत्तिर्यदाचारकरणार्था, स आचारः कर्मयोगज्ञानयोगभक्तियोगरूपो विस्तरशः प्रोक्तः;असुराणां सर्गश्च यदाचारार्थः,तमाचारं मे शृणु—मम सकाशाच्छृणु ॥ ६ ॥

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।**
**न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७**

**प्रवृत्तिं च निवृत्तिं च**—अभ्युदयसाधनं मोक्षसाधनं च वैदिकं धर्मम् आसुरा न

ता॥निश्चयाध्यायसृष्टिषु' इति बह्वर्थस्याभिप्रेतं वक्तुमिहार्थवशाद्धातोः प्रयोज्यव्यापारपरत्वं तावदाह—**सर्ग उत्पत्तिरिति** । उत्पत्तिस्वरूपे कथं दैवत्वासुरत्वविभाग इति शङ्कायां 'लोकेऽस्मिन्' इत्यनेन दैवासुरविभागे' सर्गशब्देन चाभिप्रेतं संकलय्याह—**प्राचीनेति** । दैवासुरसंपदर्थत्वादुत्पत्तौ दैवासुरत्वोक्तिरित्यर्थः । सर्गशब्दस्य स्वभावपरत्वं सृज्यमानपरत्वं चाप्रसिद्धत्वादनादृत्य प्रसिद्धसृष्टिपरत्वेन व्याख्यातम् । दैवस्सर्गो विस्तरशः प्रोक्त इत्युक्ते देवानां वंशानुचरितकीर्तनवत्प्रतीयते ; नच तथा कृतम् । यद्यपि '[1]प्रजहाति यदा कामान्' '[2]दैवमवापरे यज्ञं' '[3]चतुर्विधा भजन्ते मां' '[4]महात्मानस्तु मां पार्थ' इत्यादिभिर्ज्ञानयोगकर्मयोगभक्तियोगनिष्ठाः पुरुषा निर्दिष्टाः ; तथापि तत्कर्तव्यप्रपञ्चन एव तत्रापि तात्पर्यम्; अतोऽत्र दैवसर्गस्य विस्तरेणोक्तिस्तत्कार्यद्वारेत्यभिप्रायेण—**यदाचारकरणार्थे**त्यादिकमुक्तम् । 'अभयं सत्त्वसंशुद्धिः' इत्यादिकं प्राग्विस्तरेणोक्तस्य संग्रहणमित्यभिप्रायेण कर्मयोगादिग्रहणम् । 'आसुरं सर्गम्' इत्यत्रापि वक्ष्यमाणानुसारादेवमेव विवक्षेत्याह—**असुराणामिति** । 'आसुरं सर्गं मे शृणु'इत्युक्ते सर्गान्वयेन कर्तरि षष्ठीप्रतीतिस्स्यात् ; ततोऽपि 'शृणु'इत्यस्यापेक्षितमाततमत्वसूचनमेवोचितमित्यभिप्रायेणाह—**मम सकाशादिति** । अविदितमुपादेयं यथा नोपादातुं शक्यं, तथा हेयमप्यविदितं न हातुं शक्यम् : अतोऽत्र सावधानो भवेत्यभिप्रायेण 'शृणु' इत्युक्तम् ॥ ६ ॥

अत्र प्रवृत्तिनिवृत्तिशब्दौ न लौकिकविषयौ ; आसुराणामेव लौकिकेष्टानिष्टप्राप्तिपरिहारार्थमपथप्रवृत्तेस्सत्पथनिवृत्तेश्च सिद्धत्वात् ; न च विहितनिषिद्धमात्रविषयौ, रागप्राप्तशास्त्रप्राप्तविषयौवा, 'न शौचं नापि चाचारः' इत्यादेः पुनरुक्तिप्रसङ्गात् ; अतोऽत्र मुमुक्ष्वपेक्षितप्रवर्तकनिवर्तकधर्मविवेकाभावे तात्पर्यमित्याह—**अभ्युदयसाधनमित्यादिना** । तावेतौ धर्मौ स्मर्येते '[5]प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत् । निवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीत्' इति । न विदुरित्यत्र 'न सत्यं तेषु वि-

प्र-पा ॥ १. गी. २ ५५ ॥
२. गी. ४-२५ ॥
३. गी. ७ १६ ॥
४. गी. ९-१३ ॥
५. भारते. शा. मो. २१९-२ ॥

शं॥द्वौ द्विसङ्ख्याकौ भूतसर्गौ भूतसृष्टी—सृज्यते इति सर्गः, भूतान्येव सृज्यमानानि दैवासुरसम्पद्द्वययुक्तानि इति भूतसर्गौ इति उच्यते, 'द्वया ह वै प्राजापत्या देवाश्चासुराश्च' इति श्रुतेः; लोके अस्मिन्, संसारे इत्यर्थः; सर्वेषां द्वैविध्योपपत्तेः । कौ तौ भूतसर्गौ इति ? उच्यते—प्रकृतावेव दैवः आसुरः एव च । उक्तयोरेव पुनः अनुवादप्रयोजनम् आह—दैवः भूतसर्गः'अभयं सत्त्वसंशुद्धिः' इत्यादिना विस्तरशः विस्तारप्रकारैः प्रोक्तः कथितः, न तु आसुरः इति । अतः तत्परिवर्जनार्थम् आसुरं पार्थ मे मम वचनात् उच्यमानं विस्तरशः शृणु अवधारय ॥ ६ ॥

रा॥विदुः—न जानन्ति, शौचं—वैदिककर्मयोग्यत्वं शास्त्रसिद्धम्; तद्बाह्यमान्तरं चासुरेषु न विद्यते;नापिचाचारः-तद्बाह्यान्तरशौचं येन सन्ध्यावन्दनादिना आचारेण जायते, सोऽप्याचारस्तेषु न विद्यते ; यथोक्तं * 'संध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु' इति; तथा सत्यं च तेषु न विद्यते—यथाज्ञानं भूतहितरूपभाषणं तेषु न विद्यते ॥ ७॥

किंच—

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहेतुकम् ॥ ८

असत्यं—जगदेतत्सत्यशब्दनिर्दिष्टब्रह्मकार्यतया ब्रह्मात्मकमिति नाहुः ; अप्र-

ता॥द्यते'इतिवदसद्भावमात्रं न विवक्षितम्,अपितु शतकृत्वः प्रतिपादितेऽपि तमःप्राचुर्यादपरिज्ञानमित्यभिप्रायेणाह—नजानन्तीति। 'कृत्ययोग्यता'इति प्रागुक्तमत्र वैदिककर्मयोग्यत्वमित्यनेन विवृतम्। बाह्यशौचमशुचिसंशीलनादिभिरवश्यकर्तव्याकरणाच्च न विद्यते; आन्तरं स्वात्मगुणाभावात्। 'न शौचं नापि चाचारः' इति क्रमात्कार्यकारणयोर्निषेध इत्यभिप्रायेणाह—तदिति । ननु संध्यावन्दनादेर्वर्णाश्रमधर्मस्य [1]'प्राजापत्यं गृहस्थानाम्' इत्यादिभिः फलान्तरं श्रूयते ; तत्कथं तस्य शौचहेतुत्वोक्तिरित्यत्राह—यथोक्तमिति । व्यतिरेकोक्त्या हेतुहेतुमद्भावोऽत्र द्रढीकृतः । इदं नित्यकर्मान्तरहानादपि ग्राह्यम्। यथाज्ञानमित्यादि—विप्रलम्भरसिकत्वात् यथाज्ञानं भाषणाभावः, हिंसास्वभावत्वाद्धितरूपभाषणाभावः ॥ ७ ॥

एवं न सत्यस्याभाषणमात्रम्; अपितु तद्विपरीतभाषणमस्तीत्यनन्तरमुच्यत इत्याह—किंचेति। असत्यशब्दोऽत्र न मिथ्यात्वपरः, तस्य लोकोपलब्धिस्ववचनविरोधादिभिरेव प्रतिक्षिप्तत्वेन अतिस्थलत्वात्, परमार्थे स्थिरं चैश्वर्यमभिमत्य निरूढाभिनिवेशानामासुराणां प्रपञ्चमिथ्यात्वकूटयुक्तिभिः प्रतार्यत्वासंभवाच्च। 'यथा वयमनृतप्रायाः, तथा सर्वं जगदिति प्राहुः'इति व्याख्यापि मन्दा; जगच्छब्दस्य चेतनमात्रविषयत्वाभावात् निषेधाना चात्र पूर्वोक्ताकारव्यतिरेकपरत्वात्, 'अप्रतिष्ठमनीश्वरम्' इतिवच्छास्त्रसिद्धप्रतिषेधपरत्वात्, असुराणांच शास्त्रप्रद्वेषशीलत्वात् । अतोऽत्र शास्त्रसिद्धस्य प्रतिषेधपरो-

प्र-पा ॥ * दक्षस्मृ. २-२२. 'यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत्' इत्युत्तरार्धम् ॥

१. वि. पु. १-६-३७. 'प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मसंज्ञितम् ॥ योगिनाममृतं स्थानं स्वात्मसन्तोषकारिणाम् ॥ एकान्तिन स्सदाब्रह्मध्यायिनो योगिनो हि ये । तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरय. ॥ २. अयथाज्ञानभाषणं. पा ॥

शं॥आ अध्यायपरिसमाप्तेः आसुरी सम्पत् प्राणिविशेषणत्वेन प्रदर्श्यते, प्रत्यक्षीकरणे च शक्यते तस्याः परिवर्जनं कर्तुमिति—प्रवृत्तिं च प्रवर्तनं, यस्मिन् पुरुषार्थसाधने कर्तव्ये प्रवृत्तिः तां, निवृत्तिं च एतद्विपरीतां, यस्मात् अनर्थहेतोः निवर्तितव्यं सा निवृत्तिः तां च, जनाः आसुराः न विदुः न जानन्ति । न केवलं प्रवृत्तिनिवृत्ती एव ते न विदुः—न शौचं नापि च आचारः, न सत्यं तेषु विद्यते—अशौचाः अनाचाराः मायाविनः अनृतवादिनो हि आसुराः ॥ ७॥

किंच—असत्यं यथा वयम् अनृतप्रायाः तथा इदं जगत् सर्वम् असत्यम्, अप्रतिष्ठं

आ॥जगतः सत्यं प्रतिष्ठा ईश्वरश्च विष्णुस्तद्वैपरीत्येनाहुः । 'तस्योपनिषत्सत्यस्य सत्य-

ज॥न केवलं जगतो मिथ्यात्वादि वदतामसुरत्वम् 'असत्यमप्रतिष्ठं ते'इत्यनेनोच्यते,किं तु जगजन्मादिकारणं विष्णुं ये न मन्यन्ते,तेषां सर्वेषामपीति भावेनाह—जगत इति।तद्वैपरीत्येनेति—न विद्यते

रा॥ तिष्ठं—तथा ब्रह्मणि प्रतिष्ठितमिति न वदन्ति; ब्रह्मणानन्तेन धृता हि पृथिवी सर्वान् लोकान् बिभर्ति ; यथोक्तं *"तेनेयं नागवर्येण शिरसा विधृता मही। बिभर्ति मालां लोकानां सदेवासुरमानुषाम्' इति ; अनीश्वरं—सत्यसंकल्पेन परेण ब्रह्मणा सर्वेश्वरेण

ता॥ऽयं शब्दः। तच्च सत्यं ब्रह्मैवेति 'सत्यं ज्ञानमनन्तं ब्रह्म'इत्यादिषु प्रसिद्धम्। छान्दोग्ये च चेतनाचेतननियन्तृत्वेन ब्रह्मनामतयासौ निरुक्तः—'तस्य हवा एतस्य ब्रह्मणो नाम सत्यमिति।तानि हवा एतानि त्रीण्यक्षराणि सत्,ति,यम् ,इति। तद्यत्सत्तदमृतम्। अथ यत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा एवंवित्स्वर्गं लोकमेति'इति।अतोऽत्र कपिलगुरुकुमारिलजिनसुगतचार्वाकादिमतानुवर्तिन इवाब्रह्मात्मकं जगदाहुरिति विवक्षामाह—सत्यशब्देति । अप्रतिष्ठशब्देनापि सर्वलोकविरोधादिभिः प्रत्यक्षसिद्धप्रतिष्ठानिषेधासंभवाच्छास्त्रेषु प्रतिष्ठात्वेन उपदिष्टसर्वप्रतिषेधविवक्षामाह—नथेति । तदेवोदाहरणविशेषेण विवृणोति—ब्रह्मणानन्तेनेति । एतेन प्रतिष्ठाशब्दस्य धर्माधर्ममात्रपरत्वेन व्याख्या निरस्ता । सर्वाल्लोकान् बिभर्तीति स्वरूपतः कार्यतश्चेति भावः । आदिकूर्मशेषदिङ्नागप्रभृतिभिर्मही विधृतेति शास्त्रेणोक्ते हि हैतुकैरेवं जल्प्यते-'धर्ता धरित्र्या यदि कश्चिदन्यस्तस्यापरस्तस्य परस्ततोऽन्यः। एवं हि तेषामनवस्थितिस्स्यात्ततो हि भवर्या भुव एव शक्तिः' इति । वायुवेगवशाच्च भूभ्रमणवादं केचिदिच्छन्ति । गुरुत्वान्नित्यपतनं च जैनाः । अनीश्वरशब्दोऽप्यत्र न प्रतिमाराजादिलौकिकेश्वरप्रतिषेधार्थः, तैस्तत्प्रतिषेधाभावात्। यथानुवदन्ति—लोकव्यवहारसिद्ध इति चार्वाकाः' इति । नच ब्रह्मनिषेधमात्रार्थः, 'असत्यम्' इत्यादिना पुनरुक्तेः । अतोऽत्र व्युत्पत्त्यनुसारेणालौकिकनियन्तृनिषेधे तात्पर्यमित्याह—सत्यसंकल्पेनेत्यादिना । अयस्कान्तादिवदचित्स्वभावजीवाजीवात्मकं सर्वं जगदेतन्निरीश्वरमिति जैनादिदृष्ट्या धर्मादिमात्रवशाद्वा, 'परमेश्वरसंज्ञो इति ॥

प्र·पा ॥ * वि. पु. २-५-२७ ॥

१. तै. आनन्द. १-१. सत्यं ज्ञानमनन्तम्ब्रह्मेति-भाषितं जन्मादिसूत्रे- 'यतो वा इमानि भूतानि जायन्ते' इत्यादिकारणवाक्येन प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणस्सकलेतरव्यावृत्तं स्वरूपमभिधीयते-'सत्यं ज्ञानमनन्तं ब्रह्म'इति । तत्र सत्यपदं-निरुपाधिकसत्तायोगिब्रह्माह—तेन विकारास्पदमचेतनं, तत्संसृष्टश्चेतनश्च व्यावृत्तः, नामान्तरभजनार्हावस्थान्तरयोगेन तयोर्निरुपाधिकसत्तायोगरहितत्वात्। ज्ञानपदं-नित्यासङ्कुचितज्ञानैकाकारमाह । तेन कदाचित् सङ्कुचितज्ञानत्वेन मुक्ता व्यावृत्ताः । अनन्तपदं देशकालवस्तुपरिच्छेदरहितं स्वरूपमाह । सगुणत्वात्स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यम् । तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणास्सातिशयस्वरूप - गुणा नित्या व्यावृत्ताः, विशेषणानां व्यावर्तककत्वात् । ततः 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनेन वाक्येन जगज्जन्मादिनावगतस्वरूपं ब्रह्म सकलेतरवस्तुविसजातीयमिति लक्ष्यत इति नान्योन्याश्रयणम्—

२. छा. ८-३-४,५. तस्यहवेति-स्पष्टोऽर्थः । तानिहवेति-सत्-ति-यमिति-सत्यनाम त्र्यक्षरात्मकमित्यर्थः। तद्यत् सत् तदमृतम् अथ यत्ति तन्मर्त्यम्—अत्रामृतमर्त्यशब्दाभ्यां चेतनाचेतने निर्दिश्येते । अथ यद्यन्तेनोभे यच्छति-अमृतत्वमर्त्यत्वरूपेणोपलक्षिते उभे यच्छतीति यमित्यर्थः । तदेवोपसंहरति—यदनेनोभे यच्छति तस्मात् यमिति । अनेन चेतनाचेतनस्वरूपेण उपलक्षिते उभे यतो यच्छति तस्मात् यमित्यर्थः । नामनिर्वचनाभिज्ञं स्तौति-अहरहर्वेति । अहरहः-प्रत्यहम्, आप्रयाणम् । एवंवित् - एतादृशदहरोपासननिष्ठः । स्वर्गम्-सुखरूपम् । लोकंलोक्यमानम्ब्रह्म । एति-प्राप्नोति । ब्रह्मोपासननिष्ठस्य तत्क्रतुन्यायेन ब्रह्मप्राप्तेरेव वक्तव्यतया प्रसिद्धस्वर्गलोकप्राप्त्यसम्भवादिति द्रष्टव्यम् ॥

३ ॥

४ ॥

रा॥मयैतन्नियमितामिति च न वदन्ति ; *'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते' इति ह्युक्तम् ; वदन्ति चैवम्—अपरस्परसंभूतं किमन्यत्—योषित्पुरुषयोः परस्परसंबन्धेन जातमिदं मनुष्यपश्वादिकमुपलभ्यते, अनेवंभूतं किमन्यदुपलभ्यते, किंचिदपि नोपल-

ता॥ज्ञः किमन्यो मय्यवस्थितः' इतिवदाभिमानिकेश्वरशासनाद्वा, देशकालावच्छिन्नेश्वरसमुदायप्रवाहवशाद्वा जगत्प्रवृत्तिरिति हि तत्तन्मतमिति भावः । नियमितमिति—ये तु मद्व्यतिरिक्तान्प्रजापतिपशुपतिप्रभृतीनपि परमेश्वरत्वेन कल्पयन्ति, त आसुरा एवेति भावः । अन्येऽपि केचिदीश्वराः प्रवर्तका दृश्यन्ते; श्रूयन्ते च; तत्कथं भगवतस्सर्वनियमनमित्यत्राह – अहं सर्वस्येति । अन्येषामपि नियन्तॄणां नियमनरूपप्रवृत्तिर्भगवदधीनैव । तथा च सूत्रितं 'कर्ता शास्त्रार्थवत्त्वात्'[1] इत्युपक्रम्य 'परात्तु तच्छ्रुतेः'[2] इति । एवं त्रिभिर्जगत उत्पत्तिस्थितिप्रवृत्तीनां परब्रह्माधीनत्वं नेच्छन्तीत्युक्तं भवति । तत्र जगदुत्पत्तेः प्रतिज्ञातं ब्रह्मनैरपेक्ष्यमन्यतस्सिद्धतयैवमुपपादयन्तीत्याह—वदन्ति चैवमिति। 'अपरस्पर' इत्यादिकं न पूर्वेणैकवाक्यम्, 'किमन्यत्' इत्यादेरनन्वयात्क्लिष्टकल्पनादनुपपत्तेश्च। एतदेवैषामासुरत्वे पर्याप्तं, किमन्यदुच्यत इति कल्पना अध्याहारादिग्रस्ता । वदन्तिचैवमिति तु नाध्याहारादिविवक्षयोक्तम्, 'एतां दृष्टिम्' इत्यनेनैव तत्सिद्धेः। अतः 'कामहेतुकम्' इत्यस्यैवोपपादनाय 'अपरस्परसंभूतम्' इत्याद्युक्तिरित्यभिप्रायेणाह—योषिदिति । क्रियासान्तत्येन हेतुफलभावरहितमिति व्याख्यान्तरमतिमन्दं, प्रसिद्धतमार्थत्यागात् 'कामहेतुकम्' इत्यनन्वयाच्चेत्यभिप्रायेणाह—अनेवंभूतं किमन्यदुपलभ्यतइति। यद्यपि योषित्पुरुषसंसर्गमन्तरेणैव स्वेदजानां स्थावराणां चोत्पत्तिर्दृश्यते; तथापीश्वरमात्रहेतुका देवादिसृष्टिर्नोपलभ्यते; दृश्यमानं त्वयोनिजं योनिजवदेव दर्शनबलादङ्गीकुर्मः ; तत्राप्यन्वयव्यतिरेकावस्थिततत्तत्सामग्रीमात्रात्कार्यसिद्धिसंभवे किमीश्वरेण कर्त्रा कल्पितेनागमिकतया स्वीकृतेन वेति भावः। 'अकिंचित्कामहेतुकम्' इति परोक्तपाठान्तरस्य अप्रसिद्धत्वादिभिरनादरव्यक्त्यर्थं 'किमन्यत् इति' पाठस्य प्रतिनिषेधपरतां व्यनक्ति—किंचिदपि नोपलभ्यतइति । अतइति —अन्वयव्यतिरेकबलादित्यर्थः ।

प्र-पा ॥ * गी. १० ८ ॥　　१. शारी. २-३-३३ ॥　　२. शारी. २-३-४० ॥

शां॥न अस्य धर्माधर्मौ प्रतिष्ठा, अतः अप्रतिष्ठं च—इति ते आसुराः जनाः जगत् आहुः। अनीश्वरं—न च धर्माधर्मसव्यपेक्षम् अस्य शासिता ईश्वरः विद्यते । अतः अनीश्वरं जगत् आहुः । किंच—अपरस्परसम्भूतं कामप्रयुक्तयोः स्त्रीपुरुषयोः अन्योऽन्यसंयो-

आ॥मिति। 'प्राणा वै सत्यं तेषामेष सत्यम्' इति हि श्रुतिः। 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च स्थितं च यच्च सच्च त्यच्चेति । तस्योपनिषत्सत्यस्य सत्यमिति एष ह्येवैतत्सा-

ज॥सत्यमस्येत्यादि। जगतः सत्यं विष्णुरित्यत्र श्रुतिमाह—तस्येति । तस्य विष्णोः सत्यस्य सत्यमिति । उपनिषद्रहस्यं नाम । कथ प्राणा मूर्तामूर्तं जगदिति यावत् । सत्यमित्युच्यते तेषां प्राणानामेष विष्णुः सत्यमित्यर्थः । एवं चेज्जगतो मुख्यं सत्यत्वं न भवेत्। अन्यथा निर्धारणायोगादित्यतो मूर्तामूर्तात्मकस्य जगतः सत्यत्वं तावदन्यथा श्रुत्यैव व्याचष्टे—द्वे वावेति। रूपे प्रतिमे। तत्र मूर्तं स्थितमिति सदिति चोच्यते । अमूर्तं तु यदिति त्यदिति चोच्यत इत्यर्थः । तथा च सच्च त्यच्च सत्यमित्युक्तं भवति । इदानीं जगतः सत्यत्वं विष्णोः श्रुत्या व्याचष्टे—तस्येति । सादयति विशरणादिकं प्रापयतीति सत् । यामयति नियच्छतीति यं सच्च तद्यच्च सत्यमित्यर्थः। प्रतिष्ठेश्वरश्चेति प्रसिद्धमेव। 'अपरस्परसम्भूतम्' इत्यस्यापरं परस्मात् सम्भूतमिति व्याख्यानमसत् , प्रतिषेधप्रकरणात्; अतः परस्परसम्भूतं नभवतीत्याहुरित्येव

रा॥भ्यत इत्यर्थः ; अतस्सर्वमिदं जगत् कामहेतुकमिति ॥ ८॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽशुभाः ॥ ९

एतां दृष्टिमवष्टभ्य-अवलम्ब्य,नष्टात्मानः—अदृष्टदेहातिरिक्तात्मानः, अल्पबुद्धयः-घटादिवत् ज्ञेयभूते देहे ज्ञातृत्वेन देहव्यतिरिक्त आत्मोपलभ्यत इति विवेकाकुशलाः, उग्रकर्माणः—सर्वेषां हिंसकाः जगतः क्षयाय प्रभवन्ति ॥ ९ ॥

---

ता॥'कामहेतुकम्' इति दृष्टकारणोपलक्षणम्। कामप्राबल्यवशात्तदुक्तिः। यथा पाषण्डागमा अपि तत्तत्पुरुषप्रवर्तिता इति तत्तदागमैस्तदातनप्रत्यक्षमूलतयोपदेशपरंपरया च व्यवस्थाप्यन्ते, यथावा चिरन्तननगरवृत्तान्तादयः; एवं कल्पेकल्पे प्रवृत्तमीश्वरशिल्पिनो जगन्नगरवृत्तान्तं संभावितमपि तीव्रौषधकल्पशास्त्रप्रद्वेषादपलपन्तीत्युक्तं भवति ॥ ८ ॥

एतांदृष्टिमिति—विपरीतां दृष्टिमित्यर्थः । 'अवष्टभ्य' इत्याक्रमणादिप्रतीतिव्युदासायाह—अवलम्ब्येति। नित्यस्यात्मनो विनाशाभावात् 'णश अदर्शने' इति धात्वर्थोऽत्र विवक्षित इत्याह—अदृष्टेति । स्वयंज्योतिषः प्रत्यगात्मस्वरूपस्य देहाध्यासाधिष्ठानतया नित्यमुपलम्भाद्देहातिरिक्तत्वेन विशेषितम्। नष्टात्मत्वहेतुरिहाल्पबुद्धित्वमुच्यत इति पुनरुक्तिपरिहाराभिप्रायेणाह—घटादिवदिति। यद्वा पशुमृगादिवत्कर्मवशात्स्वारसिको विविक्तात्मानुपलम्भः । 'अल्पबुद्धयः' इति तु तत्परिहाराशक्तिरुच्यत इति भावः। एवं परावरात्मविषयविपरीतदृष्टिरुक्ता; अथ 'प्रभवन्त्युग्रकर्माणः' इत्यादिना तत्फलमुच्यते । 'उग्रकर्माणः' इत्यत्रोग्रव्रतादिप्रतीतिव्युदासायाह —सर्वेषां हिंसकाइति । अशुभाः स्वसंसर्गिणामपि दोषावहा इत्यर्थः। जगतः क्षयाय प्रभवन्तीति—'अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्' 'परस्परं भावयन्तः श्रेयः परमवाप्स्यथ' इत्यादिप्रतिपादितां भगवन्मूलां लोकभावनधर्ममर्यादामतिलङ्घयन्ति ; तदनुवर्तिनश्चान्येऽपि मन्दाः तदाचरोपदेशादिविस्रम्भादिक्रमेण सर्वस्य जगतस्त्रिवर्गापवर्गरूपवृद्धिविरहिणस्त्रिविधतापाहतिरूपाय क्षयाय भवन्तीत्यर्थः ॥ ९ ॥

---

प्र-पा ॥ १. गी. ३-१० ॥ | २. गी. ३-११ ॥

---

शं॥गात् जगत् सर्वं सम्भूतम्। किम् अन्यत् कामहेतुकं-कामहेतुरेव कामहेतुकम्; किम् अन्यत् जगतः कारणं ? न किञ्चित् अदृष्टकर्मादि कारणान्तरं विद्यते जगतः । 'काम एव प्राणिनां कारणम्' इति लोकायतिकदृष्टिः इयम् ॥ ८ ॥

एतां दृष्टिम् अवष्टभ्य आश्रित्य नष्टात्मानः नष्टस्वभावाः विभ्रष्टपरलोकसाधनाः अल्पबुद्धयः विषयविषया अल्पैव बुद्धिः येषां ते अल्पबुद्धयः प्रभवन्ति उद्भवन्ति उग्रकर्माणः क्रूरकर्माणः हिंसात्मकाः । क्षयाय जगतः—'प्रभवन्ति' इति सम्बन्धः । जगतः अहिताः, शत्रवः इत्यर्थः ॥ ९ ॥

---

आ॥द्यति यामयति चेति' इति प्राचीनशालाश्रुतिः।परस्परसम्भवो ह्युक्तः'अन्नाद्भवन्ति भूतानि'इत्यादिना ॥ ८ ॥

---

ज॥व्याख्येयम्; स्यादेवं यदि परस्परसम्भवो भगवतोऽभिमतः स्यात् इत्यत आह—परस्परेति।यद्वानेन परव्याख्यानासाधुत्वमुपपादयति । भगवता परस्परसम्भवस्योक्तत्वात् तद्वचनं कथमासुरमिति । ईश्वराक्षेपे तात्पर्यमिति चेत्—न, पुनरुक्तिप्रसङ्गात् ॥ ८ ॥

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥** १०

रा॥दुष्पूरं—दुष्प्रापविषयं काममाश्रित्य तत्सिसाधयिषया मोहात्-अज्ञानात् असद्ग्राहान्- अन्यायगृहीतपरिग्रहान्-गृहीत्वा अशुचिव्रताः-अशास्त्रविहितव्रतयुक्ताः दम्भमानमदान्विताः प्रवर्तन्ते ॥ १० ॥

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।**
**कामोपभोगपरमा एतावदिति निश्चिताः ॥** ११

ता॥कामो हि जगद्धेतुरुक्तः; अतस्स एव हि तेषामाश्रयणीयोऽभिमतः; तदाश्रयणेतिकर्तव्यतारूपास्तु दम्भमानादयोऽशुचिव्रतपर्यन्ता इत्युच्यते ‘ कामम् ’ इतिश्लोकेन । दुष्प्रापविषयत्वं दुष्पूरत्वे हेतुः;यद्वा विषयप्राप्तिर्हि कामस्य पूरणम्; अतो दुष्प्रापविषयत्वमेव दुष्पूरत्वम्।आश्रित्य-प्रयोजनतयाभिसंधायेत्यर्थः । तदभिप्रायेणाह —**तत्सिसाधयिषयेति**। विपरीतप्रवृत्तिहेतुभूतं कृत्याकृत्यविवेकान्धत्वमिह मोहशब्देन विवक्षितमित्याह-**अज्ञानादिति**। असत् ग्रहणम्-आर्जनं येषां तेऽत्रासद्ग्राहाः। धर्माभिसंधिमन्तो हि न्यायेनार्जयन्ति; कामप्रवणास्तु चौर्यादिभिस्तदुपकरणानीत्याह —**अन्यायगृहीतपरिग्रहानिति** । परिग्रहशब्दोऽत्र परिग्राह्यपरः । ‘ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान्’ इति तस्यैव विवरणम्। अत एवाशुभाभिनिवेशानिति व्याख्याप्यत्र मन्दा । **गृहीत्वेति** तादात्विकविनियोगपरत्वादात्मीयत्वाभिमानपरत्वाद्वा पुनरुक्तिपरिहारः । पाषण्डागमादिनिर्दिष्टानि हि व्रतानि पुरुषस्य दर्शनस्पर्शनाद्ययोग्यताहेतुत्वात्स्वयमशुचीन्यिवेत्यभिप्रायेणाह —**अशास्त्रविहितव्रतयुक्ताइति** । धर्माभिसंधिरहितानामपि तामसानां विषहरणपाषाणस्फोटनादित्यस्तम्भनप्रतिमाजल्पादिवञ्चनोपायैर्वशीकृतानां वेदबाह्येषु व्रतेषु मात्रया संयोगो भवति; यद्वा शौर्याहंकारादिमूलश्शास्त्रविरुद्धस्सङ्कल्पोऽत्र व्रतशब्दाभिप्रेतः । शास्त्रीयेष्वपि व्रतेषु भगवत्समाराधनविवक्षामजानतामयथाशास्त्रकरणादशास्त्रविहितप्रयुक्तत्वम् । दम्भमानौ प्रागेव व्याख्यातौ । मदोऽत्र धनाभिजनविद्यादिमूलमयथायथचेष्टितारम्भकमौद्धत्यम् ॥ १० ॥

---

शं॥ते **च कामम् आश्रित्य अवष्टभ्य दुष्पूरम् अशक्यपूरणं दम्भमानमदान्विताः दम्भश्च मानश्च मदश्च दम्भमानमदाः तैः अन्विताः दम्भमानमदान्विताः मोहात् अविवेकतः गृहीत्वा उपादाय असद्ग्राहान् अशुभनिश्चयान् प्रवर्तन्ते लोके अशुचिव्रताः अशुचीनि व्रतानि येषां ते अशुचिव्रताः ॥ १० ॥**

---

आ॥**दुष्पूरो हि कामः । ‘ पाताल इव दुष्पूरो मा हि क्लेशयते सदा ’ इति मोक्षधर्मे ॥ १० ॥**

---

ज॥‘काममाश्रित्य दुष्पूरम्’इति कामस्य दुष्पूरत्वं किं विशेषणम्?नेति ब्रूमः;किं तर्हि?कामस्य प्रवृत्तिहेतुत्वे हेतुरयमुच्यत इति भावेनाह—**दुष्पूरो हीति** । विशेषणमेव किं न स्यात् , कामस्य दुष्पूरत्वाव्यभिचारादिति भावेनाह—**पाताल इवेति** ॥ १० ॥

रा॥अद्य श्वो वा मुमूर्षवः चिन्ताम् अपरिमेयाम्—अपरिच्छेद्यां प्रलयान्तां-प्राकृतप्रलयावधिकालसाध्यविषयाम् उपाश्रिताः, तथा कामोपभोगपरमाः—कामोपभोग एव परमपुरुषार्थ इति मन्वानाः,एतावदिति निश्चिताः—इतोऽधिकः पुरुषार्थो न विद्यत इति संजातनिश्चयाः ॥ ११ ॥

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**
**ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १२**

आशापाशशतैः-आशाख्यपाशशतैर्बद्धाः कामक्रोधपरायणाः-कामक्रोधैकनिष्ठाः कामभोगार्थमन्यायेनार्थसंचयान् प्रतीहन्ते ॥ १२ ॥

---

ता॥एवं प्रवर्तकानामुपर्युपरिमनोविकारादय उच्यन्ते—'चिन्तामपरिमेयाम्' इत्यादिभिः । अशक्यविषयवृथाप्रयासव्यञ्जनायाह—अद्य श्वो वेति। 'अपरिमेयाम्' इत्यसंख्येयविषयत्वेनानन्तशाखत्वं विवक्षितमित्याह—अपरिच्छेद्यामिति। 'प्रलयान्ताम्' इत्यत्र शरीरपातावधिकत्वोक्तिर्मन्दा; अनन्तकालसाध्यमल्पकालेन सिसाधयिषन्तीति तु व्यामोहातिशयख्यापनेन सप्रयोजनमिदम् ; प्रलयशब्दश्च प्रसिद्धतमविषय उचितः ; चिन्तयितॄणां पुरुषाणामाप्रलयस्थायित्वाभावाच्चिन्तायास्स्वरूपेण प्रलयान्तत्वं चायुक्तमित्यभिप्रायेणाह—प्राकृतप्रलयावधिकालसाध्यविषयामिति । असंख्येयेषु चिन्ताविषयेष्वेकैकोऽपि दुस्साध इति भावः । प्रयोजनतयाभिमतेषु कामोपभोग एव परमो येषां तेऽत्र कामोपभोगपरमाः; तदाह—कामोपभोगएवेति । स्वर्गापवर्गप्रतिषेधार्थ एतावच्छब्द इत्याह—इतोऽधिक इति।सञ्जातनिश्चया इति—अत्र निश्चितशब्दे 'भुक्ता ब्राह्मणाः' इतिवत्कर्तरि क्त इति भावः ॥ ११ ॥

चिन्ता कर्तव्यविषया; आशा तु फलविषया ; आशाविषयाणामसंख्यातत्वात्तदाशानामपि शतशाखत्वेन तथात्वम् । 'कामक्रोधपरायणाः' इत्यत्र क्रोधस्य परमप्राप्यतया तदभिमानविषयत्वाभावात्कामक्रोधयोरैकाग्र्यमात्रं विवक्षितमित्याह—कामक्रोधैकनिष्ठा इति। अयनशब्दोऽत्र आश्रयपरः ; कामो हि विहन्यमानः क्रोधात्मना परिणमतीति प्राक्प्रपञ्चितस्मारणे तात्पर्यान्न पुनरुक्तिः । कामोपभोगार्थमिति—विषयानुभवार्थं परमनिश्श्रेयससाधनभूतपरमपुरुषसमाराधनार्थं यत्कर्तव्यं, हन्त तदनर्थावहातिक्षुद्रक्षणिकसुखाभासार्थमासीदिति भावः। अन्यायेनेति—नहि यज्ञादिवन्न्यायार्जितैः कामोपभोगो निष्पाद्यत इति भावः । द्वितीयान्वयज्ञापनायाह—प्रतीति । प्रवर्तन्ते ईहन्त इत्युभयमत्र समानविषयं, तत्र ईहया निष्पादयन्तीति विवक्षितत्वात् 'अर्थसञ्चयान्'इति द्वितीयान्वयः॥ १२॥

---

शं॥किंच—चिन्ताम् अपरिमेयां च न परिमातुं शक्यते यस्याः चिन्तायाः इयत्ता,सा अपरिमेया,ताम् अपरिमेयां प्रलयान्तां मरणान्ताम् उपाश्रिताः,सदा चिन्तापराः इत्यर्थः। कामोपभोगपरमाः, काम्यन्ते इति कामाः विषयाः शब्दादयः, तदुपभोगपरमाः 'अयमेव परमः पुरुषार्थो यः कामोपभोगः' इत्येवं निश्चितात्मानः, एतावत् इति निश्चिताः ॥

आशापाशशतैः आशा एव पाशाः तच्छतैः अशापाशशतैः बद्धाः सन्तः सर्वतः आकृष्यमाणाः,कामक्रोधपरायणाः कामक्रोधौ परम् अयनम् आश्रयः येषां ते कामक्रोधपरायणाः, ईहन्ते चेष्टन्ते कामभोगार्थं कामभोगप्रयोजनाय न धर्मार्थम् अन्यायेन परस्वापहरणादिना इत्यर्थः । किम्? अर्थसञ्चयान् अर्थप्रचयान् ॥ १२ ॥

**इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।**

**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥** १३

रा॥**इदं**—क्षेत्रपुत्रादिकं सर्वं मया मत्सामर्थ्येनैव लब्धं, नादृष्टादिना;इमं च मनोरथमहमेव प्राप्स्ये, नादृष्टादिसहितः ; इदं धनं मत्सामर्थ्येन लब्धं मे अस्ति, इदमपि पुनर्मे मत्सामर्थ्येनैव भविष्यति ॥ १३ ॥

**असौ मया हतश्शत्रुर्हनिष्ये चापरानपि ।**

असौ मया बलवता हतश्शत्रुः, अपरानपि शत्रूनहं शूरो धीरश्च हनिष्ये, किमत्र मन्दधीभिर्दुर्बलैः परिकल्पितेनादृष्टपरिकरेण ॥

तथाच—

**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥** १४

ता॥एवं'सहस्रभगसन्दर्शनात्मकश्च महानन्दलक्षणो मोक्षः' इत्यादिभिः कामोपभोगः परमपुरुषार्थ इति कृत्वा तदर्थमर्थपुरुषार्थस्वीकार इत्युक्तम् ; अथ तत्र प्रवृत्तस्य व्यतिरेकसंज्ञासंस्थावस्थितयोगिवलब्धालब्धकृताकृतप्रत्यवेक्षणमुच्यते—**इदमद्ये**त्यादिना । एतेन पूर्वोक्तचिन्ताविषयानन्त्यमप्युदाहृतं भवति । वक्ष्यमाणधनव्यतिरिक्तविषयत्वद्योतनाय पुत्रक्षेत्रादिशब्दः । सात्त्विकानामीश्वराद्यधीनकृताकृतप्रत्यवेक्षणाव्यवच्छेदाय अहङ्कारगर्भतयापि तथाविधानुसन्धानस्य भ्रान्तिरूपत्वं 'मया'इत्यनेन सूच्यत इत्याह—**मत्सामर्थ्येनैवे**ति । एवकाराभिप्रेतं विवृणोति—**नादृष्टादिने**ति । एवमेवोत्तमपुरुषाकृष्टाहंशब्दव्याख्यानरूपे 'अहमेव' इत्यादावप्यभिप्रायः । 'इदमस्तीदमपि'इति चिन्तायां विषयभूयस्त्वज्ञापनम् ॥ १३ ॥

एवमिष्टप्राप्तावभिप्राय उक्तः; अथानिष्टनिवृत्तौ उच्यते—**असौ मये**ति।अत्र 'मया'इत्यादेश्शत्रुहननोपयुक्तगुणवत्ताभिमानगर्भतामाह—**बलवते**ति । शूरः व्याघ्रादिवत्परबलं तृणीकृत्य निर्भयप्रवेशशीलः, 'शूरं भीरुं कविज्ञडम्' इति शूरस्य भीरुप्रतियोगिकत्वेन पाठात् । वीरोऽत्र पराक्रमे ग्लान्यादिविकाररहितः । प्रेक्षावदनन्तपुरुषप्रवृत्तिविषयादृष्टानादरेण स्वसामर्थ्यमात्रावलम्बने को हेतुरित्यत्राह—**किमत्रे**ति । **मन्दधीभिरि**ति—अयमभिप्रायः—अर्थादिग्रहणलुब्धैः निगूढाभिप्रायैर्ग्रन्थैः प्रतारिता दानयज्ञादिषु प्रवृत्तास्सिद्धमप्यर्थं परित्यज्य कृपणा भवन्ति—इति। **दुर्बलैरि**ति—प्रबलो हि न प्रतारयितुं शक्यते, 'न भेदसाध्या बलदर्पिता जनाः' इति न्यायादिति भावः । **परिकल्पितेने**ति—न तु लोकायतशब्दविवक्षितप्रत्यक्षान्वयव्यतिरेकरूपप्रमाणसिद्धेनेत्यर्थः । एवमिष्टप्राप्त्यनिष्टपरिहारयोस्स्वसामर्थ्यमात्राधीनत्वभ्रम उक्तः ; अतस्स्वसामर्थ्यादावपि कारणभूतादृष्टादिनैरपेक्ष्यभ्रम उच्यते—'ईश्वरोऽहम्' इत्यादिनेत्याह—**तथाचे**ति । सर्वेश्वरवदीशितव्यत्वाभावोऽप्यत्रेश्वरशब्देन विवक्षित

प्र-पा ॥ १ ॥ युज्यते। न भेदसाध्या बलदर्पिता जनाः पराक्रमस्त्वेष

२. श्रीरामायणे-सुन्दरकाण्डे. ४१. सर्गे.३.श्लो॥ 'ममेह रोचते' ॥

' न साम रक्षस्सु गुणाय कल्पते न दानमर्थोपहितेषु

शं॥**ईदृशश्च** तेषाम् अभिप्रायः—इदं द्रव्यम् अद्य इदानीं मया लब्धम् । इदं च अन्यत् प्राप्स्ये मनोरथं मनस्तुष्टिकरम् । इदं च अस्ति इदमपि मे भविष्यति आगामिनि संवत्सरे पुनः धनं, तेन अहं धनी विख्यातः भविष्यामि इति ॥ १३ ॥

असौ देवदत्तनामा मया हतः दुर्जयः शत्रुः । हनिष्ये च अपरान् अन्यान् अपि ।

रा ॥ ईश्वरोऽहं—स्वाधीनोऽहम् , अन्येषां चाहमेव नियन्ता, अहं भोगी—स्वत एवाहं भोगी, नादृष्टादिभिः; सिद्धोऽहं—स्वतस्सिद्धोऽहं, न कस्माच्चिददृष्टादेः; तथा स्वत एव बलवान्; स्वत एव सुखी ॥ १४ ॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५

अहं स्वतश्चाढ्योऽस्मि; अस्मिन् लोके मया सदृशः कोऽन्यस्स्वसामर्थ्यलब्धसर्वविभवो विद्यते ; अहं स्वयमेव यक्ष्ये; दास्यामि; मोदिष्ये ; इत्यज्ञानविमोहिताः—ईश्वरानुग्रहनिरपेक्षेण स्वेनैव यागदानादिकं कर्तुं शक्यमित्यज्ञानविमोहिता मन्यन्ते ॥ १५ ॥

---

ता॥इत्याह—स्वाधीनोऽहमिति । स्वव्यतिरिक्तसमस्तनियन्तृत्वाभिमानोऽप्यत्राभिप्रेत इत्याह—अन्येषां चेति । 'तवांसकूटे भूमण्डलम्, त्वं हि सर्वेषां नियन्ता' इत्युक्ते तथाविधत्वाभिधानादेव हि तथाविधानां प्रीत्यादिसम्भवः । पूर्वापरानुगुण्यात् 'भोगी' इति भोगसामर्थ्यपरम्; तत्राहं चेत्—न धर्मस्वभावादेवम्भूत इत्यहंशब्दाभिप्रायमाह—स्वत एवेति । सिद्धः—ज्ञानाद्यतिशयसम्पन्न इत्यर्थः । सिद्धसमीहित इति वा । सुखीति—पुत्रजन्मादिसुखयोगीत्यर्थः । भोगिसुखशब्दयोर्हेतुफलविवक्षया वा पौनरुक्त्यपरिहारः । एषामीश्वरत्वादीनामभिजनान्तानां भुक्तशिष्टकर्ममूलत्वं प्रागेव श्रुतिस्मृतिभिरुपपादितम् ॥ १४ ॥

अस्मिल्लोके इति—लोकान्तरं तु नास्तीति हि तदभिप्रायः; यद्वा अस्तिशब्दाभिप्रेतः सार्वकालिकसमनिषेधविवक्षया 'अस्मिल्लोके' इति निर्देशः । यावल्लोकमन्वेषणेऽपीति भावः । प्रकृतैरेवाकारैरेकैकशोऽपि सदृशः प्रतिषिध्यत इत्याह—स्वसामर्थ्येति । मया सदृशः क इत्येतावति वक्तव्ये अन्यशब्दः-अन्यत्वमेवासामर्थ्ये हेतुरिति द्योतनार्थः । यद्वा, मत्तोऽन्यो मया सदृशो नास्ति ; अहमेव मया सदृश इति 'रामरावणयोर्युद्धं रामरावणयोरिव' इतिवद्वाच्यम् । 'यक्ष्ये दास्यामि' इत्येतत्सात्त्विकविडम्बनमात्रविश्रान्तेन दम्भेनैव ; 'दम्भेनाविधिपूर्वकम्' इतिह्यनन्तरं विशेष्यते । मोदिष्य इति—न स्वर्गादिविवक्षया, अपितु यजमानत्वादिनिमित्तमहच्छब्दादिलाभेन । 'यक्ष्ये' इत्यादिप्रतिपत्तावपि प्राकरणिकीमहङ्कारोपहतिं दर्शयति—ईश्वरानुग्रहनिरपेक्षेणेति । इत्यज्ञानविमोहिता इत्येव पर्याप्तं ; मन्यन्त इति तु वैशद्यार्थमुक्तम् ॥ १५ ॥

---

प्र-पा॥१. श्रीरामायणे-युद्धकाण्डे.११०.सर्गे 'गन्धर्वाप्सरसां संघा दृष्ट्वा युद्धमनूपमम् । गगनं गगनाकारं सागरस्सागरोपमः ॥ २४ ॥ रामरावणयोर्युद्धं रामरावणयोरिव । एवं ब्रुवन्तो ददृशुस्तद्युद्धं रामरावणम्' ॥ २५ ॥

---

शं॥किम् एते करिष्यन्ति तपस्विनः?सर्वथाऽपि नास्ति मत्तुल्यः।कथम्?—ईश्वरः अहम्, अहं भोगी । सर्वप्रकारेण च सिद्धः अहं सम्पन्नः पुत्रैः नप्तृभिः, न केवलं मानुषः, बलवान् सुखी च अहमेव ॥ १४ ॥

आढ्यः धनेन, अभिजनवान् सप्तपुरुषं श्रोत्रियत्वादिसम्पन्नः, तेनापि न मम तुल्यः अस्ति कश्चित् । कः अन्यः अस्ति सदृशः तुल्यः मया? किं च—यक्ष्ये यागेनापि

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६

रा॥अदृष्टेश्वरादिसहकारमृते स्वेनैव सर्वं कर्तुं शक्यमिति कृत्वा एवं कुर्याम्, तच्च कुर्याम्, अन्यच्च कुर्यामित्यनेकचित्तविभ्रान्ता एवंरूपेण मोहजालेन समावृताः कामभोगेषु प्रकर्षेण सक्ताः मध्ये मृताः अशुचौ नरके पतन्ति ॥ १६ ॥

आत्मसंभाविताः स्तब्धाः धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७

आत्मनैव संभाविताः, आत्मनैवात्मानं संभावयन्तीत्यर्थः, स्तब्धाः-परिपूर्णं मन्यमाना न किंचित्कुर्वाणाः, कथं ? धनमानमदान्विताः—धनेन विद्याभिजनाभिमनेन च

ता॥ईश्वरे न्यस्तभरा हि प्रायशो निश्चिताः, तद्व्यतिरेकमाह—स्वेनैव सर्वमिति। इति कृत्वा—इति मत्वेत्यर्थः । चिन्तारूपवृत्तियुक्तं मन एव चित्तम्, तत्प्रवृत्तिभेदादनेकत्वोक्तिः; तद्दर्शयति—एवं कुर्यामित्यादिना । विभ्रान्ताः-विक्षिप्ता इत्यर्थः । यद्वा विभ्रान्तिर्विपरीतज्ञानम्; मोहस्त्वज्ञानम् । अथवा 'अन्यथा चिन्तितं कार्यं देवेन कृतमन्यथा' इति न्यायाचिन्तानामेव भ्रान्तिरूपत्वमाह—एवंरूपेणेति । 'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इत्ययमर्थ उपसर्गेण द्योत्यत इत्याह—प्रकर्षेण सक्ताइति । 'इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम्। एवमीहासमायुक्तं कृतान्तः कुरुते वशे' इत्युक्तमाह—मध्ये मृताइति। अशुचौ कामभोगे प्रसक्तानां तथाविधमेव फलमित्यभिप्रायेण नरकस्याशुचित्वविशेषणम्। पूयरुधिरवसादिमयत्वं चाशुचित्वम्॥१६॥

'आत्मसंभाविताः'इत्यत्र परसंभावनाप्रसङ्गरहिततया 'अब्भक्षः' इतिवदवधारणगर्भतामाह—आत्मनैव संभाविताइति।आत्मप्रशंसादिरूपदोषव्यक्त्यर्थमाह-आत्मनैवात्मानमिति। परैस्संभाविता अपि हि सन्तो लज्जन्ते।स्तब्धताहेतुः-परिपूर्णं मन्यमाना इति।न किंचित्कुर्वाणाइति तु शब्दार्थः। किंचित्-गुरुवन्दनादिकमपीत्यर्थः। धनादिदृष्टसंपत्तिमदेन अदृष्टवैकल्यतिरस्कार इति वक्तुं पारलौकिकाप्रवृत्तिहेतुं शङ्कते—कथमिति।'विद्यामदो धनमदस्तृतीयोऽभिजनो मदः'इति सन्नियोगशिष्टत्वाद्ध नस्यात्रोक्तेश्च तत्समभिव्याहृतो मदहेतुर्मानो विद्याभिजननिबन्धन इत्याह—विद्याभिजनाभिमाने-

प्र-पा ॥ १ ॥
२. वि. पु. ४-१०-२३ ॥
३ ॥
४. भारते उद्योगपर्वणि, ३४-४६. धृतराष्ट्रेण दुर्योधनादिश्रेयस्साधनप्रश्ने विदुरेण नीतिकथनपूर्वकं युधिष्ठिराय राज्यदानस्य तत्साधनत्वकथनवसरे-श्री-विदुरः. 'मदा एतेऽवलिप्तानामेत एव सतान्दमाः' इत्युत्तरार्धम् ॥

शं॥अन्यान् अभिभविष्यामि, दास्यामि नटादिभ्यः,मोदिष्ये हर्षं च अतिशयं प्राप्स्यामि, इति एवम् अज्ञानविमोहिताः अज्ञानेन विमोहिताः विविधम् अविवेकभावम् आपन्नाः ॥

अनेकचित्तविभ्रान्ताः उक्तप्रकारैः अनेकैः चित्तैः विविधं भ्रान्ताः अनेकचित्तविभ्रान्ताः, मोहजालसमावृताः मोहः अविवेकः अज्ञानं, तदेव जालमिव आवरणात्मकत्वात्, तेन समावृताः । प्रसक्ताः कामभोगेषु तत्रैव निषण्णाः सन्तः तेन उपचितकल्मषाः पतन्ति नरके अशुचौ वैतरण्यादौ ॥ १६ ॥

रा॥जनितमदान्विताः,नामयज्ञैः—नामप्रयोजनैर्यष्टेतिनाममात्रप्रयोजनैर्यज्ञैः यजन्ते ;तद-पि दम्भेन हेतुना यष्टृत्वख्यापनाय, अविधिपूर्वकम्—अयथाचोदनं यजन्ते ॥ १७ ॥

ते चेदम्भूता यजन्त इत्याह—

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८

अनन्यापेक्षोऽहमेव सर्वं करोमीत्येवंरूपमहंकारमाश्रिताः तथा सर्वस्य करणे मद्बलमेव पर्याप्तमिति च बलम् , अतो मत्सदृशो न कश्चिदस्तीति च दर्पम् , एवंभूतस्य मम काममात्रेण सर्वं संपत्स्यत इति कामं, मम ये अनिष्टकारिणस्तान् सर्वान् हनिष्यामीतिच क्रोधम्, एवमेतान् संश्रिताः स्वदेहेषु परदेहेषु चा-

ता॥नचेति।नामसंबन्धिनो यज्ञा नामयज्ञाः; संबन्धश्चात्र धर्मादिप्रयोजनाभिसन्धिव्युदासाय फलफलिभावेनेत्यभिप्रायेणाह-नामप्रयोजनैरिति।कीर्त्यादिष्वपि नामशब्दप्रयोगात्तदभिसंधेश्च 'दम्भेन'इत्यादिना सिद्धेस्संज्ञायां प्रसिद्धिप्रकर्षादपहासार्थत्वौचित्याच्च—यष्टेतिनाममात्रप्रयोजनैरित्युक्तम् । अत एव 'यज्ञसमाख्यामात्रम्; न तु वस्तुतोऽसौ यज्ञः' इति व्याख्यापि मन्दा प्रदर्शिता ; अविधिपूर्वकत्वोक्त्यैव तदर्थसिद्धेश्च।दम्भेन हेतुनेत्यभिसंधिविशेषस्य हेतुत्वोक्तिः।यष्टृत्वख्यापनायेति तु विषयतः प्रयोजनतश्च तद्विवरणम्। विधिरत्र विधायकं वाक्यम्। तदुक्तप्रकारपरित्यागोऽत्राविधिपूर्वकत्वमित्याह—अयथाचोदनमिति ॥ १७ ॥

पुनरुक्त्यादिपरिहारायानन्तरश्लोकस्य सात्त्विकयजनेतिकर्तव्यतारूपगुणवैपरीत्यपरत्वमाह—तेचेदम्भूता यजन्तइति । भगवानेव सर्वं कारयतीत्यस्य प्रतिक्षेपोऽहंकारः,यत्परिहाराय स्मर्यते'यैर्ह्यहंकारमाश्रित्य यज्ञदानतपःक्रियाः । कुर्वस्तत्फलमाप्नोति पुनरावर्तनं तु तत्' इति । बलवत्त्वमात्रस्यादोषत्वेऽपि ' भगवतो बलेन' इत्यादेः विपरीतं स्वबलपर्याप्त्यनुसंधानम्, तदुभयमूलो दर्पस्सर्वावज्ञानहेतुः पूज्यपूजाप्रतिस्पर्धी. भगवत्प्रसादादेवेष्टप्राप्त्यनिष्टपरिहारावित्यस्य विपरीतौ कामक्रोधाविति क्रमेण दाम्भिकयज्ञेतिकर्तव्यताक्रमं विवृणोति—अनन्यापेक्षइत्यादिभिः। संश्रिताः-सम्यगाश्रिताः, निरपेक्षहेतुत्वेनाभिमन्यमाना इत्यर्थः।अत्र परदेहेष्विति यज्ञानुकूलप्रतिकूलऋत्विक्तस्करादिविवक्षया। सप्तम्या स्थितिस्सिद्धा ; सा च प्रवर्तनाद्यर्थमिति श्रुत्यादिभिः प्राक्प्रपञ्चितम् ; तत्प्रतिपत्तिविरुद्धं स्मारयति—

प्र-पा ॥ १ ॥ २. 'भगवतो बलेन भगवतो वीर्येण भगवतस्तेजसा भगवतः कर्मणा भगवतः कर्म करिष्ये' इति बलमन्त्रइति अहोबिलश्रीनारायणयतीन्द्रवर्यैः कृताह्निकग्रन्थे ॥

शं॥आत्मसम्भाविताः सर्वगुणविशिष्टतया आत्मनैव सम्भाविताः आत्मसम्भाविताः स्तब्धाः अप्रणतात्मानः धनमानमदान्विताः धननिमित्तः मानः मदश्च, ताभ्यां धनमानमदाभ्याम् अन्विताः यजन्ते नामयज्ञैः नाममात्रैः यज्ञैः ते दम्भेन धर्मध्वजितया अविधिपूर्वकं विधिविहिताङ्गेतिकर्तव्यतारहितम् ॥ १७ ॥

अहङ्कारम् अहङ्करणम् अहङ्कारः, विद्यमानैः अविद्यमानैश्च गुणैः आत्मनि अध्यारोपितैः 'विशिष्टात्मा अहम्' इति मन्यते; सः अहङ्कारः अविद्याख्यः कष्टतमः, सर्वदोषाणां मूलं सर्वानर्थप्रवृत्तीनां च, तम्, तथा बलं पराभिभवनिमित्तं कामरागान्वि-

रा॥वस्थितं सर्वस्य कारयितारं पुरुषोत्तमं मामभ्यसूयकाः प्रद्विषन्तः-कुयुक्तिभिर्मत्स्थितौ दोषमाविष्कुर्वन्तो मामसहमाना अहंकारादिकान् संश्रिता यागादिकं सर्वं क्रियाजातं कुर्वत इत्यर्थः ॥ १८ ॥

ता॥**सर्वस्य कारयितारमिति।** हितप्रवर्तनमेवासूयाहेतुरिति भावः। **पुरुषोत्तममिति** – यद्वैलक्षण्यविज्ञानमात्रात्कृतकृत्यो भवतीत्युक्तं. सहि महोपकारी द्वेषासूयास्पदमेषामिति भावः । सर्वप्रवर्तनादि गुणकथनं, गुणेषु दोषाविष्करणरूपासूयालक्षणव्यक्तयर्थंच । पुरुषोत्तमप्रकरणे हि स्मृत्यादिप्रवर्तनाय 'सर्वस्यचाहं हृदि सन्निविष्टः' इत्युक्तम् : तदेवात्र 'मामात्मपरदेहेषु' इत्यनेन स्मार्यत इति च भावः। 'प्रद्विषन्तोऽभ्यसूयकाः' इत्यनयोः प्रातिलोम्येन हेतुकार्यतयान्वयक्रमं यजन्त इत्यनुकर्षणेन वाक्यसमाप्तिं चाह—**कुयुक्तिभिरिति** । ईश्वरपरतन्त्रत्वे कथं कर्मवश्यता ? फलानां कर्ममूलत्वे च किमीश्वरेणेत्यादयः कुयुक्तयः । अनसूयालक्षणव्याजेनासूयामपि बृहस्पतिरलक्षयत् —'न गुणान्गुणिनो हन्ति स्तौति मन्दगुणानपि । नान्यदोषेषु रमते सानसूया प्रकीर्तिता' इति। असहिष्णुत्वरूपेण लक्षणेन द्वेषं विवृणोति—**मामसहमानाइति।** असहमानत्वं च तदाज्ञातिलङ्घनपर्यन्तमनुसंधेयम्। एतच्च स्ववंश्यानामप्यशुचिनरकपतने निदानम् ; यथोच्यते 'मज्जन्ति पितरस्तस्य नरके शाश्वतीस्समाः । द्विष्याद्यो विबुधश्रेष्ठं देवं नारायणं हरिम्' इति, एवं 'ये द्विषन्ति महात्मानं न स्मरन्ति च केशवम् । न तेषां पुण्यतीर्थेषु गतिस्संसर्गिणामपि' इत्यादि चात्रानुसंधेयम् । 'नामयज्ञैः' इत्यस्योपलक्षणमाह—**यागादिकं सर्वमिति** ॥ १८ ॥

| | |
|---|---|
| **प्र-पा** ॥ १. गी. १५. १५ ॥ | ३. भारते-शा-मो. ३५६-६॥ |
| २. अत्रिस्मृतौ १-३४॥ | ४. भारते-शान्ति-मो. ३३६ ३६ ॥ |

शं॥**तम्, दर्प-दर्पो नाम यस्य उद्भवे धर्मम् अतिक्रामतीति सः, अयम् अन्तःकरणाश्रयः दोषविशेषः, कामं स्त्र्यादिविषयम्, क्रोधम् अनिष्टविषयम्, एतान् अन्यांश्च महतो दोषान् संश्रिताः । किं च—ते माम् ईश्वरम् आत्मपरदेहेषु स्वदेहे परदेहेषु च तद्बुद्धिकर्मसाक्षिभूतं मां प्रद्विषन्तः, मच्छासनातिवर्तित्वं प्रद्वेषः, तं कुर्वन्तः,अभ्यसूयकाः सन्मार्गस्थानां गुणेषु असहमानाः ॥ १८ ॥**

आ॥**मामात्मपरदेहेष्विति न कस्य चिद्विष्णुः कारयिता। यदि स्यान्मामपीदानीं कारयत्वित्यादि 'ईश्वरो यदि सर्वस्य कारकः कारयेत माम् । अद्येति वादिनं ब्रूयात्सदाऽधो यास्यसि' इति सामवेदे यास्कश्रुतिः ॥ १८ ॥**

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये षोडशोऽध्यायः ॥ १६ ॥

ज॥भगवद्द्वेषस्यात्मपरदेहाधिकरणत्वं कथमित्यत आह—**मामिति** । कुतो न कारयिता, यदि स्यात्तर्हीदानीमकुर्वाणं मामपि कारयतु, कुर्वाणं च निवारयतु इत्यर्थः । सदाधो नित्यनरकम् ॥ १८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां षोडशोऽध्यायः ॥ १६ ॥

**तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९**

**रा॥य एवं मां द्विषन्ति, तान् क्रूरान् नराधमानशुभानहमजस्रं संसारेषु जन्मजरामरणादिरूपेण परिवर्तमानेषु संतानेषु, तत्राप्यासुरीष्वेव योनिषु क्षिपामि—मदानुकूल्यप्रत्यनीकेष्वेव जन्मसु क्षिपामि:तत्तज्जन्मप्राप्त्यनुगुणप्रवृत्तिहेतुभूतबुद्धिषु क्रूरास्वहमेव संयोजयामीत्यर्थः ॥ १९ ॥**

ता॥एवंविधप्रद्वेषादिपूर्वकयागादेरपि यथोचितप्रतिकूलफलप्रदोऽहमेवेत्युच्यते—'तानहम्' इत्यादिश्लोकद्वयेन । वैषम्यनैर्घृण्यपरिहारार्थस्तानित्यनुवाद इत्यभिप्रायेणाह—**य एवं मां द्विषन्तीति** । अत्र चतुर्भिर्विशेषणैः 'न मां दुष्कृतिनः' इत्यादिनोक्ताश्चतुर्विधा दुष्कृतिन एव विवक्षिता इति तद्व्याख्यानम्। तथाहि—नराधमशब्दस्तावत्स एव, 'आसुरं भावमाश्रिताः' इत्येतत्तु द्विषन्त इत्येतत्समानार्थतया प्रागेव व्याख्यातम्, एवं क्रूराशुभशब्दावपि यथायोगं मूढादिशब्दसमानार्थौ नेतव्यौ । अत्राविभागेन योजनं चासुरराश्यैक्यात् । जन्मादिचक्रपरिवृत्तिष्वविच्छिन्नतयैकाकारेण सरणात् संसारस्संतानः। संसरति पुरुषोऽस्मिन्निति अधिकरणार्थघञन्तोऽत्र संसारशब्दः । तद्बहुत्वोक्तिश्चक्रपरिवृत्त्यानन्त्यादित्याह—**जन्मजरेत्यादिना** । संसारशब्दस्य सदसज्जन्मसाधारणत्वाद्विशेष्यत इत्याह—**तत्रापीति** । 'एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्' इत्याद्युक्तभगवद्योगानुकूलसात्त्विकजन्मविशेषव्यवच्छेदाय तामसत्वम्'आसुरीष्वेव'इत्युच्यत इत्याह-**मदानुकूल्यप्रत्यनीकेष्विति**।ईदृशं प्रतिकूलजन्म देवादिचतुर्विधयोनिष्वपि द्रष्टव्यमिति । 'एष एवासाधु कर्म कारयति तं यमधो निनीषति' इत्यादिश्रुत्यनुसारेण 'क्षिपामि' इत्युक्तस्य द्वारमाह—**तत्तदिति**। पापप्रवृत्तिहेतुभूतक्रूरबुद्ध्यादिप्रदानमपि प्राचीनप्रद्वेषादिफलभूतत्वान्नेश्वरस्य वैषम्यनैर्घृण्यापादकम् ॥ १९ ॥

**प्र-पा** ॥ १. गी. ६-४२ ॥

२ कौषीत.३-९.'एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधुकर्म कारयति तं यमधो निनीषति' इति॥अस्याःश्रुतेर्विषयविभागो भगवता भाष्यकारेणैव श्रीभाष्ये (२-३-४१) अनुगृहीतः। तथाहि'नन्वेवम् एषह्येव ..निनीषति' इत्युन्निनीषयाधोनिनीषया च स्वयमेव साध्वसाधुनी कर्मणी कारयतोत्येतत् नोपपद्यते; उच्यते-एतन्न सर्वसाधारणम् । यस्त्वतिमात्रपरमपुरुषानुकूल्ये व्यवस्थितः प्रवर्तते, तमनुगृह्णन् भगवान् स्वयमेव स्वप्राप्त्युपायेषु अतिकल्याणेषु कर्मस्वेव रुचिं जनयति । यश्चातिमात्र-प्रातिकूल्ये व्यवस्थितः प्रवर्तते,तं निगृह्णन् स्वप्राप्तिविरोधिषु अधोगतिसाधनेषु कर्मसु रुचिं जनयति । यथोक्तं भगवता स्वयमेव-'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः' इत्यारभ्य 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते। तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति । तथा 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्'इत्यादि,'मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः' इत्यन्तमुक्त्वा 'तानहं द्विषतः... योनिषु' इत्युक्तम्' इति । एवं वेदार्थसङ्ग्रहेऽप्यनुगृहीतम् । श्रुतप्रकाशिकायां जिज्ञासाधिकरणे लघुसिद्धान्ते विस्तरेण व्याख्यातेयं श्रुतिः, तत्र यथेष्टमस्या अर्थो द्रष्टव्यः । विस्तरभिया नात्र लिख्यते ॥

**शं॥तान् अहं सन्मार्गप्रतिपक्षभूतान् साधुद्वेषिणः द्विषतः च मां, क्रूरान् संसारेषु एव अनेकनरकसंसारमार्गेषु नराधमान्अधर्मदोषवत्त्वात्,क्षिपामि प्रक्षिपामि अजस्रं सन्ततम्**

**आसुरीं योनिमापन्ना मूढा जन्मनिजन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २०**

रा॥मदानुकूल्यप्रत्यनीकजन्मापन्नाः पुनरपि जन्मनिजन्मनि मूढाः मद्विपरीतज्ञाना मामप्राप्यैव—'अस्ति भगवान् सर्वेश्वरो वासुदेवः' इति ज्ञानमप्राप्य ततस्ततो जन्मनोऽधमामेव गतिं यान्ति ॥ २० ॥

अस्यासुरस्वभावस्यात्मनाशस्य मूलहेतुमाह—

**त्रिविधं नरकस्यैतद् द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१**

अस्यासुरस्वभावरूपस्य नरकस्यैतत् त्रिविधं द्वारं, तच्चात्मनो नाशनम्; कामः क्रोधो लोभ इति त्रयाणां स्वरूपं पूर्वमेव व्याख्यातम् . द्वारं मार्गो हेतुरित्यर्थः; तस्मादेत-

ता॥उत्तरोत्तरमपकर्षपरम्परोच्यते—'आसुरीम्' इति श्लोकेन । मूढशब्दतः फलितमाह—**मद्विपरीतज्ञाना** इति । यद्वा विपरीतज्ञानमेवात्र मोहः; स च वाक्यार्थानुगुण्यात्स्वविषयो विशेषितः । सत्त्वोत्तराणामपि परब्रह्मप्राप्तेरनेकजन्मसंसिद्धिसाध्यतया तामसेषु तत्प्रसङ्गप्रतिषेधयोरनौचित्यात्प्राप्तेः प्रथमपर्वभूतशास्त्रजन्यज्ञानप्राप्तिरिहाशास्त्रवश्येष्वासुरेषु प्रतिक्षिप्यते । तत्र शास्त्रजन्यज्ञानत्वव्यक्त्यर्थमाह—**अस्ति भगवानिति** । अधमत्वस्योत्तमावधिसापेक्षत्वादवधिसमर्पणसमर्थतया सन्निहितः ततश्शब्दो न हेतुपर उचित इत्यभिप्रायेणाह—**ततस्ततो जन्मन** इति ॥ २० ॥

अवश्यपरिहरणीयं संक्षिप्योच्यत इत्यभिप्रायेणानन्तरग्रन्थं सङ्गमयति—**अस्येति** । यथावस्थितस्यात्मनोऽप्राप्तिरेव ह्यात्मनाशः ; सचासुरस्वभाव एवेत्यभिप्रायेणाह—**आसुरस्वभावस्यात्मनाशस्येति** । मूलच्छेदात्सर्वोऽप्यासुरस्वभावश्छिन्न एवेत्यभिप्रायेणाह—**मूलहेतुमिति** । **आसुरस्वभावरूपस्य नरकस्येति**—एतस्मादधिक किमन्यन्नरकमिति भावः । आसुरस्वभावपरिहारार्थं हि तन्मूलोपदेशोऽयमिति वा, 'तमोद्वारैः' इत्यनन्तरैकार्थ्यं वा विवक्षितम् । **आत्मनो नाशनमिति**—'असन्नेव स भवति' इत्यादिक्रमेणेति भावः। प्रवेशहेतुर्हि द्वारं, तेनापि प्राप्तिमात्रहेतुत्वमिह विवक्षितमित्यभिप्रायेणोपचारावलम्बनक्रममाह—**मार्गो हेतुरित्यर्थ** इति । द्वारं नाशनं, प्रविशन्नेव नश्यतीति भावः ।

प्र-पा ॥ १. तै-आन. ६-१ ॥

शं॥अशुभान् अशुभकर्मकारिणः आसुरीष्वेव क्रूरप्रायासु व्याघ्रसिंहादियोनिषु, 'क्षिपामि' इत्यनेन सम्बन्धः ॥ १९ ॥

आसुरीं योनिम् आपन्नाः प्रतिपन्नाः मूढाः अविवेकिनः जन्मनिजन्मनि प्रतिजन्म तमोबहुलास्वेव योनिषु जायमानाः अधो गच्छन्ति मूढाः माम् ईश्वरम् अप्राप्य अनासाद्य एव हे कौन्तेय ततः तस्मादपि यान्ति अधमां गतिं निकृष्टतमां गतिम् 'माम् अप्राप्य' इति—न मत्प्राप्तौ काचिदपि आशङ्का अस्ति, अतः मच्छिष्टसाधुमार्गप्राप्तिम् अप्राप्य इत्यर्थः ॥ २० ॥

सर्वस्याः आसुर्याः सम्पदः संक्षेपः अयम् उच्यते, यस्मिन् त्रिविधे सर्वः आसुरीसंपद्भेदः अनन्तोऽपि अन्तर्भवति । यत्परिहारेण परिहृतश्च भवति, यत् मूलं सर्वस्य अनर्थस्य, तत् एतत् उच्यते—त्रिविधं त्रिप्रकारं नरकस्य प्राप्तौ द्वारं नाशनम् आत्मनः,

रा॥ त्रयं त्यजेत्; तस्मात्—अतिघोरनरकहेतुत्वात् कामक्रोधलोभानाम् एतत्त्रितयं दूरतः परित्यजेत् ॥ २१ ॥

**एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।**
**आचरत्यात्मनश्श्रेयस्ततो याति परां गतिम् ॥** २२

एतैः-कामक्रोधलोभैः-तमोद्वारैः-मद्विपरीतज्ञानहेतुभिः विमुक्तो नर आत्मनः श्रेय आचरति—लब्धमद्विषयज्ञानो मदानुकूल्ये प्रयतते ; ततो मामेव परां गतिं याति॥२२॥

शास्त्रानादरोऽस्य नरकस्य प्रधानहेतुरित्याह—

**यश्शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥** २३

शास्त्रं वेदाः, विधिरनुशासनम्, वेदाख्यं मदनुशासनमुत्सृज्य यः कामकारतो

---

ता॥त्याज्यस्य दोषोक्तिस्त्यागविध्युपकारिकेत्यभिप्रायेणाह—**तस्मा**दिति। रौरवादिर्नरकः पापक्षयहेतुः; आसुरस्वभावस्त्वसौ पापार्जनहेतुत्वादतिघोर इत्यभिप्रायेणाह—**अतिघोरनरकहेतुत्वा**दिति । सर्वस्यासुरस्वभावस्य परित्याज्यत्वेऽपि विशेषनिषेधोऽत्यन्तपरिहरणीयत्वज्ञापनायेत्याह—**दूरतः परित्यजे**दिति ॥ २१ ॥

त्याज्यस्य दोषोक्त्या त्यागो विहितः ; त्यागस्यैवेदानीं फलप्रवाह उच्यते - 'एतैः' इति श्लोकेन । **मद्विपरीतज्ञानहेतु**भिरिति तमःफलोक्तिः ; तमश्शब्दो वात्र तत्पर्यन्तलक्षकः ; तमोद्वारैर्विमुक्तत्वात्तमसापि विमुच्यते , श्रेयश्चरणं च तत्त्वज्ञानपूर्वकमित्यभिप्रायेणाह—**लब्धमद्विषयज्ञान** इति । **श्रेय आचरती**त्यनेन —प्रागुक्तभगवत्प्रद्वेषादिनिवृत्तिर्विवक्षिता । श्रेयः प्रशस्तं ; तच्च संग्रहाद्भगवदानुकूल्यं, तदनुप्रवेशात्सर्वस्य शास्त्रीयस्येत्यभिप्रायेणाह—**मदानुकूल्य** इति । ततश्श्रेयश्चरणादेव हेतोरित्यर्थः। 'मामप्राप्यैव'इत्यादिपरामर्शादिह परगतिशब्दनिर्दिष्टः प्राप्यपर्यवसानभूमिः परमपुरुष इत्याह—**मामेव पराङ्गति**मिति ॥ २२ ॥

आसुरस्वभावेषु मूलतया प्रधानभूतास्त्रय उक्ताः, तेभ्योऽपि प्रधानतमः परिहार्यो हेतुरनन्तरमुच्यत इत्याह —**शास्त्रानादर** इति । सर्वावस्थसमस्तपुरुषहितानुशासनाच्छास्त्रशब्दो वेदेष्वेव प्रथमं प्राप्तः ; तदनुबन्धादन्येष्वित्यभिप्रायेणाह—**शास्त्रं वेदा** इति । विधायकवाक्यस्य शास्त्रशब्देनोपात्तत्वात् तद्व्यापारोऽत्र विधिशब्दविवक्षित इत्याह —**विधिरनुशासन**मिति । फलितमाह—**वेदाख्यं मदनुशासन**मिति । शास्त्रमेव विधिरिति सामानाधिकरण्यं वा विवक्षितम् । मदनुशासनमित्य-

---

शं॥यत् द्वारं प्रविशन्नेव नश्यति आत्मा; कस्मैचित् पुरुषार्थाय योग्यो न भवति इत्यतः उच्यते 'द्वारं नाशनमात्मनः' इति । किं तत्?—कामः क्रोधः तथा लोभः । तस्मात् एतत् त्रयं त्यजेत् । यतः एतत् द्वारं नाशनम् आत्मनः, तस्मात् कामादित्रयं त्यजेत् ॥

त्यागस्तुतिरियम्—एतैः विमुक्तः कौन्तेय तमोद्वारैः तमसः नरकस्य दुःखमोहात्मकस्य द्वाराणि कामादयः तैः एतैः त्रिभिः विमुक्तः नरः आचरति अनुतिष्ठति ; किम्?—आत्मनः श्रेयः । यत्प्रतिबद्धः पूर्वं न आचचार, तदपगमात् आचरति । ततः तदाचरणात् याति परां गतिं मोक्षमपि इति ॥ २२ ॥

सर्वस्य एतस्य आसुरीसंपत्परिवर्जनस्य श्रेयआचरणस्य शास्त्रं कारणम्। शास्त्र-

रा॥**वर्तते**-स्वच्छन्दानुगुणमार्गेण वर्तते, **न स सिद्धिमवाप्नोति**—न कामप्यामुष्मिकीं सिद्धिमवाप्नोति; **न सुखं** किंचिदवाप्नोति : **न परां गतिं**—कुतः परां गतिं प्राप्नोतीत्यर्थः॥

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥** २४

ॐ तत्सदिति.
इति श्रीमद्भगवद्गीतासूपनिषत्सु परब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥
श्रीकृष्णाय परब्रह्मणे नमः.

---

**तस्मात्कार्याकार्यव्यवस्थितौ उपादेयानुपादेयव्यवस्थायां शास्त्रमेव तव प्रमाणं**—

ता॥नेन 'श्रुतिःस्मृतिर्ममैवाज्ञा' इत्यादिस्मारणम्। एतेनान्यथा लिङ्गाद्यर्थं वर्णयन्तोऽपि प्रत्युक्ताः। लिङादयो हि प्रशासितुरभिप्रायमाक्षेपादभिधानतो वा व्यञ्जयन्ति । शास्त्रप्रतिपक्षभूतः कामकारोऽत्र न शास्त्रीयवैकल्पिकादिविषय इत्यभिप्रायेणाह—**स्वच्छन्दानुगुणमार्गेति**। 'अथ केन प्रयुक्तोऽयं' 'काम एष क्रोध एषः' इत्याद्युक्तकामप्रयुक्तेत्युक्तं भवति। 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः' इत्याद्यनुसन्धानेनाह—**न कामप्यामुष्मिकीं सिद्धिमिति** । आमुष्मिकसुखहेतुभूतामुपायसिद्धिमित्यर्थः । न सुखं न स्वर्गादिसुखमित्यर्थः । यद्वा **आमुष्मिकीं सिद्धिमिति**—स्वर्गादिफलविषयम्; **सुखमिति** त्वैहिकपरम्;अत एव हि किञ्चिच्छब्दः। इहापि हि सुखं शास्त्रीयानुष्ठानजनितपरमपुरुषानुग्रहादेव । अत एव ह्युच्यते—'अनाराधितगोविन्दा ये नरा दुःखभागिनः' इति । कैमुत्यप्रदर्शनायात्रान्यसुखसमभिव्याहार इत्याह—**कुतः परां गतिमिति** ॥ २३ ॥

अध्यायोक्तं सर्वमेतदर्थमित्यभिप्रायेणानुशिष्यते—**तस्माच्छास्त्रमिति** । अत्र कार्याकार्यशब्दयोरुत्पाद्यानुत्पाद्यादिविषयत्वस्यासङ्गतिमभिप्रेत्याह—**उपादेयानुपादेयव्यवस्थायामिति** ।

---

प्र-पा॥१.विष्णुधर्मे. ७६-३१॥ 'श्रुतिःस्मृतिर्ममैवाज्ञा तामुल्लङ्घ्य यजञ्छुभे। सर्वस्वेनापि मां देवि नाप्नोत्याज्ञाविलङ्घनात्'॥—श्रीपाञ्चरात्रे तु 'श्रुतिस्स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः' ॥

२. गी. ३-३६ ॥

३. गी. ३-३७ ॥

४. मनुः-१२-९५. कौर्मे पुराणेच-पूर्वभागे.७-२-३१॥ या इति—याः स्मृतयः वेदमूला न भवन्ति, दृष्टार्थवाक्यानि 'चैत्यवन्दनात् स्वर्गो भवति'इत्यादीनि यानिचासत्कर्ममूलानि, देवताऽपूर्वादिनिराकरणात्मकानि वेदविरुद्धानि चार्वाकदर्शनानि सर्वाणि परलोके निष्फलानि, यस्मात् नरकफलानि तानि मन्वादिभिः स्मृतानि'—इति कुल्लूकभट्टः ॥

५. विष्णुधर्मे. १९-१३ ॥

---

शां॥**प्रमाणात्** उभयं शक्यं कर्तुं, न अन्यथा । अतः—**यः शास्त्रविधिं** शास्त्रं वेदः, तस्य विधिं कर्तव्याकर्तव्यज्ञानकारणं विधिप्रतिषेधाख्यम् **उत्सृज्य** त्यक्त्वा **वर्तते कामकारतः** कामप्रयुक्तः सन्, **न सः सिद्धिं** पुरुषार्थयोग्यताम् **अवाप्नोति**, न अपि अस्मिन् लोके **सुखं**, न अपि **परां** प्रकृष्टां **गतिं** स्वर्गं मोक्षं वा ॥ २३ ॥

**तस्मात् शास्त्रं प्रमाणं** ज्ञानसाधनं **ते** तव **कार्याकार्यव्यवस्थितौ** कर्तव्याकर्तव्यव्यवस्थायाम् । अतः **ज्ञात्वा** बुद्ध्वा **शास्त्रविधानोक्तं** विधिः विधानं, शास्त्रमेव विधानं

**रा॥धर्मशास्त्रेतिहासपुराणाद्युपबृंहिता वेदाः यदेव पुरुषोत्तमाख्यं परं तत्त्वं तत्प्रीणनरूपं तत्प्राप्त्युपायभूतं च कर्म अवबोधयन्ति,तच्छास्त्रविधानोक्तं तत्त्वं कर्म च ज्ञात्वा यथावदन्यूनातिरिक्तं विज्ञाय कर्तुं त्वमर्हसि—तदेवोपादातुमर्हसि ॥ २४ ॥**

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये षोडशोऽध्यायः ॥ १६ ॥

श्रीमते रामानुजाय नमः.

---

**ता॥**अनुष्ठानविपर्ययस्य तत्त्वविपर्ययस्य च आसुरस्वभावे प्रदर्शितत्वादत्रच तद्विपर्ययस्य विवक्षितत्वात्कार्याकार्यशब्दौ तत्त्वातत्त्वयोः प्रदर्शनार्थावित्यभिप्रायेणोपादेयादिसाधारणशब्दः । उपादानमत्र यथाशास्त्रं मनसा स्वीकरणम्। शास्त्रमेवेत्ययुक्तं, 'श्रुतिःस्मृतिस्सदाचारः' इत्यादिविरोधादित्यत्राह—**धर्मशास्त्रेति** । आदिशब्देनाचारग्रहणं, 'यजन्त्यविधिपूर्वकं' 'न तु मामभिजानन्ति' इत्यादिव्यवच्छेदाय ज्ञात्वेत्यादिकमुच्यत इत्याह—**यदेवेति** । सर्वाणि हि शास्त्राणि साक्षाद्वा परम्परया वा परमपुरुषसमाराधनतयैव सर्वाणि कर्माणि विदधति ; तत्र तत्त्वहितयोः 'वेदैश्च सर्वैरहमेव वेद्यः' इत्युक्तं परतत्त्वं प्रागुक्तसमाख्यया स्मारयति—**पुरुषोत्तमाख्यमिति** । **तत्प्राप्त्युपायभूतं चेति**—सर्वेषांहि फलसङ्गादित्यागेनानुष्ठितानां परब्रह्मप्राप्त्युपायत्वमेव स्वभाव इति भावः । अत्र **अवबोधयन्तीत्य**नेनाज्ञातज्ञापनरूपविधानशब्दार्थो विवृतः । अयथाशास्त्रं कर्मणां करणं च न कर्तव्यमित्यभिप्रायेण 'कर्तुमर्हसि' इत्युक्तम् । तस्मादप्यनुष्ठानतत्त्वाध्यवसायसाधारण्यमाह—**उपादातु**मिति । 'अर्हसि' इत्येतदनुसारिमध्यमत्वमितिनिर्देशः तस्य दैवीसम्पदभिजातस्य योग्यत्वातिशयद्योतनाय । एतदुक्तं भवति—सत्त्वोत्तरेण भवता कुहकपुरुषकौशलातिशयपरिग्राहितमोहनशास्त्राभासप्रक्रियानुधावनेन नित्यभगवदाज्ञारूपवेदाख्यशास्त्रसारभूताद्यथाधिकारं कर्मयोगभक्तियोगरूपभगवदनन्यभजनपरमधर्मान्न प्रच्युतेन भवितव्यम् ; अपितु स एव नित्यमुपादेयः—इति । इहेति निर्देशः कर्माधिकारभूमिप्रदर्शनार्थः, कर्मवश्यावस्थत्वज्ञापको वा ॥ २४ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु भगवद्रामानुजविरचितश्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां षोडशोऽध्यायः ॥ १६ ॥

श्रीमते निगमान्तमहादेशिकाय नमः.

---

**प-पा॥**१. याज्ञवल्क्यस्मृतौ. १.अध्या.१. प्रकरणे. ७. श्लोकः. 'श्रुति स्स्मृतिस्सदाचारः स्वस्य च प्रियमात्मनः । सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्'॥ श्रुतिः-वेदः, स्मृतिः-धर्मशास्त्रम् 'श्रुतिस्तु वेदो विज्ञेयः धर्मशास्त्रन्तु वै स्मृतिः' इति मनूक्तेः । सदाचारः-शिष्टाचारः, च-पुनः, स्वस्य आत्मनः कर्तुः प्रियं सम्यक्सङ्कल्पजः कामः इदं सर्वं मुनिभिः धर्ममूलं स्मृतमित्यर्थः ॥

२. गी. १५-१५ ॥

---

**शां॥शास्त्रविधानं,'कुर्यात्,न कुर्यात्' इत्येवंलक्षणम्,तेन उक्तं स्वकर्म यत् तत् कर्तुम् इह अर्हसि । 'इह' इति कर्माधिकारभूमिप्रदर्शनार्थम् इति ॥ २४ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्य गोविन्दभगवत्पूज्यपादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ श्रीमद्गीताभाष्ये षोडशोऽध्यायः ॥ १६ ॥

श्रीः

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः.



देवासुरविभागोक्तिपूर्विका शास्त्रवश्यता ।
तत्त्वानुष्ठानविज्ञानस्थेम्ने षोडश उच्यते ॥ २० ॥

श्रीमद्यामुनमुनये नमः.



## श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा.

अत्र पूर्वोत्तरसमस्तप्रतिष्ठापकषोडशाध्यायार्थस्संगृह्यते । एतदभिप्रायेण भाष्यम् ‘ अनन्तरमुक्तस्य तु कृत्स्नस्यार्थस्य स्थेम्ने शास्त्रवश्यत्वं वक्तुं शास्त्रवश्यतद्विपरीतयोर्देवासुरसर्गयोः विभागं श्रीभगवानुवाच ’ इति । अत एव सप्तदशमवतारयन्नेवमन्वभाषत—‘ देवासुरविभागोक्तिमुखेन प्राप्यतत्त्वज्ञानं तत्प्राप्त्युपायज्ञानं च वेदैकमूलमित्युक्तम् ’ इति । अत्र शास्त्रवश्यता ‘ तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ’ इति अध्यायान्तिमश्लोकेनोक्ता ॥

श्रीमते निगमान्तमहादेशिकाय नमः.






## सप्तदशोऽध्यायः.

रा॥देवासुरविभागोक्तिमुखेन प्राप्यतत्त्वज्ञानं तत्प्राप्त्युपायज्ञानं च वेदैकमूलमित्युक्तम्; इदानीमशास्त्रविहितस्यासुरत्वेनाफलत्वं, शास्त्रविहितस्य च गुणतस्त्रैविध्यं,शास्त्रसिद्धस्य लक्षणं चोच्यते ; तत्राशास्त्रविहितस्य निष्फलत्वमजानन् अशास्त्रविहिते श्रद्धासंयुक्ते यागादौ सत्त्वादिनिमित्तफलभेदबुभुत्सया अर्जुनः पृच्छति––

**अर्जुन उवाच—**

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥** १

**शास्त्रविधिमुत्सृज्य श्रद्धयान्विता ये यजन्ते, तेषां निष्ठा का? किं सत्त्वम्?**

---

**ता॥**उक्तशेषतया सप्तदशमवतारयितुमुक्तमुद्गृह्णाति—**देवासुरे**ति । प्रकृतस्य मुखभेदेन प्रपञ्चनपरतया सङ्गतिमाह—**इदानी**मिति। हेयोपादेयव्यवस्थायाः शास्त्रैकमूलत्वोक्तिसमनन्तरमित्यर्थः । 'अशास्त्रमासुरं कृत्स्नं शास्त्रीयं गुणतः पृथक् । लक्षणं शास्त्रसिद्धस्य त्रिधा सप्तदशोदितम्' इति सङ्ग्रहश्लोकं विवृणोति—**अशास्त्रविहितस्ये**त्यादिना । अत्र सामान्यतो विशेषतश्च शास्त्रीयार्थविभजनमध्यायानुवृत्तार्थः । 'सप्तदशोदितम्' इत्येतत्सङ्ग्रहश्लोकवाक्यत्रयेऽपि प्रत्येकमन्वेतव्यम् । एतत्सर्वं सप्तदशोदितमिति सर्वोपसंहारेण वान्वयः । 'ज्ञात्वा शास्त्रविधानोक्तम्' इत्यस्यानन्तरं 'ये शास्त्रविधिमुत्सृज्य' इति प्रश्नः कथं सगच्छत इत्यत्राह—**तत्रे**ति । **अशास्त्रविहितस्य निष्फलत्वमजानन्नि**ति—अयमभिप्रायः––प्रेक्षावतां स्वतः प्रयोजने तदुपाये वा बुभुत्सा ; अतस्सत्त्वादिनिष्ठाभेदबुभुत्सा तन्मूलफलविशेषपर्यन्ता ; नच निष्फलत्वज्ञाने फलविशेषजिज्ञासा ; ततश्च लोकसिद्धाः कृषिचिकित्सादयोऽपि प्रेक्षावत्प्रवृत्तिविषयास्सफला एव दृश्यन्ते, अन्यथा शास्त्रस्यापि निर्मूलत्वप्रसङ्गात् ; अलौकिकेष्वप्याचारसिद्धाः कतिकति धर्माः ; नच ते यत्किञ्चित्फलमन्तरेण स्युः, प्रेक्षावतामप्रवृत्तिप्रसङ्गात् ; नच श्रद्धापूर्वकानुष्ठानेऽङ्गवैकल्यात्फलाभावस्सम्भवति; नच प्रेक्षावद्भिरनन्तैर्जनैर्बहुवित्तव्ययायासादिनानुष्ठीयमानेषु दृष्टप्रयोजनरहितेषु कर्मसु अदृष्टपर्यवसानमन्तरेण गतिः; अतश्शास्त्रविहितादस्य यदि किञ्चिद्वैषम्यमुच्यते, तदा सत्त्वादिगुणभेदप्रयुक्तफलतारतम्यमात्रमेव स्यात् ; अतो 'यश्शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम्' इति पूर्वोक्तमपि प्रायशः प्रकृष्टसुखाभावविवक्षया । 'कामकारतः' इति विशेषणं वा श्रद्धायुक्तव्यवच्छेदार्थमिति दुरुपदेशबाह्यागमस्वोत्प्रेक्षावृद्धव्यवहारमात्रकल्पिते ह्यत्र धर्माभिसन्धिश्रद्धादियोगान्नैष्फल्यनिवृत्तिर्युक्तेत्यर्जुनस्याशयः—इति। विशिष्टस्य फलत्वशङ्कास्पदत्वाय कर्तृविशेषणं क्रियाविशेषणतया व्याख्यातम् । यागोऽत्र दाना-

रा॥आहोस्विद्रजः ? अथ तमः ? निष्ठा स्थितिः ; स्थीयतेऽस्मिन्निति स्थितिः-सत्त्वादिरेव

ता॥द्युपलक्षणार्थः।देवपूजात्वाविशेषात्तत्सङ्ग्रहो वा। अत्र कृष्णशब्देन 'कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः'इति सर्वापेक्षितसिद्ध्यौपयिकीं निरुक्तिमभिप्रैति । तुशब्देन शास्त्रीयनिष्ठातः कामकारतश्च

प्र-पा ॥ १. भारते. उद्योगपर्व. ६९-५ ॥

शं॥' तस्माच्छास्त्रं प्रमाणं ते ' इति भगवद्वाक्यात् लब्धप्रश्नबीजः अर्जुनः उवाच— ये केचित् अविशेषिताः शास्त्रविधिं शास्त्रविधानं श्रुतिस्मृतिशास्त्रचोदनाम् उत्सृज्य परित्यज्य यजन्ते देवादीन् पूजयन्ति श्रद्धया अन्विताः श्रद्धया आस्तिक्यबुद्ध्या वृद्धव्यवहारदर्शनात् अन्विताः संयुक्ताः सन्तः—श्रुतिलक्षणं स्मृतिलक्षणं वा कंचित् शास्त्रविधिम् अपश्यन्तः श्रद्दधानतया ये देवादीन् पूजयन्ति;ते इह'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः' इत्येवं गृह्यन्ते । ये पुनः कंचित् शास्त्रविधिम् उपलभमाना एव तम् उत्सृज्य अयथाविधि देवादीन् पूजयन्ति; ते इह ' ये शास्त्रविधिमुत्सृज्य यजन्ते' इति न परिगृह्यन्ते । कस्मात् ?—श्रद्धया अन्वितत्वविशेषणात् । देवादिपूजाविधिपरं किंचित् शास्त्रं पश्यन्त एव तत् उत्सृज्य अश्रद्दधानतया तद्विहीनायां देवादिपूजायां श्रद्धया अन्विताः प्रवर्तन्ते इति न शक्यं कल्पयितुं यस्मात्, तस्मात् पूर्वोक्ता एव ' ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः' इत्यत्र गृह्यन्ते । तेषाम् एवम्भूतानां निष्ठा तु अवस्थानं का कृष्ण, सत्त्वम् आहो रजः तमः ; किं सत्त्वं निष्ठा अवस्थानम्, आहोस्वित् रजः, अथवा तमः इति ? । एतत् उक्तं भवति—या तेषां देवादिविषया पूजा,

आ॥सर्वगुणपूर्णाय नमः ॥ ओं ॥ श्रीः ॥ गुणभेदान् प्रपञ्चयत्यनेनाध्यायेन। शास्त्रविधिमुत्सृज्य अज्ञात्वा 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ' इति विधिरुत्सृष्टो हि तैः । ' ये वै वेदं न पठन्ते न चार्थं वेदोज्ज्ञांस्तान्विद्धि सानूनबुद्धीन् ' इति माधुच्छन्दसश्रुतिः । अन्यथा तामसा इत्येवोच्येत । न तु विभज्य । यदि सात्त्विकास्तर्हि

ज॥अध्यायार्थमाह—**गुणेति** । गुणनिमित्ताः श्रद्धादीनां भेदाः । ' नान्यं गुणेभ्यः कर्तारम् ' इत्युक्तत्वात् प्रपञ्चयतीत्युक्तम्। सात्त्विकानां पुमर्थसाधनत्वादनुष्ठेयत्वमन्येषां तद्विरुद्धत्वाभावः। त्याज्यत्वं च ज्ञापयितुमिति शेषः । शास्त्रविधिमुत्सृज्येत्यस्य वेदविधानमप्रामाण्यबुद्ध्या परित्यज्येत्यर्थप्रतीतिं निवारयितुमाह—**शास्त्रेति** । अज्ञानमेवात्रोत्सर्गो न त्वप्रामाण्यबुद्ध्या त्याग इत्यर्थः। ननु प्राप्तपरित्याग उत्सर्गः ; एवं च प्रतीतार्थ एव युक्तो न ज्ञात्वेति, तत्राह—**वेद** इति । अर्थज्ञानपर्यन्तोऽयं विधिः। अयं च सर्वान्द्विजन्मनः प्राप्तस्तैरज्ञानिभिरुत्सृष्टश्च। अतोऽज्ञात्वेति युक्तमित्यर्थः। अत्र श्रुतिसम्मतिं चाह—**य** इति। न चार्थमधिगच्छन्ति सहानूनया वेदतदर्थाधिगतियोग्यया बुद्ध्या वर्तमानान् सानूनबुद्धयोऽपि ये वेदं न पठन्त इति योज्यम् । अप्रामाण्यबुद्ध्या परित्यज्येत्येवार्थः किं न स्यादित्यत आह —**अन्यथेति** । यद्यत्र वेदविरोधिनां बौद्धादीनां निष्ठा पृच्छयेत, तदा ते तामसा इत्येवोत्तरमुच्येत; तदीयतामसत्वस्याविकल्पितत्वादिति भावः । न केवलं वक्तव्यानुक्तिरेव दोषः, किं तु तद्विरुद्धोक्तिश्च स्यादिति भावेनाह—**न त्विति** । ' त्रिविधा भवति श्रद्धा ' इत्यादिना श्रद्धां विभज्योत्तरं नोच्यते

राा॥निष्ठेत्युच्यते; तेषां किं सत्त्वे स्थितिः? किं वा रजसि? किं वा तमसीत्यर्थः ॥ १ ॥

एवं पृष्टो भगवानशास्त्रविहितश्रद्धायास्तत्पूर्वकस्य च यागादेर्निष्फलत्वं हृदि निधाय शास्त्रीयस्यैव यागादेर्गुणतस्त्रैविध्यं प्रतिपादयितुं शास्त्रीयश्रद्धायाः त्रैविध्यं तावदाह—

श्रीभगवानुवाच—

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २

सर्वेषां देहिनां श्रद्धा त्रिविधा भवतिः सा च स्वभावजा—स्वभावः-स्वासाधारणो

---

ता॥व्यावृत्तिर्विवक्षिता।विपरिणतस्य किंशब्दस्य अहो इति पदस्यवा अत्रावृत्तिमभिप्रेत्याह—**किं सत्त्वमिति** । विनाशाद्यर्थव्यवच्छेदार्थं सत्त्वादिसामानाधिकरण्यायचाधिकरणव्युत्पत्तिमवतारयितुं पर्यायेण स्वरूपं व्यनक्ति—**निष्ठा स्थितिरिति**। तेषां निष्ठा तु केति पृष्ट एवार्थः 'सत्त्वम्' इत्यादिना विशेष्यत इत्यभिप्रायेण फलितमाह—**तेषामिति** ॥ १ ॥

श्रद्धा कतिविधेति प्रश्नाभावेऽपि तदुक्तिवैयर्थ्यशङ्कां परिहरन् श्रद्धात्रैविध्यकथनस्य प्रयोजनं चाह—**एवं पृष्ट** इत्यादिना । पूर्वोपदिष्टविरुद्धं पृष्ट इत्यर्थः । **हृदि निधायेति**—क्रमेण साक्षादुत्तरमवतारयितुमित्यर्थः । प्रश्नस्यात्यन्तानादरपरत्वज्ञापनाय वा सहसा साक्षादुत्तरानुक्तिरिति भावः। **गुणतस्त्रैविध्यमिति**—गुणभेदनिमित्तफलभेदयोगित्वमिति भावः । अत्रहि श्रद्धायोगात्सात्त्विकत्वं शास्त्रोल्लङ्घनात्तामसत्वं तदुभयसमुच्चयाद्राजसत्वमाशङ्कितं ; तत्र तावच्छ्रद्धापूर्वकत्वं फलसाधनत्वायोपयुक्तम् ; तच्चाशास्त्रीयेष्वेव ; तत्रापि श्रद्धाया नत्वैकान्तिकत्वमित्यभिप्रायेण शास्त्रीयश्रद्धायास्त्रैविध्यग्रहणम् । एतेन परिसंख्यान्यायेनाशास्त्रीयेषु फलभेदनिमित्तं त्रैविध्यं प्रत्युक्तम् । अत्र श्रद्धाभेदात्सत्त्वादिनिष्ठाभेदनिर्णय इत्युक्तं भवति । देहिनामित्यनेन तत्तद्देहानुरूपमधिकारिवैचित्र्यं विवक्षितमित्यभिप्रायेणाह—**सर्वेषामिति** । ब्रह्मादीनामपीत्यर्थः । 'देहिनाम्'इति सत्त्वादिगुणप्रचुरदेहविशेषानुरूपमिति भावः । साधारणेषु शास्त्रेषु तत्प्ररोचकैश्वर्यवादादिषु च कथं पुरुषभेदनियतश्रद्धाभेद इति शङ्कायां 'सा स्वभावजा'इति वाक्यान्तरमित्याभिप्रायेणाह—**साचेति**।कार्यासाधारणत्वाय कारणासाधारणत्वविवक्षामाह—**स्वभावस्स्वासाधारणो भावइति** । कोऽसौ भावः, कश्च तस्याप्यसाधारण्यहेतु -

---

शं॥सा किं सात्त्विकी, आहोस्वित् राजसी, उत तामसी इति ॥ १ ॥

सामान्यविषयः प्रश्नः न अप्रविभज्य प्रतिवचनम् अर्हतीति श्रीभगवान् उवाच—त्रिविधा त्रिप्रकारा भवति श्रद्धा—यस्यां निष्ठायां त्वं पृच्छसि—देहिनां शरीरिणां सा

---

आ॥नोत्सृष्टशास्त्राः।न हि वेदविरुद्धो धर्मः।'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्' इति हि स्मृतिः । 'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः' इति च भागवते॥१॥

---

जा॥इत्यर्थः। एवमुत्तरवचनेऽपि किं स्यादिति चेत् वेदाप्रामाण्यवादिनामपि पाक्षिकं सात्त्विकत्वं स्यात्। तथा च वक्ष्यामः । तदपि स्यादिति चेत्—न, सात्त्विकत्ववेदविरोधित्वयोः सहानवस्थानादित्याह—**यदीति** । सहानवस्थानमपि कुतो निश्चेयमिति चेत्—सात्त्विका हि धर्ममाचरन्ति, 'सत्त्वाद्धर्मो भवेत्पुंसाम्' इतिवचनात् । तथा च वेदविरोधिनो धर्मिणश्चेत्युक्तं भवति । एवं च वेदविरोधी धर्म इत्याद्यापद्येत । तच्चानुपपन्नमित्याह—**न हीति** । कुतो नेत्यत आह—**वेद इति** ॥ १ ॥

रा॥भावः, प्राचीनवासनानिमित्तस्तत्तद्रुचिविशेषः;यत्र रुचिस्तत्र श्रद्धा जायते;श्रद्धा हि स्वाभिमतं साधयत्येतदिति विश्वासपूर्विका साधने त्वरा; वासना रुचिश्च श्रद्धा चात्मधर्मा गुणसंसर्गजाः; तेषामात्मधर्माणां वासनादीनां जनकाः देहेन्द्रियान्तःकरणविषयगता धर्माः कार्यैकनिरूपणीयाः सत्त्वादयो गुणाः-सत्त्वादिगुणयुक्तदेहाद्यनुभवजा इत्यर्थः; ततश्चेयं श्रद्धा सात्त्विकी राजसी तामसी चेति त्रिविधा; तामिमां श्रद्धां शृणु ; सा श्रद्धा यत्स्वभावा, तं स्वभावं शृण्वित्यर्थः ॥ २ ॥

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धस्स एव सः ॥ ३

ता॥रित्यत्राह—प्राचीनेति। भावशब्दोऽत्र धर्मविशेषपरः। नानार्थे स्वभावशब्दे कथमत्र रुचिविवक्षेत्यत्राह—यत्र रुचिरिति । रुचिश्रद्धयोः कार्यकारणभावोऽन्वयव्यतिरेकसिद्ध इत्यर्थः । रुचिव्यतिरिक्ता तत्कार्यभूता का श्रद्धेत्यत्राह—श्रद्धा हीति । 'श्रद्धा विश्वासकाङ्क्षयोः' इति त्वरापर्यन्तविश्वासेऽपि हि श्रद्धाशब्दं नैघण्टुकाः पठन्ति । ननु 'कामस्संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव'इतिश्रवणात् अन्तःकरणधर्मेष्वात्मानमलिम्पत्सु श्रद्धादिषु गुणकृतत्वाच्च गुणधर्मत्वसंभवेऽपि कथमत्र स्वशब्देन देहिशब्देन च निर्दिष्टप्रत्यगात्मनि तदन्वयोक्तिः,तत्राह—वासनेति। शुद्धस्वभावस्यैवात्मनः कर्ममूलगुणमयप्रकृतिसंसर्गोपाधिकधर्मभूतज्ञानपरिणतिविशेषा इत्यर्थः । श्रद्धाभेदेषु सात्त्विकादिसंज्ञानिवेशाय निर्गुणस्यात्मनः कथं सत्त्वादिमूलवासनादियोग इति शङ्काव्युदासाय च देहिशब्दसूचितप्रक्रियया गुणसंसर्गजत्वं विवृणोति—तेषामिति । यथौषधादिविशिष्टदहनादिसंबन्धात्पार्थिवादिषु पाकजगुणारम्भः, तथात्रेति भावः । तत्तत्कार्यहेतुतया शास्त्रसिद्धानामनुपलब्ध्या निराकरणमयुक्तमित्यभिप्रायेणाह —कार्यैकनिरूपणीया इति । अतीन्द्रियाणामननुभूतानां कथं वासनाहेतुत्वमित्यत्राह—सत्त्वादिगुणयुक्तेति। मूलकारणापेक्षया श्रद्धायास्सात्त्विकादिसंज्ञाभेद इत्याह—ततश्चेति । सात्त्विकत्वादित्रैविध्येन श्राविताया पुनः 'शृणु'इति किमुच्यत इत्यत्राह—सा श्रद्धा यत्स्वभावेति । स्वरूपस्य सामान्यतस्त्रैविध्यस्य च विदितत्वादविदितप्रकारविशेषाभिप्रायेण 'शृणु' इत्युक्तम् ॥ २ ॥

प्र-पा ॥ १ ॥ | २. बृ. ३-५-३ ॥

शं॥स्वभावजा—जन्मान्तरकृतधर्मादिसंस्कारः मरणकाले अभिव्यक्तः'स्वभावः' उच्यते, ततो जाता स्वभावजा। सात्त्विकी सत्त्वनिर्वृत्ता देवपूजादिविषया । राजसी रजोनिर्वृत्ता यक्षरक्षःपूजादिविषया । तामसी तमोनिर्वृत्ता प्रेतपिशाचपूजादिविषया । एवं त्रिविधां ताम् उच्यमानां श्रद्धां शृणु अवधारय ॥ २ ॥

आ॥अतो विभज्याह—त्रिविधेत्यादिना ॥ २ ॥

ज॥ननु'तेषां निष्ठा तु का'इति पृष्टे सात्त्विकत्वादिकं वक्तव्यम्,त्रिविधेत्यादिकं तु किमर्थमुच्यत इत्यत आह—अत इति । यत एवमर्जुनेन वेदविधिमजानतां निष्ठा पृष्टा, अज्ञानं च भेदकं, त्रयाणामपि सम्भवात् । न चाज्ञानस्य प्रभेदाः सन्ति । अतः 'श्रद्धयान्विताः' इति तद्विशेषणत्वेनोक्तां श्रद्धां सात्त्विकत्वादिना विभज्य तदाश्रयेण तेषां स्वरूपमाहेत्यर्थः ॥ २ ॥

रा॥**सत्त्वम्**—अन्तःकरणं, सर्वस्य पुरुषस्यान्तःकरणानुरूपा श्रद्धा भवति; अन्तःकरणं यादृशगुणयुक्तं, तद्विषया श्रद्धा जायत इत्यर्थः; सत्त्वशब्दः पूर्वोक्तानां देहेन्द्रियादीनां प्रदर्शनार्थः।**श्रद्धामयोऽयं पुरुषः**—श्रद्धामयः—श्रद्धापरिणामः;**यो यच्छ्रद्धः**—यः पुरुषो यादृश्या श्रद्धया युक्तः,**सएव सः**—स तादृशश्रद्धापरिणामः; पुण्यकर्मविषये श्रद्धायुक्तश्चेत्, पुण्यकर्मफलसंयुक्तो भवतीति श्रद्धाप्रधानः फलसंयोग इत्युक्तं भवति ॥ ३ ॥

तदेव विवृणोति—

ता॥'सत्त्वानुरूपा'इत्यत्र न सत्त्वगुण उच्यते; सर्वस्य पुरुषस्य श्रद्धायास्तदधीनत्वे राजसतामसश्रद्धाविभागायोगात् । सहकारित्वेन सत्त्वं सर्वत्रापेक्षितमिति चेत्—न, रजस्तमसोरपि तथात्वात् । त्रैगुण्यं हि परस्पराङ्गभावेन स्थित्वैव हि वातपित्तकफादिवत्सर्वं कार्यमारभते । अतोऽत्र सर्वश्रद्धासाधारणकारणत्वेन निर्दिष्टं सत्त्वं गुणत्रयोपष्टब्धमन्तःकरणमेवेत्याह—**सत्त्वमन्तःकरणमिति** । आनुरूप्यं विवृणोति—**अन्तःकरणं यादृशगुणयुक्तमिति**। यद्विषयरुचिजनकवासनोत्तम्भकसत्त्वादियुक्तमित्यर्थः । पूर्वं 'देहिनां सा स्वभावजा' इत्युक्तम् ; इह त्वन्तःकरणहेतुकत्वमुच्यते; तदेतन्न वैकल्पिकं, सिद्धे तदयोगात्; नापि पुरुषभेदेन विकल्पः, सर्वस्येत्युक्तेः, नापि समुच्चयः, नैरपेक्ष्यप्रतीतेरित्यत्राह—**सत्त्वशब्द** इति । सामग्रीमध्यपातिषु तत्तत्रान्यतमनिर्देशो नानुपपन्न इति भावः।'श्रद्धामयः' इत्यत्र मयटस्स्वार्थिकत्वे निष्प्रयोजनत्वात्प्राचुर्यार्थत्वेऽपि प्रकृतानुपयोगाच्छ्रद्धाफलान्वयविवक्षया विकारार्थत्वमाह—**श्रद्धापरिणाम**इति । एवं सामान्येन श्रद्धाजन्यफलसंबन्धित्वमुक्तम् ; तत्र ' यो यच्छ्रद्धः 'इत्यादिना श्रद्धाविशेषवतः फलविशेष उच्यत इत्याह—**यः पुरुष**इति । श्रद्धान्तरवैधर्म्यद्योतनाय यत्तच्छब्दयोः यादृश्येत्यादिना प्रकारपरामर्शित्वोक्तिः । 'आयुर्घृतम्' इत्यादिवत्कार्यकारणभावातिशयविवक्षया 'स एव सः' इति निरूढोऽयमारोप इत्याह—**स तादृशश्रद्धापरिणाम**इति । एतेन 'स एव सः' इत्यत्र विधेयभेदाभावात्पुनरुक्तिशङ्कापि परिहृता । पुरुषस्य नित्यत्वाद्धर्मभूतज्ञानविकासादेश्चेन्द्रियद्वारा व्यवस्थितत्वाद्देहादेश्चाचित्परिणामविशेषत्वात्किमपेक्ष्य श्रद्धापरिणामत्वोक्तिरित्यत्राह—**पुण्यकर्मेति** । फलभेदबुभुत्सया ह्यत्र प्रश्नोदय इति च भावः ॥ ३ ॥

प्रक्रान्तश्रद्धायास्सात्त्विकत्वादिविभागोऽनन्तरं सात्त्विकराजसतामसश्रद्धेयैः प्रदर्श्यत इत्यभिप्रायेणाह—**तदेव विवृणोतीति**।तत्-फलविशेषणानां श्रद्धाविशेषाणां श्रद्धाविशेषनिबन्धनत्वमित्यर्थः।

प्र-पा ॥ १. विशेषयोगः. पा ॥ २. यजुः. २-काण्डे. ३-प्रश्ने. २-अनुवाके २-पं ॥

शं॥**सा इयं त्रिविधा भवति**—**सत्त्वानुरूपा** विशिष्टसंस्कारोपेतान्तःकरणानुरूपा **सर्वस्य** प्राणिजातस्य **श्रद्धा भवति भारत** । यदि एवं ततः किं स्यादिति ? उच्यते—**श्रद्धामयः** श्रद्धाप्रायः **अयं पुरुषः** संसारी जीवः । कथं?—**यः यच्छ्रद्धः**, या श्रद्धा यस्य जीवस्य सः यच्छ्रद्धः **स एव** तच्छ्रद्धानुरूप एव **सः** जीवः ॥ ३ ॥

आ॥**सत्त्वानुरूपा**—चित्तानुरूपा। **यो यच्छ्रद्धः स एव सः**—सात्त्विकश्रद्धः सात्त्विक इत्यादि ॥ ३ ॥

ज॥सात्त्विकत्वादिभेदेन श्रद्धा त्रिविधेत्युक्ता ; पुनः सत्त्वानुरूपा सर्वस्य श्रद्धा भवतीति वचनं कथं न व्याहतमित्यत आह—**सत्त्वेति** । चित्तं चैतन्यम् । जीव इति यावत् । ननु श्रद्धास्वरूपमेव निरूपितम् । न तु तदाश्रित्य जीवस्वरूपम्, अतो न सङ्गतमुत्तरमित्यतो येन तदुच्यते, तत्पठित्वा व्याचष्टे-य इति । इत्यादि ज्ञातव्यमिति शेषः । राजसश्रद्धो राजसः । तामसश्रद्धस्तामस इत्यर्थः ॥ ३ ॥

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४

रा॥सत्त्वगुणप्रचुराः सात्त्विक्या श्रद्धया युक्ता देवान् यजन्ते ; दुःखासंभिन्नोत्कृष्टसुखहेतुभूतदेवयागविषया श्रद्धा सात्त्विकीत्युक्तं भवति ; राजसा यक्षरक्षांसि यजन्ते; अन्ये तु तामसा जनाः प्रेतान् भूतगणान् यजन्ते; दुःखसंभिन्नाल्पसुखजननी राजसी श्रद्धा; दुःखप्रायात्यल्पसुखजननी तामसीत्यर्थः ॥ ४ ॥

एवं शास्त्रीयेष्वेव यागादिषु श्रद्धायुक्तेषु गुणतः फलविशेषः, अशास्त्रीयेषु *तपोयागप्रभृतिषु मदनुशासनविपरीतत्वेन न कश्चिदपि सुखलवः, अपित्वनर्थ एवेति हृदि निहितं व्यञ्जयन्नाह—

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५
कर्शयन्तश्शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तश्शरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६

ता॥पुरुषस्य सत्त्वादयो ह्युपचीयमानास्स्वानुरूपे विषये श्रद्धां जनयन्तीत्यभिप्रायेणाह—सत्त्वगुणप्रचुरा इति । सर्वेषु त्रैगुण्यसंश्रितेषु केनचिद्विशेषेण निर्देशस्तत्प्राचुर्यात् । तत्र सात्त्विक्या श्रद्धयेति पुरुषस्य सात्त्विकत्वकथनेन अर्थसिद्धहेतुकथनम् । श्रद्धाया एव स्वरूपेण निर्दिष्टत्वात् 'तां शृणु' इति श्रद्धास्वभावो हि ज्ञापयितुं विवक्षित इत्यभिप्रायेणाह —दुःखासंभिन्नेति । आराध्यसायुज्यादिर्हि ¹आराधनाना फलमित्यभिप्रायेण दुःखासंभिन्नत्वादिकथनम् । एवमुत्तरयोरपि भाव्यम् । तामसानामितरेभ्योऽत्यन्तवैधर्म्यज्ञापनायान्यशब्दः । भूतगणा रुद्रपार्षदादयः ॥ ४ ॥

एवमर्थात्प्रश्नस्य निषेधः कृतः ; अथ कण्ठोक्त्येत्यभिप्रायेणाह—एवमिति । 'न स सिद्धिम्' इत्यादिप्रागुक्तस्मारणाय—नकश्चिदपि सुखलव इत्युक्तम् । अपित्वनर्थ एवेत्यनेन पूर्वोक्तनरकपतनस्मारणम् । प्रश्नवाक्यगतश्रद्धान्वितत्वानुभाषणविवक्षया तत्कार्यातिप्रयासज्ञापनपरो घोरशब्द इत्यभि-

प्र-पा ॥ *दानतपो. पा ॥ १. आराधकाना. पा ॥

शं॥ततश्च कार्येण लिङ्गेन देवादिपूजया सत्त्वादिनिष्ठा अनुमेया इत्याह—यजन्ते पूजयन्ति सात्त्विकाः सत्त्वनिष्ठाः देवान्, यक्षरक्षांसि राजसाः, प्रेतान् भूतगणांश्च सप्तमातृकादींश्च अन्ये यजन्ते तामसाः जनाः ॥ ४ ॥

एवं कार्यतो निर्णीताः सत्त्वादिनिष्ठाः शास्त्रविध्युत्सर्गे । तत्र कश्चिदेव सहस्रेषु देवपूजादिपरः सत्त्वनिष्ठो भवति, बाहुल्येन तु रजोनिष्ठाः तमोनिष्ठाश्चैव प्राणिनो भवन्ति । कथम् ?—अशास्त्रविहितं न शास्त्रविहितं घोरं पीडाकरं प्राणिनाम् आत्मनश्च तपः तप्यन्ते निर्वर्तयन्ति ये जनाः,ते च दम्भाहङ्कारसंयुक्ताः, दम्भश्च अहङ्कारश्च दम्भा-

आ॥कः सात्त्विकश्रद्ध इत्यादि विभज्याह—यजन्त इत्यादिना ॥ ४ ॥

ज॥तां शृण्विति प्रतिज्ञातं नोच्यते, 'यजन्ते सात्त्विकाः' इत्यप्रस्तुतं चोच्यत इत्यत आह—क इति । इत्यादिजिज्ञासायामिति शेषः । विभज्य श्रद्धास्वरूपम् । प्रतिज्ञातं श्रद्धात्रैविध्यमेवोच्यते । अतो नासङ्गतिरिति भावः । एतेन सात्त्विका इत्यादेः सात्त्विकश्रद्धा इत्यादिरर्थ उक्तो भवति ॥ ४ ॥

रा॥ अशास्त्रविहितमतिघोरमपि तपो ये जनाः तप्यन्ते; प्रदर्शनार्थमिदम्; अशास्त्रविहितं बह्वायासं यागादिकं ये कुर्वते—दम्भाहंकारसंयुक्ताः कामरागबलान्विताः शरीरस्थं पृथिव्यादिभूतसमूहं कर्शयन्तो मदंशभूतं जीवं चान्तश्शरीरस्थं कर्शयन्तो

ता॥प्रायेणाह—अतिघोरमपीति। ननु'यजन्ते श्रद्धयान्विताः'इति यागविषये प्रश्ने तप्यन्त इति तपसोत्तरं कथं सङ्गच्छत इत्यत्राह— प्रदर्शनार्थमिदमिति। सङ्ग्राहकाकारं दर्शयन् फलितमाह—अशास्त्रविहितमिति। वेदबाह्यागमोक्तं वैदिकमप्यनधिकारिभिर्देशकालद्रव्यक्रियादिनियमानादरेणायथानुष्ठितं चाशास्त्रविहितम्। दारुणपर्यायघोरशब्दाभिप्रेतमाह—बह्वायासमिति। यागादिकमित्यनेन प्रश्नेऽपि यागग्रहणं प्रदर्शनार्थमिति ज्ञापितम्। अत एवाहि प्रश्नोत्तरयोरेकविषयत्वम्। शास्त्रैरचोदितानां चोदकान्तरमुच्यते—दम्भाहङ्कारसंयुक्ता इत्यादिना। बलमत्र कामरागयुक्तत्वादसात्त्विकम्। 'बलं बलवतां चाहं कामरागविवर्जितम्' इति हि प्रागुक्तम्। न केवलं परत्र नरकम्; अपित्विहापि कायकर्शनमित्यभिप्रायेण शरीरस्थभूतसमूहकर्शनोक्तिः। 'अन्तर्याम्यमृतः' 'अनश्नन्नन्योऽभिचाकशीति' 'नस्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इत्यादिभिः परमात्मनस्स्वरूपतो धर्मतो वा कर्शनासम्भवात्सम्भवेच शास्त्रविहितोपवासादिभिरपि प्रसङ्गाच्छरीरकर्शनेन च शरीरिणां क्षेत्रज्ञानां ज्ञानसुखादिसङ्कोचरूपस्य कर्शनस्य श्रुतिस्मृतिलोकसिद्धत्वात् 'अन्तश्शरीरस्थम्' इत्यनेन शरीरावच्छिन्नक्षेत्रज्ञत्वसूचनात् 'क्षेत्रज्ञं चापि मां विद्धि' 'ममैवांशः' इति प्रागुक्तप्रक्रियया सर्वशरीरकपरमात्मविशेषणांशभूत जीवविवक्षयात्र मामिति निर्देश इत्याह—मदंशभूतं जीवमिति। मच्छरीरभूतजीवपीडनं मत्पीडनतुल्यमिति दोषातिशयसूचनार्थोऽयमुपचारः। शास्त्रोल्लङ्घनेनात्मपीडनरूपमपि पापमेषामायातमित्यभिप्रायः। यज्ञस्य स्वतो याज्यभावनत्वाच्छास्त्रीयप्रकारविरहेऽपि नात्यन्तविकलता; तपसस्तु स्वतस्सर्व-

प्र·पा॥ १. पृष्टस्य तपसोत्तरं. पा॥
२. गी॥ ३. बृ. उप. ५-७-३॥
४. मु. उप. ३-१-१॥
५. शारी. ३-२-११॥
६. गी. १३-२॥
७. गी. १५-७॥

शं॥हङ्कारौ, ताभ्यां संयुक्ताः दम्भाहङ्कारसंयुक्ताः, कामरागबलान्विताः कामश्च रागश्च कामरागौ, तत्कृतं बलं कामरागबलं,तेन अन्विताः कामरागबलान्विताः; कामरागबलैर्वा अन्विताः॥ ५॥

कर्शयन्तः कृशीकुर्वन्तः शरीरस्थं भूतग्रामं करणसमुदायम् अचेतसः अविवेकिनः मां चैव तत्कर्मबुद्धिसाक्षिभूतम् अन्तःशरीरस्थं नारायणं कर्शयन्तः। मदनुशासना-

आ॥भगवत्कर्शनं नामाल्पदृष्टिरेव। 'यो वै महान्तं परमं पुमांसं नैवं द्रष्टा कर्शकः सोऽतिपापी' इत्यनभिम्लानश्रुतिः। आसुरो निश्चयो येषां त आसुरनिश्चयाः।

ज॥ननु निर्विकारस्य भगवतः कथं 'मां चैवान्तःशरीरस्थं कर्शयन्तः' इति कर्शनमुच्यत इत्यत आह—भगवदिति। 'प्रातिपदिकाद्धात्वर्थे बहुलम्' इति वचनात् दृष्टिरपि णेरर्थ इति भावः। मां चैव जीवरूपेणान्तःशरीरस्थमिति व्याख्यानं तु सम्यग्व्याख्यानेनैव परास्तम्, जीवरूपत्वदर्शनस्यैव कृशीकरणत्वात्। मदनुशासनाकरणमेव मत्कर्शनमिति व्याख्याननिरासार्थम् एवेत्युक्तम्,अशाब्दत्वात्। उक्तव्याख्याने श्रुतिसम्मतिं चाह—य इति। नैवं महत्त्वविरुद्धम्। द्रष्टेति तृन्नन्तम्। कर्शकस्तस्योच्यत इति शेषः। कर्मधारयत्वशङ्कानिरासार्थमाह—आसुर इति। निश्चयः श्रद्धा। कर्मधारयपक्षे

रा॥ ये तप्यन्ते, यागादिकं च कुर्वते; तानासुरनिश्चयान्विद्धि; असुराणां निश्चय आसुरो निश्चयः ; असुरा हि मदाज्ञाविपरीतकारिणः; मदाज्ञाविपरीतकारित्वात्तेषां सुखलवसंबन्धो न विद्यते; अपित्वनर्थव्राते पतन्तीति पूर्वमेवोक्तं 'पतन्ति नरकेऽशुचौ' इति ॥ ५ ॥ ६ ॥

अथ प्रकृतमेव शास्त्रीयेषु यज्ञादिषु गुणतो विशेषं प्रपञ्चयति ; तत्राहारमूलत्वात्सत्त्वादिवृद्धेराहारत्रैविध्यं प्रथममुच्यते ; *'अन्नमयं हि सोम्य मनः', †'आहारशुद्धौ सत्त्वशुद्धिः' इति हि श्रूयते—

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७

आहारोऽपि सर्वस्य प्राणिजातस्य सत्त्वादिगुणत्रयान्वयेन त्रिविधः प्रियो भवति; तथैव यज्ञोऽपि त्रिविधः, तथा तपो दानं च ; तेषां भेदमिमं शृणु—तेषामाहारयज्ञत-

---

ता॥कर्शनतया शास्त्रीयप्रकाराभावे भावनत्वं न स्यादिति हैतुकप्रायाणां विभागं प्रतिक्षेप्तुमाह—**यागादिकं चे**ति । आसुरो निश्चयो येषां तेऽत्रासुरनिश्चयाः; तत्र तद्धितस्येह सम्बन्धमात्रपरतामाह—**आसुराणा**मिति । तदभिप्रेतनिश्चयस्य विशेषं व्यञ्जयितुमाह—**असुरा ही**ति । आसुरनिश्चयत्वख्यापनं प्रागुक्तानर्थपर्यवसानप्रकाशनायेत्याह—**मदाज्ञाविपरीतकारित्वा**दिति । 'आसुरनिश्चयान्' इत्येतावता कथमयमर्थस्सिद्ध्येदित्यत्राह—**पूर्वमेवे**ति ॥ ६ ॥

एवमुत्तरे प्रतिषेधरूपेऽर्थतः कण्ठोक्त्या च दत्ते पुनराहारादित्रैविध्यवर्णनमबुभुत्सितोपन्यासस्स्यादित्यत्राह—**अथ प्रकृतमेवे**ति । अयमभिप्रायः—अशास्त्रीयेषु सत्त्वादिनिष्ठामूलफलभेदे बुभुत्सिते शास्त्रीयेष्वेवायमिति प्रत्युक्तम् । तत्र श्रद्धातद्वतां श्रद्धेयानां च गुणतो विभाग उपन्यस्तः । तच्छ्रवणादेव तत्तुल्ययोगक्षेमेषु सर्वेषु बुभुत्सा भीमत्सोर्जायते।अत एव तद्भेदोपन्यासः—इति।**प्रपञ्चयती**त्यनेन पौनरुक्त्यशङ्कापि परिहृता । यज्ञतपःप्रभृतिषु शास्त्रीयेषु तिष्ठत्सु रागप्राप्तस्याहारस्य प्रथमोपदेशः केनाभिप्रायेणेत्यत्राह—**तत्रे**ति । 'वृद्धिस्समानैस्सर्वेषां विपरीतैर्विपर्ययः' इत्यायुर्वेदोक्तन्यायसञ्चारादाप्यायकद्रव्यगुणानुसारेणान्तःकरणादेस्सत्त्वादिवृद्धिश्श्रौतीत्यभिप्रायेण—**अन्नमय**मिति । आहारस्य सत्त्वस्यचात्र रजस्तमोराहित्यं शुद्धिः । अपिशब्दः प्रागुक्तश्रद्धेयदेवतादिभेदवत्सात्त्विकादिविभागानुकर्षणार्थः । 'पचाम्यन्नं चतुर्विधम्' इति प्रागुक्तचातुर्विध्याविरोधाय चतुर्विधेऽप्येतद्गुणकृतत्रैविध्यमिहोच्यत इत्यभिप्रायेणाह—**सत्त्वादिगुणत्रयान्वयेने**ति । 'त्रिविधः' इति सामान्यतो वि-

**प्र-पा॥** * छा. ३-५-४ ॥ † छा. उप. ७-२६-२॥ १. अष्टाङ्गहृदये ॥ २. गी. १५. १४ ॥

---

शं॥करणमेव मत्कर्शनम्; तान् विद्धि आसुरनिश्चयान्, असुराणां निश्चयो येषां ते आसुरनिश्चयाः तान् परिहरणार्थं विद्धि इति उपदेशः ॥ ६॥

आहाराणां च रस्यस्निग्धादिवर्गत्रयरूपेण भिन्नानां यथाक्रमं सात्त्विकराजसताम-

---

आ॥'देवास्तु सात्त्विकाः प्रोक्ता दैत्या राजसतामसाः' इत्यग्निवेश्यश्रुतिः ॥ ६ ॥

---

ज॥हि सामानाधिकरण्यं गौणमिति कल्प्यम् । मत्वर्थीयप्रत्ययो वा । तथाच गौरवमिति भावः। ननु प्रकरणात्तामसनिश्चयानिति वक्तव्यम्, आसुरनिश्चयानिति कथमुक्तमित्यत आह—**देवास्त्वि**ति । सात्त्विकाः देवाः देवपर्यायवाच्याः प्रोक्ताः।राजसास्तामसाश्च दैत्याः दैत्यपर्यायवाच्याः प्रोक्ता इत्यर्थः॥

रा॥पोदानानां सत्त्वादि*भेदेनेममुच्यमानं भेदं शृणु ॥ ७ ॥

आयुस्सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहारास्सात्त्विकप्रियाः ॥ ८

सत्त्वगुणोपेतस्य सत्त्वमया आहाराः प्रिया भवन्ति ; सत्त्वमयाश्चाहारा आयुर्विवर्धनाः, पुनरपि सत्त्वस्य विवर्धनाः, सत्त्वमन्तःकरणम्, अन्तःकरणकार्यं ज्ञानमिह सत्त्वशब्देनोच्यते, †'सत्त्वात्सञ्जायते ज्ञानम्' इति सत्त्वस्य ज्ञानविवृद्धिहेतुत्वात्, आहारोऽपि सत्त्वमयो ज्ञानविवृद्धिहेतुः, तथा बलारोग्ययोरपि विवर्धनाः, सुखप्रीत्योरपि

ता॥भागेऽपि विशेषतो वक्ष्यमाणाकारापेक्षयेहेदमुच्यत इत्याह—**सत्त्वादिभेदेनेममिति**। वक्ष्यमाणस्यासत्त्या वर्तमानव्यपदेश इत्याह—**उच्यमानमिति** । गुणानां स्वविशिष्टानुभवजनितवासनाद्वारा स्वानुरूपविषयरुचिजननात्तत्तदाहाराणां तत्तद्गुणविशिष्टप्रियत्वम् ॥ ७ ॥

आयुर्विवर्धनत्वादय आहारगुणाः केचिदायुर्वेदादवगन्तव्याः; केचिच्छास्त्रनिरपेक्षाः प्रत्यक्षत एव सिद्धाः ; पूर्वमेव सत्त्वविवृद्ध्या हि सात्त्विकाहाररुचिरित्यभिप्रायेणाह—**पुनरपीति** । आयुषस्सर्वपुरुषार्थनिष्पादनोपयोगित्वेन प्रथमग्रहणम्; सत्त्वस्य तु विशेषतो मुमुक्षोरपेक्षितत्वात्तदनन्तरोक्तिः । 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः' इति श्रुतेरुपबृंहणार्थत्वादाहारसाध्यसत्त्वविवृद्धिज्ञानपर्यन्तेत्यभिप्रायेण ज्ञाने सत्त्वशब्दमुपचारयितुं तत्कारणे तावदवतारयति—**सत्त्वमन्तःकरणमिति** । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इति ज्ञानविशेषे च सत्त्वशब्दः प्रयुक्तचर इत्यभिप्रायेणाह—**अन्तःकरणकार्यं ज्ञानमिति**। **इह**—आहारशुद्धिश्रुत्युपबृंहणदशायामित्यर्थः । यथा तत्तद्द्रव्यगतानां रसादीनां शरीरधात्वादिपोषकत्वेन शास्त्राभिहिततत्तद्द्रव्याणामपि तथा व्यपदेशः; तथेहापि सत्त्वगुणस्य ज्ञानविवृद्धिहेतुत्वे तदाश्रयस्याहारद्रव्यस्यापीत्यभिप्रायेणाह—**सत्त्वात्संजायते ज्ञानमिति**। बलारोग्ययोस्सुखप्रीत्योश्च निरन्तरपाठस्समुचित्य प्रवृत्त्या परस्पराविनाभावविवक्षयेत्यभिप्रायेण—**बलारोग्ययोस्सुखप्रीत्योरिति** द्वन्द्वविभजनम् । बलमिह प्राणाग्न्योरुपचयः ; आरोग्यं धातुसाम्यादि। कर्मदोषाग्निधातुवैषम्येण हि रोगाः प्रादुष्पतन्ति । तस्य रस्यत्वहृद्यत्वाभ्यां तादात्विकसुखजनकत्वसिद्धेस्तत्पौन-

प्र-पा॥ * गुणभेदेन. पा ॥ † गी. १४-१७ ॥ २. छा-उप-७-२६-२॥ ३. नामलिङ्गानुशासने ३. काण्डे नानार्थवर्गे वान्तेषु ॥
१. वक्ष्यमाणाकारापेक्षयेह भेद उच्यते. पा ॥

शं॥सपुरुषप्रियत्वदर्शनम् इह क्रियते-रस्यस्निग्धादिषु आहारविशेषेषु आत्मनः प्रीत्यतिरेकेण लिङ्गेन सात्त्विकत्वं राजसत्वं तामसत्वं च बुद्ध्वा रजस्तमोलिङ्गानाम् आहाराणां परिवर्जनार्थं सत्त्वलिङ्गानां च उपादानार्थम् । तथा यज्ञादीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वप्रतिपादनम् इह 'राजसतामसान् बुद्ध्वा कथं नु नाम परित्यजेत्, सात्त्विकानेव अनुतिष्ठेत्' इत्येवमर्थम् । आह—आहारस्त्वपि सर्वस्य भोक्तुः प्राणिनः त्रिविधो भवति प्रियः इष्टः, तथा यज्ञः, तथा तपः, तथा दानम् । तेषाम् आहारादीनां भेदम् इमं वक्ष्यमाणं शृणु ॥ ७॥

आयुश्च सत्त्वं च बलं च आरोग्यं च सुखं च प्रीतिश्च आयुस्सत्त्वबलारोग्यसुखप्रीतयः,तासाम् आयुस्सत्त्वादीनां विवर्धनाः आयुस्सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ते

रा॥विवर्धनाः—परिणामकाले स्वयमेव सुखस्य विवर्धनाः,तथा प्रीतिहेतुभूतकर्मारम्भद्वारेण प्रीतिवर्धनाः,रस्याः—मधुररसोपेताः,स्निग्धाः—स्नेहयुक्ताः, स्थिराः—स्थिरपरिणामाः,हृद्याः-रमणीय*विशेषाः,एवंविधास्सत्त्वमयाः आहारास्सात्त्विकस्य पुरुषस्य प्रियाः॥

**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥** ९

ता॥रुक्त्यपरिहाराय सुखवर्धकत्वं—परिणामकालइति विशेषितम्। प्रीतिवर्धकत्वाद्भेदप्रदर्शनाय-स्वयमेवेत्यद्वारकत्वोक्तिः। यथोन्मादादिहेतुभूतानि द्रव्याणि भक्षितानि लोकोद्वेगादिजनककर्मद्वारा पुरुषस्याप्रीतिं वर्धयन्ति; तथा सत्त्वहेतुभूतान्यपि मङ्गलेषु लोकोपकारकेषु परलोकादिहितेषु च कर्मसु प्रचोद्य तद्द्वारेण प्रीतिं जनयन्तीत्यभिप्रायेणाह —प्रीतिहेतुभूतकर्मारम्भद्वारेणेति। 'कट्वम्ल'इत्यादिना रसान्तराणामसात्त्विकत्वेन वक्ष्यमाणत्वात्तत्प्रयोगप्राचुर्यानुसाराच्च अत्र रसशब्दो रसविशेषविषय इत्याह—मधुररसोपेताइति । अनेन प्रत्ययस्यात्र संबन्धमात्रोपलक्षकतापि दर्शिता । रस्यन्त इति वा रस्याः । तत्र मधुररसोपेताइति कारणोक्तिः । माधुर्यं हि रसान्तरेभ्यश्शरीरस्थितौ विशेषेण हेतुर्भवति । यथोक्तं वाहटेन 'रसास्स्वाद्वम्ललवणतिक्तोषणकषायकाः । षड्द्रव्यमाश्रितास्तेच यथापूर्वं बलावहाः' इति । भोजनं च स्वस्थस्य मधुररसप्रायतया नियम्यते—'षड्रसान्मधुरप्रायान्नातिद्रुतविलम्बितम्'इति।रसायनादिकालेषु च मधुर एवैको विधीयते। एवं स्नेहयुक्त आहारोऽपि रौक्ष्यविरोधी रूक्षेण वायुना शरीरस्यापि विशरारुतां वारयतीत्यप्यायुर्वेदावसितम् । अद्यमान आहारे स्वरूपस्थैर्यस्यासंभवाद्गुणत्वाच्च शरीराख्यसंघातस्थैर्यहेतुभूतरसरुधिरमांसमेदोस्थिमज्जाशुक्राख्यधातुसप्तकरूपपरिणामस्य बलादेश्च स्वसाध्यस्य चिरकालस्थायित्वलक्षणं स्थैर्यं विवक्षितमित्याह—स्थिरपरिणामाइति । उपयोगात्पूर्वमेव जुगुप्सनीयसन्निवेशरूपाविशेषादिविरहात्संदर्शनमात्रेणापि प्रीतिजनकत्वमिह हृद्यत्वमित्याह—रमणीयविशेषाइति।एषु धर्मशास्त्रायुर्वेदयोरुभयोरपि सांगत्यं,तेषां सर्वेषामिदमुपलक्षणमित्यभिप्रायेणाह—एवंविधाइति । एतेन प्रागुक्तयुक्ताहारत्वं च विवृतम् ॥ ८ ॥

प्र-पा ॥ * वेषाः पा ॥ १. अष्टाङ्गहृदये ॥ २ ॥

शं॥च रस्याः रसोपेताः स्निग्धाः स्नेहवन्तः स्थिराः चिरकालस्थायिनः देहे हृद्याः हृदयप्रियाः आहाराः सात्त्विकप्रियाः सात्त्विकस्य इष्टाः ॥ ८ ॥

आ॥प्रीतिरनन्तरिका, हृद्यत्वं दर्शने । स्थिराश्च न तदैव पक्का भवन्ति । तथा ह्याज्यादयः ॥ ८ ॥

जा॥प्रीतिविवर्धनाः हृद्या इत्येतयोरर्थभेदमाह—प्रीतिरिति । अनन्तरिकेति—ठन्प्रत्ययान्तम् । सेवाव्यवहितकाल इत्यर्थः, 'प्रियं तत्कालसौख्यदम्' इति वचनात् । दर्शनेऽनुभवे सति पश्चादपि यन्मनोहारित्वं, तद्धृद्यत्वम्; 'हृद्यं पश्चान्मनोहारि' इति वचनादित्यर्थः । आहाराणां क्षणिकानामभावात्कथं स्थिरा इति विशेषणमित्यत आह—स्थिराश्चेति । चस्त्वर्थः । प्रसिद्धं स्थैर्यं व्यावर्तयति। तदैव अचिरकाल एव। पक्वाः—निर्वृत्तपाकाश्चिरकालं देहे गुणप्रदा इत्यर्थः । असंभवपरिहाराय तानुदाहरति—तथाहीति ॥ ८ ॥

रा ॥ कटुरसाः, अम्लरसाः, लवणोत्कटाः, अत्युष्णाः, अतितीक्ष्णाः, रूक्षाः, विदाहिनश्चेति कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः; अतिशैत्यातितैक्ष्ण्यादिना दुरुपयोगास्तीक्ष्णाः; शोषकरा रूक्षाः; तापकरा विदाहिनः; एवंविधा आहारा राजसस्येष्टाः; तेच रजोमयत्वाद्दुःखशोकामयवर्धनाः रजोवर्धनाश्च ॥ ९ ॥

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १०

यातयामं —चिरकालावस्थितं,गतरसं—त्यक्तस्वाभाविकरसं, पूति —दुर्गन्धोपेतं,पर्यु-

ता॥कट्वम्लशब्दयोस्त्रिकटुकतिन्त्रिण्यादिषु विशेषतः प्रयोगादिह तावन्मात्रविवक्षाव्युदासायाह—कटुरसा अम्लरसाइति। सात्त्विकस्यापि व्रतादिव्यतिरिक्तकालेषु रुचिमात्रार्थलवणयोगानुमतेः स्वरूपतो लवणस्याहारत्वासंभवात्प्रत्यक्षलवणस्य गोमांसतुल्यतया स्फुटनिषेधाचात्र तद्व्यतिरिक्तापेक्षया लवणशब्द इत्यभिप्रायेणाह —लवणोत्कटाइति। 'स्निग्धमुष्णं च भोजनम्'इति कोष्णस्य भोजनस्य विहितत्वात्—अत्युष्णेतिविशेषितम्। 'कट्वादीनां विदाहिनः' इति भ्रमव्युदासायात्र समासोक्तिः।तीक्ष्णस्यापि मरीच्यादेस्तत्तद्द्रव्यरोचनार्थं मात्रयानुमतेस्तत्राप्युपसर्गस्यान्वयो दर्शितः। उष्णस्य पृथगुपात्तत्वादत्र तीक्ष्णशब्दो न तत्पर्यायः; आशुकारिषु मरीच्यादिष्वायुर्वेदे तीक्ष्णत्वमुच्यते, अतोऽत्र प्रयोगक्षणप्रभृति प्रतिकूलतमानि द्रव्याणि तीक्ष्णानीत्यभिप्रायेणोदाहरति—अतिशैत्येति। स्नेहप्रतिपक्षभूतो गुणो रौक्ष्यमनुशिष्यत इत्यभिप्रायेणाह—शोषकरा रूक्षाइति। वातकोपनत्वमनेन सिद्धम्। अत्र विदाहिशब्दे प्रकृतिप्रत्यययोर्विवक्षितं व्यनक्ति—तापकराइति। पित्तकोपना इत्यर्थः। एवंविधा इति पूर्ववत्। 'तृष्णासङ्गसमुद्भवम्' इत्यादि प्रागुक्तं स्मारयति—रजोमयत्वादिति। कटुप्रभृतीनां दुःखादिहेतुत्वं च प्रायशोऽन्वयव्यतिरेकयोग्यमायुर्वेदविशोधितंच। दुःखप्रदत्वं धातुवैषम्यादिद्वारा; शोकप्रदत्वं तत्परामर्शजपश्चात्तापादिना; आमयः कालक्रमेण। न केवलमत्रैव तमोवद्दुःखादिहेतुत्वम्; अपितु परंपरया परलोके देहान्तरेऽपीत्यभिप्रायेण सत्त्ववर्धकसात्त्विकाहारसमानन्यायसिद्धमर्थमाह—रजोवर्धनाश्चेति ॥ ९ ॥

सात्त्विकराजसाहारयोर्गुणकार्यकथनेऽपि तामसे गुणमात्रकथनमदूरविप्रकर्षेण राजससमानकार्यत्वात् सर्वेष्वाहारेषु यामातिक्रमणमात्रेण दोषाभावात्तेषुतेषु द्रव्येषु यावता कालेन दुष्टता, तावद्विवक्षामाह—यातयामं चिरकालावस्थितमिति। यामश्श्रेष्ठोऽशः; यथा 'घृतात्परं मण्डमिवातिसूक्ष्मम्' इति केचित्। तेन निर्वीर्यत्वमुक्तं भवति। तदपि चिरकालावस्थितमित्यनेन अर्थसिद्धम्। अम्मयेषु पृथिवीमयेषु च आहारेषु तत्तत्पाकभेदेनापि कदाचिदपि सर्वरसत्यागाभावात्तत्तद्द्रव्यस्वभावतयानुशिष्टरसत्यागेन रसान्तरापत्तिरिह गतरसशब्देन विवक्षितेत्याह—त्यक्तस्वाभाविकरसमिति। एतेन गत-

प्र-पा ॥ १. अष्टाङ्गहृदये-सूत्रस्थाने. ७ अ॥ | २. गी. १४-७ ॥

शं॥ कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः—इत्यत्र अतिशब्दः कट्वादिषु सर्वत्र योज्यः, 'अतिकटुः' 'अतितीक्ष्णः' इत्येवम्—कटुश्च अम्लश्च लवणश्च अत्युष्णश्च तीक्ष्णश्च रूक्षश्च विदाही च ते आहाराः राजसस्य इष्टाः दुःखशोकामयप्रदाः दुःखं च शोकं च आमयं च प्रयच्छन्तीति दुःखशोकामयप्रदाः ॥ ९ ॥

यातयामम् अर्धपक्वं, निर्वीर्यस्य गतरसशब्देन उक्तत्वात्। गतरसं रसवियुक्तम्,

रा॥षितं—कालातिपत्त्या रसान्तरापन्नम्, उच्छिष्टं—गुर्वादिभ्योऽन्येषां भुक्तशिष्टम्, अमे-

ता॥रसशब्देन निर्वीर्यस्योक्ततया 'यातयामं मन्दपक्वम्' इति व्याख्या निरस्ता। यद्यपि पूतिशब्दोऽसात्त्विकतया भगवच्छास्त्रादिसिद्धे करञ्जादिद्रव्येऽपि प्रयुज्यते; तथापि अत्र द्रव्यविशेषोपादानप्रकरणाभावाद्गुणादिमुखेन सर्वाहारोपलक्षणप्रकरणाच्चात्र पूतिशब्देन हेयतया लोकशास्त्रप्रसिद्धगुणविवक्षामाह—**दुर्गन्धोपेतमि**ति। कालातिपत्तिमात्रस्य यातयामशब्देन ग्रहणात् रसत्यागस्य 'गतरसम्' इत्युक्तत्वात् येषु कालातिपत्तौ दोषः, क्षीरादिष्विवातञ्चनादिभिश्च रसान्तरापत्तिः, तत्र कालातिक्रमणमात्रेण रसान्तरापन्नत्वमिह विवक्षितमित्याह—**कालातिपत्त्या रसान्तरापन्न**मिति। हेयविकृत्यन्तरादीनामुपलक्षणमिदम्। अत एव पक्वानामविकलानामपि जलादीनां रात्र्यन्तरितानां त्यागः। एतेन यातयामशब्दोऽत्र रसान्तरापत्तिरहितकालातिक्रममात्रदुष्टविषय इति दर्शितम्। उच्छिष्टविशेषस्य शास्त्रानुमतेराचार्योच्छिष्टस्य च पापविशेषप्रायश्चित्ततया पवित्रत्वेनापि ग्रहणात्तद्व्यतिरिक्तविषयोऽत्र उच्छिष्टशब्द इत्याह—**गुर्वादिभ्योऽन्येषामि**ति। **गुर्वादी**त्यादिशब्देन पितुः ज्येष्ठस्य भ्रातुः भार्याविषये भर्तुश्च ग्रहणम्। यत्तु '[1]अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्। तस्या उच्छेषणमददुः। तत्प्राश्नात्। सा रतोऽधत्त' इत्यादौ उच्छेषणप्राशनमाम्नायते; तद्ब्रह्मौदनादिविधिपरत्वादन्यपरम्। भुक्तावशिष्टपाकपात्रस्थौदनविषयत्वेऽप्यविरुद्धम्। अप्राप्तत्वाद्विधिपरत्वस्वीकारेऽपि अदितिसाध्यदेवसंव्यवहारमात्रविषयम्। न तावता अद्यतनानामनुष्ठानप्राप्तिः; प्राप्तावपि तथाविधकर्मनियतम्। नचात्र विधिस्तत्कल्पनावकाशश्चेत्यप्राप्तिरेव। यत्तु भगवता नारदेन जातिस्मरेण प्राचीनशूद्रजन्मानुष्ठानमनुसृत्योक्तम् '[2]उच्छिष्टलेपाननुमोदितो द्विजैस्सकृत्स्म भुञ्जे तदपास्तकिल्बिषः' इत्यादि; तदपि तस्मिन् जन्मनि नारदस्तेषां शिष्यश्शूद्रश्चेति तादृशेष्वेव तत्प्राप्नोति; नान्यादृशेषु। तथा सति हि वाक्यान्तरमपि न विरुध्यते। न च वचनविरोधे लिङ्गदर्शनमात्रेणानुष्ठानक्लृप्तिः। प्रतिषेधति ह्याचार्यपुत्रादेरप्युच्छिष्टम्—'[3]उच्छिष्टाशनवर्जमाचार्यवदाचार्यपुत्रे वृत्तिः' इत्यादिना। किमुतान्येषाम्? भागवतस्य तु आचार्यव्यतिरिक्तसमस्तोच्छिष्टभक्षणेऽपि तीव्राणि प्रायश्चित्तान्यनुशिष्यन्ते। यथा सनत्कुमारीयसंहितायाम् उदाहृतमित्यागमप्रामाण्ये भगवद्यामुनाचार्यैरुपात्तं 'निर्माल्यं भक्षयित्वैवमुच्छिष्टमगुरोरपि। मासं पयोव्रतो भूत्वा जपन्नष्टाक्षरं सदा। ब्रह्मकूर्चं ततः पीत्वा' इत्यादि। भाष्ये चात्र गुरुशब्द आचार्यविषयः पितृविषयो वेत्ययुक्तम्, गुरुशब्दार्थोपाध्यायाद्युच्छिष्टग्रहणशास्त्राभावात्। नच यत्किञ्चिदुपदेशमात्रेऽप्याचार्यत्वम्, '[4]उपनीय तु यश्शिष्यं वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते' इत्यादिभिस्तल्लक्षणात्, अन्यत्र प्रयोगस्योपचारादपि संभवात्। यश्चोपनेता प्रणवादिमात्रमुपदिश्य विरतः, यश्च केवलं रहस्यशब्दनिर्दिष्टा मोक्षसाधनभूता विद्यास्तत्तच्छ्रुतिमुखेन शिक्षयति, तयोरप्याचार्यत्वादिकं वचनबलादङ्गीक्रियते। उक्तंच गुर्वादिलक्षणं भगवता याज्ञवल्क्येन—'[5]स गुरुर्यः क्रियाः

**प्र-पा** ॥ ११ ॥

१. भागवते. १-५-२५ एवं प्रवृत्तस्य विशुद्धचेतसस्तद्धर्म एवात्मरुचिः प्रजायते' इति 'उच्छिष्ट' इत्यस्योत्तरार्धम् ॥

३. आपस्तम्बधर्मे. १. प्रश्ने. २. पटले, ७. खण्डे. ३०. सूत्रम् ॥

४. व्यासस्मृतौ. १-४३. मनुः-२-१४० ॥

५. याज्ञवल्क्यस्मृतौ. १. अध्या. २. प्रकर. ३४. श्लो. 'सगुरुः...उदाहृतः॥ ३४॥ एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते। एते मान्या यथापूर्वमेभ्यो माता गरीयसी'॥ ३५॥ मनुः. २-१४१. 'एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः। योऽध्यापयति वृत्त्यर्थमुपाध्यायस्स उच्यते' ॥

ता॥ध्यम्—अयज्ञार्हम् अयज्ञशिष्टमित्यर्थः: एवंविधं तमोमयं भोजनं*तामसप्रियं भवति ;

ता॥कृत्वा वेदमस्मै प्रयच्छति । उपनीय तु तद्वेदमाचार्यस्स उदाहृतः। एकदेशमुपाध्यायः'इति । यत्तु 'एकाक्षरप्रदातारमाचार्यं योऽवमन्यते' इत्यादि, तदवमतिनिवारणाद्यर्थमाचार्यदृष्टिमात्रेणोच्यते ; न तावता आचार्यत्वप्रयुक्तसर्वोपनिपातः। यद्यप्याचार्यशब्दो निरुक्त्याद्यनुसारादस्त्रशस्त्रादिशिक्षकेषु द्रोण-कृपादिषु प्रयोगप्रौढ्या च यथाप्रयोगं सर्वत्र मुख्य इति कैश्चिदङ्गीक्रियेत; तथाप्युच्छिष्टभक्षणानुमति-निदानमाचार्यत्वं प्रणवादिलिकपूर्वकपरविद्योपदेष्टृत्वेनैव तथैव शास्त्रैर्नियमाच्छिष्टाचाराच्च । प्रत्यक्षश्रुत्या-दिविरुद्धस्तु भ्रान्तानामभिप्रायान्तरेण शास्त्रोल्लङ्घिनामप्याचारो न शिष्टाचारः'। यदपि कैश्चित्पठ्यते 'नारायणैकनिष्ठस्य याया वृत्तिस्तदर्चनम्। यो यो जल्पस्स जपस्तद्ध्यानं यन्निरीक्षणम् । तत्पादाम्ब्वतुलं तीर्थं तदुच्छिष्टं सुपावनम् । तदुक्तिमात्रं मन्त्राग्र्यं तत्स्पृष्टमखिलं शुचि' इति, इदमपि नारायणैकनि-ष्ठप्रशंसापरम् ; न तु स्वयं विधायकम् । अन्यतः प्राप्तेरेव ह्यत्र प्रशंसा । तत्र प्रथमश्लोकस्स्वभावप्राप्तम-र्थप्राप्तं चानुवदति; यच्च शास्त्रप्राप्तम् ; न तु पुनश्शास्त्रान्तरनिषिद्धपरामर्शि । प्रमाणप्राप्तविषयत्वादे-वहि 'अतुलं सुपावनमग्र्यमखिलम्' इति विशेषणेषु संरम्भः । 'ब्राह्मणाः पादतो मेध्याः' इत्यादिभि-र्विप्रपादोदकस्य सामान्यतः पावनत्वप्राप्तौ भागवतत्वावस्थायाम् अतुलं तीर्थमिति विशेष्यते। एवमने-कान्तिनोऽप्युपनेतृप्रभृतेरुच्छिष्टे पावनत्वेन प्राप्ते तस्य नारायणैकनिष्ठत्वदशायां सुपावनत्वं विधीयते । तथा महापुरुषकृतस्तुत्यादेर्मङ्गलतमत्वे सिद्धे 'तदुक्तिमात्रं मन्त्राग्र्यम्' इति भगवदनन्यप्रणीतस्य गा-थागीतादेरपि मन्त्राग्र्यवत्फलादिहेतुत्वं प्रतिपाद्यते । एवं शुद्धानां शोधकापेक्षाया निर्णेजनादिवन्म-हात्मनां स्पर्शोऽपि माहात्म्यविशेषवशादिच्छाशोधकतया प्राप्तः ' तत्स्पृष्टमखिलं शुचि'इत्यनेन सर्व-स्यापि द्रव्यस्य पृथक्चोदितशोधकभेदस्य भागवतस्पर्श एकश्शोधको भवितुमर्हतीत्युच्यते । अन्यथा भागवतेन यदृच्छादिस्पृष्टचण्डाललशुनगृञ्जनाद्यशुद्धग्रहणेनालेपकपादवत्स्पृश्यास्पृश्यभक्ष्याभक्ष्याद्यद्वैत-प्रसङ्गः । एतेन परमातस्य भक्ताङ्घ्रिरेणोर्भाषागाथापि निर्व्यूढा । एवं हि सा संस्कृतेन विपरिणंस्यते— 'दिव्यैरवेद्यविभवेति यदि ब्रुवन्ति माध्वीमनोज्ञतुलसीक यदीति चाहुः। ऊनक्रिया अपि परानपि का-रयन्तो भुक्ताधिकं ददति चेन्ननु तत्पवित्रम्' इति । इदमपि संकीर्तनप्रशंसापरमितिप्रकरणात्स्ववाक्य-स्वारस्याच्च सुव्यक्तम् । भुक्तशेषशब्दश्च पाकपात्रस्थविषयत्वेऽपि न विरुद्धः; यथा 'अन्नशेषः किं क्रियताम्' इत्यत्र अवशिष्टम् । भुक्तशिष्टं तु पाकपात्रस्थमपि त्याज्यमेव। तत्परिहारार्थोऽयं प्रतिप्रसवः। अन्यथापि प्रमाणान्तराविरोधायाचार्याद्युच्छिष्टविषयमेव स्यात् । तथाहि 'ऊनो हीनः परिस्रस्तो नष्टः' इति विकलभागवतान् दुष्कर्मतारतम्याच्चतुर्धा रहस्याम्नानायविदस्समामनन्ति। तत्रोनत्वाद्यवस्थायामा-चार्योच्छिष्टस्यापवित्रत्वं प्रसक्तम् : तत्र यद्यनन्यत्वस्थैर्यव्यञ्जनसंकीर्तनं स्यात् , तदा तदुच्छिष्ट-मपवित्रं न भवतीति अनन्यत्वभङ्गे ह्याचार्यस्यापि सर्वथा वर्जनं तत्रैवाम्नातमित्यलमतिप्रसङ्गेन । मेधा-विरोधिन्यप्यमेध्यशब्दप्रयोगात्तस्य च दृष्टप्रत्यवायमात्रपर्यवसानात्ततोऽपि दोषातिशयसूचनाय मेधोऽत्र यज्ञः, तदर्हं मेध्यं, तद्विपरीतममेध्यमित्याह—**अयज्ञार्हमि**ति । ननु यज्ञार्हस्यापि द्रव्यस्याभक्षणीयत्वं मन्वादिभिरुच्यते, यथा 'वृथा कृसरसंयावं पायसापूपमेव च । अनुपाकृतमांसानि देवान्नानि हवींषि च'

प्र-पा॥*तामसस्य प्रियं-पा ॥ १. अत्रिस्मृतौ. १- ७. प्रकर। किञ्चिदन्यथा पठ्यतेऽयं श्लोकः 'देवतार्थं
१०. 'शुना योनिशतं गत्वा चण्डालेष्वपि जायते' । हविः शिग्रं लोहितान् व्रश्चनांस्तथा । अनुपाकृतमां-
इत्युत्तरार्द्धम् ॥ २ ॥ सानि विड्जानि कवकानि च॥१७१॥ क्रव्यादान्छकुनान्
३ ॥ ४ ॥ काष्ठवन्छकावकविष्किरान् । वृथाकृसरसंयावपाय-
५. मनुः. ५-७. याज्ञवल्क्यस्मृतौ तु (१. अ- सापूपशष्कुलीः' ॥१५२॥—इति ॥

रा॥भुज्यत इत्याहार एव भोजनम्;पुनश्च तमसो वर्धनम्; अतो हितैषिभिस्सत्त्वविवृद्धये सात्त्विकाहार एव सेव्यः ॥ १० ॥

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनस्समाधाय स सात्त्विकः ॥ ११

फलाकाङ्क्षारहितैः पुरुषैः विधिदृष्टः—शास्त्रदृष्टः मन्त्रद्रव्यक्रियादिभिर्युक्तो यष्टव्यमेवेति—भगवदाराधनत्वेन स्वयंप्रयोजनतया यष्टव्यमिति मनस्समाधाय यो यज्ञ इज्यते, स सात्त्विकः ॥ ११ ॥

अभिसन्धाय तु फलं दम्भार्थमपि चैव यः ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२

ता॥इति।तत्राह—अयज्ञशिष्टमित्यर्थइति।एतेन सात्त्वतादिशास्त्रेषु 'नानिवेद्य हरेः किंचित्समश्नीयात्तु पावनम्' इत्यादिकमप्यत्रानुसंहितम् । आह्रियन्त इत्याहारास्तत्तद्द्रव्याणि प्रतीयन्ते, नच भोजनक्रियामात्रे यातयामत्वाद्युक्तिरन्वेति : नापि मुख्ये संभवति लक्षणा न्याय्या । अतः 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युडन्ततामाह—भुज्यतइति।पुनश्च तमसो वर्धनमिति-पूर्ववत्।आहारत्रैविध्योक्तेरभिप्रेतमाह—अतइति । पथ्यापथ्यविभागोक्तौ पथ्यग्रहणवदिति भावः। एवमेव यज्ञादित्रैविध्योक्तावप्यन्ततोऽभिप्रायो ग्राह्यः ॥ १० ॥

अफलस्य कस्यचिदाकाङ्क्षाप्रतीतिव्युदासायाह—फलाकाङ्क्षारहितैरिति । परमात्मप्रीत्यतिरिक्तनिरपेक्षैरित्यर्थः । 'विधिदृष्टः' इत्युक्ते प्रजापतिना दृष्टत्वं प्रतीयेत; स हि सर्वेषां यज्ञानां द्रष्टेत्यामनन्ति ; नचात्र प्रजापतिदृष्टत्वोक्त्यानुष्ठाने कश्चिदुपकारः; अतो विधायकशास्त्रमेवात्र विधिशब्देन विवक्षितमित्याह— शास्त्रदृष्टइति । शास्त्रैकप्रमाणतया प्रसिद्धे शास्त्रदृष्टत्वोक्तिरनपेक्षितेत्यत्र यथाशास्त्रकरणादवैकल्यं तद्विवक्षितमाह—मन्त्रेति । 'यज देवपूजायम्' इति धात्वर्थानुसारेणाह—भगवदाराधनत्वेनेति । अवधारणाभिप्रेतमाह—स्वयंप्रयोजनतयेति । अयमभिप्रायः — यद्यपि प्रयोजनमनुद्दिश्य न प्रवृत्तिः,तथापि प्रागुक्तसुहृत्समाराधनन्यायेन यज्ञादिप्रवृत्तेरेव प्रयोजनत्वाभिसन्धिस्संभवति --इति । मनस्समाधायेति—प्रकारान्तराद्विनिवार्य प्रस्तुतप्रक्रियायामेकाग्रं कृत्वेत्यर्थः । यज्ञ इज्यते—यज्ञः क्रियत इत्यर्थः ॥ ११ ॥

प्र-पा ॥ १ ॥
२. अष्टाध्याय्यां. ३-३-११३ ॥
३. धातुपाठे-भ्वादिषु ॥ तत्र ' यज-देवपूजासंगतिकरणदानेषु' इति पठ्यते ॥

शं॥पूति दुर्गन्धि पर्युषितं च पक्वं सत् रात्र्यन्तरितं च यत्, उच्छिष्टमपि भुक्तशिष्टम् उच्छिष्टम्, अमेध्यम् अयज्ञार्हं, भोजनम् ईदृशं तामसप्रियम् ॥ १० ॥

अथ इदानीं यज्ञः त्रिविधः उच्यते—अफलाकाङ्क्षिभिः अफलार्थिभिः यज्ञः विधिदृष्टः शास्त्रचोदनादृष्टो यः यज्ञः इज्यते निर्वर्त्यते यष्टव्यमेवेति यज्ञस्वरूपनिर्वर्तनमेव कार्यम् इति मनः समाधाय, 'न अनेन पुरुषार्थो मम कर्तव्यः' इत्येवं निश्चित्य, सः सात्त्विकः यज्ञः उच्यते ॥ ११ ॥

रा॥फलाभिसन्धियुक्तैर्दम्भगर्भो यशःफलश्च यो यज्ञ इज्यते, तं यज्ञं राजसं विद्धि॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३

विधिहीनं—*ब्राह्मणोक्तिहीनं सदाचारयुक्तैर्विद्वद्भिर्ब्राह्मणैर्यजस्वेत्युक्तिहीनमित्यर्थः, असृष्टान्नम्—अचोदितद्रव्यं मन्त्रहीनमदक्षिणं श्रद्धाविरहितं च यज्ञं तामसं परिचक्षते॥

अथ तपसो गुणतस्त्रैविध्यं वक्तुं तस्य शरीरवाङ्मनोनिष्पाद्यतया स्वरूपभेदं तावदाह—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४

ता॥दम्भहेतुकत्वमिह दम्भार्थशब्देन विवक्षितमित्याह—**दम्भगर्भ** इति । दाम्भिकत्वख्यापनाभिसन्धिरहित इत्यर्थः । केवलं दम्भगर्भस्तु तामसः । अत ऐहिकामुष्मिकफलसम्भेदमात्रमिह राजसत्वं विवक्षितत्वमित्यभिप्रायेणाह—**यशःफलश्चे**ति । दम्भानुसाराद्वा दृष्टैकफलत्वोक्तिः । 'भरतश्रेष्ठ' इति—त्वं तु सात्त्विकयज्ञाद्यधिकारीत्यभिप्रायः ॥ १२ ॥

असृष्टान्नत्वमन्त्रहीनत्वाद्युक्त्यैव चोदितप्रकारविहीनत्वसिद्धेरत्र 'विधिहीनम्' इत्ययथाशास्त्रत्वं न विवक्षितम् ; अन्यस्य चावश्यापेक्षितस्य हानिरिह सूचयितुमुचितेत्यभिप्रायेणाह—**ब्राह्मणोक्तिहीनमि**ति । शास्त्रोदित एवार्थस्सद्भिरनुशिष्टोऽनुष्ठेय इतीममर्थं विवृणोति—**सदाचारे**ति । लोभातिशयाद्दक्षिणाया अप्यभावे अन्नदानाभावस्य कैमुत्यसिद्धत्वात् 'अदक्षिणम्'इत्यनेनैवान्नादानादेरुपलक्षणादसृष्टशब्दस्वारस्याद्दोषातिशयख्यापनोपयोगाच्चासृष्टान्नशब्देन शूद्रप्रतिग्रहादिविवक्षामाह—**अचोदितद्रव्य**मिति । यज्ञार्थं सृष्टमिह सृष्टशब्देन विवक्षितम् । न्यायागतमित्यर्थः । तदन्यदसृष्टं, यथा 'न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत धर्मवित् । यजमानो हि भिक्षित्वा प्रेत्य चण्डालतां व्रजेत्' इति ॥ १३ ॥

आहारादीनां सात्त्विकत्वादित्रैविध्ये प्रक्रान्ते तपसः करणभेदेन त्रैविध्योक्तिः किमर्थेत्यत्राह—**अथे**ति । देवद्विजगुरुप्राज्ञानां सन्निधौ तत्तदुचितश्शास्त्रोदित आचार इह पूजनमित्युच्यते । यथा—'प्रशस्तमङ्गल्यदेवायतनचतुष्पथादिप्रदक्षिणमावर्तेत मनसा वा तत्समग्रम्' इत्यादि । तथा 'प्रदक्षिणं

| | |
|---|---|
| प्र-पा॥ * १, ब्राह्मणविधिहीनं. पा ॥ | ३ ॥ ४ ॥ |
| २. अदत्तान्नत्वा देः. पा ॥ | ५ ॥ |

शं॥अभिसन्धाय तु उद्दिश्य फलं दम्भार्थमपि चैव यत् इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥

विधिहीनम् यथाचोदितविपरीतम्, असृष्टान्नं ब्राह्मणेभ्यो न सृष्टं न दत्तम् अन्नं यस्मिन् यज्ञे सः असृष्टान्नः,तम् असृष्टान्नं,मन्त्रहीनं स्वरतो वर्णतो वा वियुक्तं मन्त्रहीनम्, अदक्षिणम् उक्तदक्षिणारहितं, श्रद्धाविरहितं यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति ॥ १३ ॥

अथ इदानीं तपः त्रिविधम् उच्यते—देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च देवद्विजगुरुप्राज्ञाः,तेषां पूजनं देवद्विजगुरुप्राज्ञपूजनं,शौचम्,आर्जवम् ऋजुत्वं,ब्रह्मचर्यम् अहिंसा च शरीरनिर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैरेव—कर्त्रादिभिः साध्यं शारीरं तपः

रा॥देवद्विजगुरुप्राज्ञानां पूजनं, शौचं —तीर्थस्नानादिकम्,आर्जवं—यथामनश्शारीर-वृत्तं, ब्रह्मचर्यं—योषित्सु भोग्यताबुद्धियुक्तेक्षणादिरहितत्वम्, अहिंसा—अप्राणिपीडा, एतच्छारीरं तप उच्यते ॥ १४ ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५

परेषामनुद्वेगकरं सत्यं प्रियहितं च यद्वाक्यं स्वाध्यायाभ्यसनं चेत्येतद्वाङ्मयं तप उच्यते ॥ १५ ॥

---

ता॥त्रजेद्विप्रान् गामश्वत्थं हुताशनम्'इति। 'आसनेभ्यस्समुत्तस्थुर्मानयन्तः पुरोहितम्'[2]'ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आगते।[3]अभ्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते' इत्यादि । तथा '[4]न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः। ऋषयश्चक्रिरे धर्मं योऽनूचानस्स नो महान्' इति । शुद्धिरूपस्य फलभूतस्य शौचस्य तपस्त्वेन विभजनायोगात्तद्धेतुमाह—**तीर्थस्नानादिकमिति** । आर्जवस्य शारीरतपस्त्वेन व्यपदेशार्थं वाङ्मनःकायानामैकरूप्यं शरीरप्रधानतया व्यपदिशति—**यथामनश्शारीरवृत्तमिति** । 'ब्रह्मचर्यं च योषित्सु भोग्यताबुद्धिवर्जनम्' इत्याद्यनुसारेणाह—**योषित्स्विति** । तादृशप्रेक्षणादिकमपि 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्' इत्यादिना मैथुनत्वेन विभज्य स्मरन्तीति प्रागेव दर्शितम् । अत्रापीक्षणादिरहितत्वग्रहणं ब्रह्मचर्यस्य शारीरतपस्त्वज्ञापनाय ॥ १४ ॥

**अनुद्वेगकरमित्यादि**—पुरुषमर्मोद्घट्टनापरिवादादिराहित्यादनुद्वेगकरत्वम् । भयादेरहेतुभूतमित्यर्थः । सत्यं यथादृष्टार्थविषयभूतहितवाक्यमिति प्रागेव दर्शितम् । प्रियत्वमत्र स्वागतधर्मानुमोदनादिरूपेण अप्राप्तविषयस्तुत्यादिरूपप्रियवचनस्य निषिद्धत्वात्तत्परिहाराय हितत्ववचनं पुरुषार्थपर्यवसायीत्यभिहितम् । 'स्वाध्यायाभ्यसनम्' इति जपयज्ञोक्तिः ॥ १५ ॥

---

**प्र-पा** ॥ १ ॥

२. मनुः. २-१२०. ऊर्ध्वमिति ।—यस्मात् यूनः-अल्पवयसो वयोविद्यादिना स्थविरे, आयति-आगच्छति सति प्राणा ऊर्ध्वमुत्क्रामन्ति-देहाद्बहिः निर्गन्तुमिच्छन्ति, तान् वृद्धस्य प्रत्युत्थानाभिवादभ्यां पुनः सुस्थान् करोति, तस्मात् वृद्धस्य प्रत्युत्थायाभिवादनं कुर्यात् इत्यर्थः ॥

३. प्रत्युत्थाना. पा ॥

४ ॥

५ ॥ ६ ॥

---

शं॥उच्यते—'पञ्चैते तस्य हेतवः' इति हि वक्ष्यति ॥ १४ ॥

अनुद्वेगकरं प्राणिनाम् अदुःखकरं वाक्यं सत्यं प्रियहितं च यत् — प्रियहिते दृष्टादृष्टार्थे । अनुद्वेगकरत्वादिभिः धर्मैः वाक्यं विशिष्यते । अविशेषेण धर्मसमुच्चयार्थः चशब्दः। परप्रत्ययार्थं प्रयुक्तस्य वाक्यस्य अनुद्वेगकरस्य सत्यप्रियहितानाम् अन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनस्य न वाङ्मयतपस्त्वम्।तथा सत्यवाक्यस्य इतरेषाम् अन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनतायां न वाङ्मयतपस्त्वम्। तथा प्रियवाक्यस्यापि इतरेषाम् अन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनस्य न वाङ्मयतपस्त्वम् । तथा हितवाक्यस्यापि इतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनस्य न वाङ्मयतपस्त्वम् । किं पुनः तत् ? तपः—सत्यं वाक्यम् अनुद्वेगकरं प्रियं हितं च तत् तपः वाङ्मयं, यथा 'शान्तो भव वत्स, स्वाध्यायं योगं वा अनुतिष्ठ, तथा ते श्रेयो भविष्यति' इति । स्वाध्यायाभ्यसनं चैव यथाविधि वाङ्मयं तपः उच्यते ॥ १५ ॥

**मनःप्रसादस्सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥** १६

रा॥ **मनःप्रसादः**—**मनसः** क्रोधादिरहितत्वं. **सौम्यत्वं**—**मनसः** परेषामभ्युदयप्रावण्यं. **मौनं**—**मनसा वाक्प्रवृत्तिनियमनम्**, **आत्मविनिग्रहः**—**मनोवृत्तेर्ध्येयविषये अवस्थापनं**. **भावसंशुद्धिः**-**आत्मव्यतिरिक्तविषयचिन्तारहितत्वम्** , एतन्मानसं तपः ॥ १६ ॥

ता॥मनःप्रसादसौम्यत्वशब्दाभ्यां परेष्वहिताभिप्रायरूपकालुष्यनिवृत्तिः,हिताभिप्राययोगश्च विवक्षित इत्याह—**मनसः क्रोधादिरहितत्व**मित्यादिना । 'वसति हृदि सनातने च तस्मिन् भवति पुमाञ्जगतोऽस्य सौम्यरूपः' इत्यादिनोक्तमाकारसौम्यत्वमपि मनस्सौम्यत्वफलमेव । अत एव हि तेन मनस्सौम्यत्वमुन्नीयते । इह च मानसतपोविभजनान्मनस इति बुद्ध्या निष्कृष्यानुषञ्जितम् । मौनस्यापि मानसतपस्त्वाय मनोव्यापारप्राधान्यमाह—**मनसा वाक्प्रवृत्तिनियमन**मिति । 'आत्मविनिग्रहः' इति अप्राप्तविषयविनिवारणं हि प्राप्तविषयैकाग्र्यार्थमित्यभिप्रायेणाह—**ध्येयविषयेऽवस्थापन**मिति । 'भावसंशुद्धिः' इत्यस्य मनःप्रसादादिभिः पुनरुक्तिपरिहारायाह—**आत्मव्यतिरिक्तचिन्तारहितत्व**मिति । भावशब्दोऽत्राभिप्रायार्थः । तस्य संशुद्धिस्समस्तेतरवर्जनम् । एतेन परदारादिषु मनसो रहस्यपि प्रवृत्तिर्दूरतो निरस्ता । अत्र तपसश्शारीरत्वादिविभागः तत्र शरीरादिप्राधान्यात्; अन्यथा 'पञ्चैते तस्य हेतवः' इत्यनेन विरोधात् ॥ १६ ॥

**प्र-पा॥** १. वि-पु. ३-७ २४. क्षितिरसमतिरम्यमात्मनोऽन्त कथयति चारुतयैव सालपोतः' इत्युत्तरार्द्धम्॥

शं ॥ **मनःप्रसादः मनसः प्रशान्तिः,स्वच्छतापादनं प्रसादः । सौम्यत्वं—यत् सौमनस्यम् आहुः—मुखादिप्रसादादिकार्योन्नेया अन्तःकरणस्य वृत्तिः।मौनं—वाङ्नियमोऽपि मनस्संयमपूर्वको भवति इति कार्येण कारणम् उच्यते मनस्संयमो मौनमिति।आत्मविनिग्रहः—मनोनिरोधः सर्वतः सामान्यरूपः आत्मविनिग्रहः, वाग्विषयस्यैव मनसः संयमः मौनम्, इति विशेषः। भावसंशुद्धिः—परैः व्यवहारकाले अमायावित्वं भावसंशुद्धिः । इत्येतत् तपः मानसम् उच्यते ॥ १६ ॥**

आ॥**सौम्यत्वमक्रौर्यम् , 'अक्रूरः सौम्य उच्यते' इत्यभिधानम् । मौनं मननशीलत्वम्। 'बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः' इति हि श्रुतिः । 'एतेन हीदं सर्वं मतं यदनेन हीदं सर्वं मतं तस्मान्मुनिस्तस्मान्मुनिरित्याचक्षते' इति भाल्लवेयश्रुतिः। कथं चान्यथा मानसं तपः स्यात् ॥ १६ ॥ २२ ॥**

ज॥नन्वङ्गसौष्ठवं सौम्यत्वम्, तत्कथं मानसं तप उच्यत इत्यत आह—**सौम्यत्व**मिति। मौनं वाङ्नियमनमित्यन्यथाप्रतीतिनिरासार्थमाह—**मौन**मिति । कुत एतदित्यत आह—**बाल्य**मिति । युक्तिबलोपेतत्वं बाल्यम् । आगमज्ञत्वं पाण्डित्यम् । अथ मुनिर्मननशीलो भवतीत्यर्थः । एतेन हीदमित्युक्तमर्थं यदनेनेति हेतुत्वेनोपादत्ते । यस्मादेवं मुनिस्तस्मात्तं मुनिरित्याचक्षते । 'मन ज्ञाने' इत्यत इकारप्रत्ययः । उपधाया उकारश्च । मुनेर्भावश्च मौनम् । तच्च मननशीलत्वाख्यमागमार्थस्य युक्तिभिरनुसंधानम् । उक्तार्थानङ्गीकारे बाधकमाह—**कथ**मिति । मौनमिति शेषः । वाङ्नियम एव न मौनं, किंत्वत्र तत्कारणमनोनियमो लक्ष्यत इति कश्चित्; तदसत्, आत्मविनिग्रह इति पुनरुक्तिदोषात्; कथंचित् तत्परिहारेऽपि मुख्यार्थसंभवे लक्षणाश्रयणस्यैव दोषत्वात् ॥ १६ ॥२२॥

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैस्सात्त्विकं परिचक्षते ॥ १७

रा ॥ अफलाकाङ्क्षिभिः—फलाकाङ्क्षारहितैः युक्तैः—परमपुरुषाराधनरूपमिदमिति चिन्तायुक्तैः नरैः परया श्रद्धया यत् त्रिविधं तपः कायवाङ्मनोभिस्तप्तं, तत्सात्त्विकं परिचक्षते ॥ १७ ॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८

मनसा आदरः—सत्कारः,वाचा प्रशंसा—मानः, शारीरो नमस्कारादिः—पूजा, फलाभिसन्धिपूर्वकं सत्काराद्यर्थं च दम्भेन हेतुना यत्तपः क्रियते, तदिह राजसं प्रोक्तं, स्वर्गादिफलसाधनत्वेनास्थिरत्वात् चलम् अध्रुवं,चलत्वं- पातभयेन चलनहेतुत्वम्, अध्रुवत्वं - क्षयिष्णुत्वम् ॥ १८ ॥

---

ता॥एवं शारीरवाचिकमानसरूपेण त्रिविधस्यापि तपसः सत्त्वादिगुणभेदेन त्रैविध्यमुच्यते 'श्रद्धया' इत्यादिना । फलाकाङ्क्षानिषेधेन सह पठितो युक्तशब्दस्तदुपयुक्तभगवत्प्रीतिविलक्षणफलान्तरध्यानपर इत्यभिप्रायेणाह—**परमपुरुषाराधनेति** । पुनरुक्तिशङ्कापरिहाराय सत्कारमानपूजाशब्दानां क्रमान्मनोवाक्कायनिष्पाद्यसम्भावनापरत्वोक्तिः ॥ १७ ॥

'अफलाकाङ्क्षिभिः' इति सात्त्विकस्य तपसो विशेषणादिह फलाकाङ्क्षा अर्थसिद्धेत्यभिप्रायेणाह—**फलाभिसंधिपूर्वकमिति।स्वर्गादिफलसाधनत्वेनास्थिरत्वादिति**—अस्थिरस्वर्गादिफलसाधनत्वादित्यर्थः । स्वरूपतः कादाचित्कोक्तेरनुपयोगात्फलद्वारात्र चलत्वमध्रुवत्वंच । तत्राध्रुवशब्देन फलानित्यत्वोक्तेश्चलशब्दः फलस्य विद्यमानदशाभाविदोषपरः । विद्यतेच तल चलयतीति व्युत्पत्त्या चलशब्दशक्तिरित्यभिप्रायेणाह—**पातभयेन चलनहेतुत्वमिति** । अत्र चलशब्देन अनित्यफलत्वम्, अध्रुवशब्देन प्रतिबन्धसंभवादनैकान्तिकफलत्वं चोच्यत इत्ययुक्तम् , अन्यत्रापि प्रतिबन्धसंभवस्याविशेषादिति भावः ॥ १८ ॥

---

शं॥यथोक्तं कायिकं वाचिकं मानसं च तपः तप्तं नरैः सत्त्वादिगुणभेदेन कथं त्रिविधं भवतीति? उच्यते—श्रद्धया आस्तिक्यबुद्ध्या परया प्रकृष्टया तप्तम् अनुष्ठितं तपः तत् प्रकृतं त्रिविधं त्रिप्रकारं त्र्यधिष्ठानं नरैः अनुष्ठातृभिः अफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैः युक्तैः समाहितैः—यत् ईदृशं तपः तत् सात्त्विकं सत्त्वनिर्वृत्तं परिचक्षते कथयन्ति शिष्टाः ॥ १७ ॥

सत्कारः साधुकारः 'साधुः अयं तपस्वी ब्राह्मणः' इत्येवमर्थं, मानो माननं प्रत्युत्थानाभिवादनादि तदर्थं, पूजा पादप्रक्षालनार्चनाशयितृत्वादि तदर्थं च तपः सत्कारमानपूजार्थं, दम्भेन चैव यत् क्रियते तपः तत् इह प्रोक्तं कथितं राजसं चलं कादाचित्कफलत्वेन अध्रुवम् ॥ १८ ॥

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९

रा॥मूढाः—अविवेकिनः, मूढग्राहेण—मूढैः कृतेनाभिनिवेशेन आत्मनश्शक्त्यादिकमपरीक्ष्य आत्मपीडया यत्तपः क्रियते, परस्योत्सादनार्थं च*यत्क्रियते, तत् तामसमुदाहृतम्॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २०

फलाभिसन्धिरहितं दातव्यमिति देशे काले पात्रे चानुपकारिणे यद्दानं दीयते, तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥ २१

ता॥अहितप्रवृत्तिहेतुभूतमूढत्वमहितेष्वेव हितत्वभ्रम इत्यभिप्रायेणाह—अविवेकिनइति । मूढानामभिनिवेशेनेति समासार्थः; तत्र कर्तरि षष्ठीति सुव्यक्त्यर्थमाह—मूढैः कृतेनाभिनिवेशनेति । सामान्येनोक्तमनुष्ठातरि विशिष्याह—आत्मनश्शक्त्यादिकमपरीक्ष्येति । आदिशब्देन शास्त्रपर्युदस्तत्वम्, 'अशक्यानि दुरन्तानि समव्ययफलानि च । असाध्यानि च वस्तूनि नारभेत विचक्षणः' इत्याद्युक्तविषयदोषाश्च संगृहीताः। अयथाबलारम्भादिरिहात्मपीडा, तेनाल्पपीडाकरयथाबलव्रतादिव्यवच्छेदः । यथोक्तं 'सन्निरीक्ष्य बलाबलम्' इति । स्मरन्तिच "देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च ज्ञात्वा शौचं समाचरेत्' इत्यादि ॥ १९ ॥

राजसे दाने 'फलमुद्दिश्य' इति विशेषणादत्र स्वर्गादिफलसङ्गनिवृत्तिरुक्ता। 'अनुपकारिणे'इत्येतत् दृष्टफलाभिसंधिरहिताभिप्रायम् । 'दातव्यम्' इत्येतत्सात्त्विकतपःप्रभृतिष्विवाभिसंध्यन्तरव्युदासार्थमित्याह—फलाभिसन्धिरहितमिति । यद्यप्यत्र पात्रमेवार्थतोऽनुपकारित्वेन विशेष्यते, तथापि संप्रदानत्वद्रव्यप्रतिष्ठाधिकरणत्वयोर्विवक्षया चतुर्थीसप्तम्योस्सह प्रयोगः । पात्रे सिद्धेऽनुपकारिणे तस्मा इति वान्वयः । पात्रे दीयते, तच्चानुपकारिणे दीयत इति वा वाक्यभेदो ग्राह्यः । देशकालशब्दावत्र दानार्हतया चोदितपुण्यदेशकालविषयौ । पात्रं तु 'न विद्यया केवलया जन्मना वापि पात्रता । यस्य वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते' इत्यादिभिर्विवक्षितम् ॥ २० ॥

प्र-पा॥*यत्तपः क्रियते. पा॥ १ ॥ ४. द्रव्यं द्रव्यप्र. पा॥ ५. गी. १७-२१ ॥
२ ॥ ३ ॥ ६. तपसा. चापि. पा ॥

शं॥मूढग्राहेण अविवेकनिश्चयेन आत्मनः पीडया यत् क्रियते तपः परस्य उत्सादनार्थं विनाशार्थं वा तत् तामसं तपः उदाहृतम् ॥ १९ ॥

इदानीं दानत्रैविध्यम् उच्यते—दातव्यमिति एवं मनः कृत्वा यत् दानं दीयते अनुपकारिणे प्रत्युपकारासमर्थाय, समर्थायापि निरपेक्षं दीयते, देशे पुण्ये कुरुक्षेत्रादौ काले संक्रान्त्यादौ पात्रे च षडङ्गविद्वेदपारग इत्यादौ, तत् दानं सात्त्विकं स्मृतम् ॥

रा॥प्रत्युपकारकटाक्षगर्भं फलमुद्दिश्य च परिक्लिष्टम्—अकल्याणद्रव्यकं यद्दानं दीयते, तद्राजसमुदाहृतम् ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२

अदेशकाले अपात्रेभ्यश्च यद्दानं दीयते, असत्कृतं—पादप्रक्षालनादिगौरवरहितम् अवज्ञातं—सावज्ञम् अनुपचारयुक्तं यद्दीयते, तत्तामसमुदाहृतम् ॥ २२ ॥

एवं वैदिकानां यज्ञतपोदानानां सत्त्वादिगुणभेदेन भेद उक्तः, इदानीं तस्यैव वैदिकस्य यज्ञादेः प्रणवसंयोगेन तत्सच्छब्दव्यपदेश्यतया च लक्षणमुच्यते—

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३

ओं तत् सत् इति त्रिविधोऽयं निर्देशः—शब्दो ब्रह्मणः स्मृतः-ब्रह्मणोऽन्वयी भवति;

ता॥प्रत्युपकारकटाक्षगर्भमिति—प्रत्युपकाराभिप्रायपूर्वकमित्यर्थः । एतेन पूर्वकृतप्रत्युपकाररूपता, भाविप्रत्युपकारप्रयोजकता च संगृहीता । द्रव्यरागात्परिक्लेशेन त्यजन् हि पुरुषः कल्याणमंशं स्वस्मै स्थापयित्वा अन्यत्परस्मै समर्पयतीत्यभिप्रायेणाह—अकल्याणद्रव्यकमिति । अश्रद्धाहतत्वाद्वा द्रव्यस्याकल्याणत्वमिह परिक्लिष्टशब्दार्थ इति भावः ॥ २१ ॥

अदेशः कलिङ्गकीकटादिः । अकालो रात्र्यादिः । अपात्राणि पङ्क्तिदूषकमूर्खतस्करकितववन्दिवैतालिकादयः । सत्कृतं सत्करणं, तद्रहितमसत्कृतम्; तदाह—पादप्रक्षालनेति । प्रतिग्रहीतृपुरुषावज्ञैव क्रियापर्यन्तप्रसारात्तद्विशेषणतया व्यपदिश्यत इत्यभिप्रायेणाह—सावज्ञमिति । अवज्ञाया वाचिकादिविषयत्वमाह—अनुपचारयुक्तमिति । शास्त्रप्रामाण्यानिश्चयेन संदिग्धपरलोकत्वात्पात्रेभ्यस्स्वस्वोत्कर्षाभिमानाच्चासत्कारावज्ञे । देशादिसंपत्तावप्यसत्कृतत्वादि परिहर्तव्यम् ॥ २२ ॥

उक्तत्रैविध्यवदुपर्यपि त्रैविध्यान्तरोक्तिरिति शङ्काव्युदासाय उक्तसमस्तलक्षणपरतयोत्तरमवतारयति—एवमित्यादिना। त्रैविध्यविधिरनपेक्षितः,लक्ष्येषूद्दिष्टेषु लक्षणविधिस्त्वपेक्षित इत्यभिप्रायेण'ब्रह्मणः स्मृतः' इत्यन्वयो दर्शितः।वक्ष्यमाणप्रकारेण त्रिष्वपि निर्देशेषु कर्मत्वेनान्वयायोगात्—ब्रह्मणोऽन्वयी भवतीति संबन्धसामान्यार्थतोक्तिः। ननु'ओं तत्सत्' इति वैदिकस्य यज्ञादेर्लक्षणमुच्यत इत्युक्तमयुक्तं, ब्रह्मशब्दस्य तद्वाचकत्वाभावान्मुख्यार्थबाधाभावाच्च । त्रयाणां च साक्षात्परब्रह्मनामत्वं श्रुतिसिद्धं, 'तत्ते पदं संग्रहेण ब्रवीमि ओमित्येतत्'इति वा? एतस्य महतो भूतस्य नाम भवति योऽस्यैतदेव नाम वेद ब्रह्म भवतीति' 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः' इत्यादिषु। अतः प्र-पा ॥ १. त्रयाणामपि. पा ॥ २. कठ. २-१५ ॥ ३ ॥ ४. छा. ६-८-६ ॥

शं॥यत्तु दानं प्रत्युपकारार्थं—काले तु अयं मां प्रत्युपकरिष्यतीत्येवमर्थं, फलं वा, अस्य दानस्य मे भविष्यति अदृष्टम् इति,तत् उद्दिश्य पुनः दीयते च परिक्लिष्टं खेदसंयुक्तं तत् दानं राजसं स्मृतम् ॥ २१ ॥

अदेशकाले अदेशे अपुण्यदेशे म्लेच्छाशुच्यादिसंकीर्णे अकाले पुण्यहेतुत्वेन अप्रख्याते संक्रान्त्यादिविशेषरहिते अपात्रेभ्यश्च मूर्खतस्करादिभ्यः, देशादिसंपत्तौ वा असत्कृतं प्रियवचनपादप्रक्षालनपूजादिरहितम् अवज्ञातं पात्रपरिभवयुक्तं च यत्, तत् दानं तामसम् उदाहृतम् ॥ २२ ॥

रा॥ब्रह्म च वेदः;*वेदशब्देन वैदिकं कर्मोच्यते ; वैदिकं-यज्ञादिकम् ; यज्ञादिकं कर्म ओं तत्सदिति शब्दान्वितं भवति ; ओमितिशब्दस्यान्वयो वैदिककर्माङ्गत्वेन प्रयोगादौ प्रयुज्यमानतया ; तत्सदितिशब्दयोरन्वयः पूज्यत्वाय वाचकतया ; तेन त्रिविधेन शब्दे.

ता॥ शास्त्रप्रधानप्रतिपाद्यपरब्रह्मनिर्देशप्रकारोऽयमुपासकसंव्यवहारार्थमुपदिश्यत इति युक्तम् । विगुणमपि हि कर्म ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं संपादितं भवति । कर्मणि कर्मान्तरेण लौकिकवाचा निद्राप्रमादादिभिश्च व्यवाये सन्तस्सर्वत्र 'ओंतत्सत्' इत्युदाहरेयुः ; अतएवचाध्यायाद्यन्तेषु सर्वेष्वयमेव त्रिविधो निर्देशः पठ्यत इति शङ्कायां—कर्मणि ब्रह्मशब्दमवतारयितुं तत्प्रतिपादके प्रयोगस्तावत्सिद्ध इत्यभिप्रायेणाह—ब्रह्म च वेदइति । वेदाभिधानस्य पूर्वापरवशात्तदर्थपरतामभिप्रेत्याह—वेदशब्देनेति । वेदनिरूढप्रयोगेण शब्देनेत्यर्थः। 'ब्रह्मशब्देन'इति केषाचित्पाठः। अयमभिप्रायः—यद्यपि 'ओंतत्सत्' इति शब्दानां साक्षात्परब्रह्मनामत्वं प्रसिद्धं, तथाप्यत्र तद्विवक्षा न युक्ता; अध्याये तत्प्रश्नाद्यभावात्,अनन्तरं च 'ब्राह्मणास्तेन' इत्यादिनानन्वयप्रसङ्गाच्च । अतो वेदेनोपलक्षणेन वैदिकस्यैवायं त्रिधा निर्देशः—इति । एतदेव विवृणोति—वैदिकमिति । त्रयाणामन्वयप्रकारेऽवान्तरभेदं वक्ष्यमाणमुपक्षिपति —ओमिति । करणाद्यर्थासंभवादुपलक्षणतृतीयार्थमाह—तेन त्रिविधेन शब्दे-

प्र-पा ॥ * ब्रह्मशब्देन. पा ॥

शं॥यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणाय अयम् उपदेशः उच्यते—ओं तत् सत् इति

आ॥पुनश्च कर्मादौतिकर्तव्यताविधानार्थमर्थवादमाह—ओं तत्सदित्यादिना । परस्य ब्रह्मणो ह्येतानि नामानि । 'ओतं जगद्यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च । सर्वैश्शुभैश्चाभियुतो न चान्यैः ओं तत्सदित्येतमतो वदन्ति' इति हि ऋग्वेदखिलेषु । द्वितीयपादस्तच्छब्दार्थः। 'सदेव सोम्येदमग्र आसीत्' इति च। 'ओमिति ब्रह्म' इति च । तेन

ज॥ओमित्यादिकं तु प्रकृतासङ्गतं कथमुच्यत इत्यत आह—पुनश्चेति । कर्मेति यज्ञ उच्यते । आदिपदेन तपोदाने।इति कर्तव्यता-इत्थं भावः।विधानार्थं-प्रतिपादनार्थम्।'अफलाकाङ्क्षिभिः'इत्यादिनोक्तत्वात्—पुनश्चेत्युक्तम्।यज्ञतपोदानानां सात्त्विकत्वादिहेतवोऽसाधारणा धर्माः प्रागुक्ताः।साधारणांस्तु वक्तुं पुराकल्पादिरूपमर्थवादमाहेत्यर्थः । ब्रह्मशब्दस्य हिरण्यगर्भाद्यर्थतां निर्देशशब्दस्य च भावार्थतां वारयितुं व्याख्याति—परस्येति । निर्दिश्यतेऽनेनेति निर्देशो नाम; कुत एतदित्यतो हीत्युक्तम् । भावार्थत्वे 'ओम् तत्सत्' इत्येतैः सामानाधिकरण्यानुपपत्तेर्नामार्थत्वमेवाङ्गीकार्यम् । ओमादिकं च परब्रह्मनामत्वेन प्रसिद्धमित्यर्थः । तामेव प्रसिद्धिं दर्शयति—ओतमिति । ओतं प्रविष्टम् आश्रितं यत्र परमेश्वरे यः स्वयं च जगत्योतः प्रविष्टः पूर्णः।अनुपचारतः-मुख्यया वृत्त्या । अत्र 'ओतं जगद्यत्र' इत्यादिना ओंशब्दस्य निमित्तद्वयेन भगवति वृत्तिर्दर्शिता, 'अवतेष्टिलोपश्च'इति वचनात् । सर्वैरित्यनेन सच्छब्दस्य,'साधुभावे च'इति वक्ष्यमाणत्वात्,तच्छब्दस्य तु न केनापि । अत ओं तत्सदित्येतमित्ययुक्तमित्यत आह—द्वितीयेति । वेदोक्तेति द्वितीयपादस्तच्छब्दार्थव्याख्यानपरः । तदिति हि नित्यपरोक्षत्वमुच्यते । नचेश्वरस्वरूपमनुमातुं शक्यम् । अतो वेदैकवेद्यत्वात्तदित्युच्यत इति भावः। सदोंशब्दयोः परब्रह्मनामत्वे श्रुत्यन्तरं चाह—सदेवेति । तेनेति निर्देशपरामर्श इति कश्चित्; तदसदिति भावेनाह—तेनेति । कुतः? एतन्निर्देशस्य ब्राह्मणादिविधानायोगात् । निर्देशस्तुत्यर्थमिदमुच्यत इति चेत्—न, भूतोक्तिसम्भवेन तदयोगात् । ब्रह्मणोऽपि ब्राह्मणादिविधानानुपपत्तिः, प्रयोज-

रा॥नान्विता ब्राह्मणा वेदान्वयिनस्त्रैवर्णिकाः वेदाश्च यज्ञाश्च पुरा विहिताः—पुरा मयैव निर्मिता इत्यर्थः ॥ २३ ॥

त्रयाणाम् 'ओं तत्सत्' इतिशब्दानामन्वयप्रकारो वर्ण्यते; प्रथममोमितिशब्दस्यान्वयप्रकारमाह—

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्तास्सततं ब्रह्मवादिनाम् ॥ २४

तस्मात्ब्रह्मवादिनां—वेदवादिनां त्रैवर्णिकानां यज्ञदानतपःक्रियाः विधानोक्ताः—

ता॥नान्विता इति।ब्राह्मणशब्दोऽत्र ब्रह्मशब्दविवक्षितवेदान्वयात् त्रैवर्णिकविषयः।'ब्रह्मवादिनाम्'इति ह्यनन्तरमुच्यते। तेनैव प्रणवान्वयप्रकारोऽपि सूचित इत्यभिप्रायेणाह-वेदान्वयिनस्त्रैवर्णिका इति। 'विहिताः' इत्यस्य कर्त्रपेक्षायां 'चातुर्वर्ण्यं मया सृष्टम्' इत्यादिपरामर्शेनाह—पुरा मयैव निर्मिता इति । वेदानां विहितत्वं यथापूर्वं प्रवर्तितत्वं, 'यो वै वेदाश्च प्रहिणोति तस्मै' 'अनादिनिधना ह्येषा वागुत्सृष्टा' इत्यादिश्रुतिस्मृतिभिस्तन्नित्यत्वसिद्धेः ॥ २३ ॥

'तस्मात्' इत्यादीनां चतुर्णां श्लोकानां प्रकृतप्रपञ्चनरूपतामाह—त्रयाणामिति । ब्राह्मणवेदयज्ञानामित्यर्थः । यज्ञशब्दोऽत्र तपोदानादीनामुपलक्षकः, यज्ञतपःक्रिया इत्यादि ह्यनन्तरमुच्यते। अनुष्ठानस्वरूपानुप्रवेशात्तत्रापि प्राथम्याच्चात्रापि प्रथममोङ्कारस्योक्तिरित्यभिप्रायेणाह—प्रथममिति।तस्मादिति—सर्वस्रष्ट्रा मया तदैव तदन्वितत्वेन विहितत्वादित्यर्थः । करणव्युत्पत्त्या विधानमिह वैदिकं

प्र-पा॥ १. गी. १७-२४ ॥ २. गी. ४-१३ ॥ ३. श्वे ६-१७ ॥ ४. भारते-शा-मो. २३४. अ. ९३. श्लो. कौर्मेच-पूर्वे. २. अ. ३० ॥ 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतस्सर्वाः प्रसूतयः ॥

शं॥एवं निर्देशः निर्दिश्यते अनेनेति निर्देशः त्रिविधो नामनिर्देशो ब्रह्मणः स्मृतः चिन्तितः वेदान्तेषु ब्रह्मविद्भिः । ब्राह्मणाः तेन निर्देशेन त्रिविधेन वेदाश्च यज्ञाश्च विहिताः निर्मिताः पुरा पूर्वम्—इति निर्देशस्तुत्यर्थम् उच्यते ॥ २३ ॥

तस्मात् 'ओम्' इति उदाहृत्य उच्चार्य यज्ञदानतपःक्रियाः यज्ञादिस्वरूपाः क्रियाः

आ॥ब्रह्मणा । आत्मपूजार्थं वेदविधिर्व्यञ्जनम् । मा तूक्ता पुरस्तात् ॥ २३ ॥

ज॥नाभावादित्यत आह—आत्मेति।आत्मपूजया प्राणिना सुखार्थं ब्राह्मणादयो विहिता इति सम्बन्धः। ब्राह्मणादिवद्वेदानामपि विधानं निर्माणमेवेति प्रतीतिनिरासार्थमाह—वेदेति । व्यञ्जनमेव विधानं, न निर्माणमित्यर्थः । सत्कृच्छ्रुतस्य विहितशब्दस्य द्विधाऽर्थकल्पनं कुत इति चेत्—वेदापौरुषेयत्वस्य प्रमितत्वात् । किं तत्प्रमाणमित्यत आह—मा त्विति । परमेश्वरस्य वेदव्यञ्जनं नाध्यापकवत् । किं तु स्वातन्त्र्यमप्यस्तीति ज्ञापयितुं विधिग्रहणं कृतम् । वेदो हि विध्यात्माऽस्ति। विधिः प्रेरणं नियोग इति चानर्थान्तरम् । न च नियोक्तारमन्तरेण नियोगः सम्भवति । न च शब्दादीनां नियोक्तृत्वं सम्भवति' लोकविरोधात्। नचोच्चारक एव नियोक्ता, 'मामुपासीत 'इत्यादावव्यवस्थापातात् । तस्मात्स्वतन्त्रेण वक्त्रा भाव्यम् । नचैवं पौरुषेयत्वापत्तिः, अनादिसिद्धेनैव शब्दार्थसम्बन्धेन तस्य नियोक्तृत्वाभ्युपगमादिति ॥ २३ ॥

रा॥वेदविधानोक्ताः आदावोमित्युदाहृत्य सततं-सर्वदा प्रवर्वन्ते; वेदाश्चोमित्युदाहृत्यार-

ता॥विधायकवाक्यमित्याह-वेदविधानोक्ताइति। यज्ञदानादीनामोङ्कारपूर्वकत्वं तत्तद्विधायकैस्सिद्धमित्यभिप्रायेणाह—आदाविति । ओमित्युदाहरणं चात्र श्रुतवेदान्तानां सर्वान्तरपरब्रह्मानुसंधानेन तत्समाराधनबुद्ध्याऽनुसंधाय । स्मरति च भगवान् शौनकः 'हरिमेव स्मरेन्नित्यं कर्मपूर्वापरेषु च' इति । अश्रुतवेदान्तानामपि तद्वाचकशब्दाभिधानान्मङ्गलादिलाभोऽर्थसिद्धः । एवंच प्रणवस्य वैदिकसमस्तान्वयसिद्धिः । यद्यपि 'वसन्तेवसन्ते ज्योतिषा यजेत' 'शरदि वाजपेयेन यजेत' इत्यादिभिः कालविशेषनियताः क्रिया विधीयन्ते; तथापि सर्वासां क्रियाणां प्रणवपूर्वकत्वे तु न कालविशेषनियम इति सततशब्दतात्पर्यमित्यभिप्रायेणाह — सर्वदेति । स्वर्गसाधनत्वेनानुष्ठाने अपवर्गसाधनत्वेनानुष्ठाने च प्रणवान्वयस्साधारण इति भावः । अत्र श्लोके वेदानामनुपादानेऽपि पूर्वश्लोके 'ब्राह्मणास्तेन वेदाश्च' इत्युक्तत्वात् 'यद्वेदादौ स्वरः प्रोक्तः' 'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा । स्रवत्यनोंकृतं पूर्वम्' इत्याद्यनुसारेणाह—वेदाश्चेति । 'विधानोक्ताः' इत्यनेन ब्रह्मवाचिशब्देनच वेदानाम-

प्र-पा ॥ १. विष्णुधर्मे ॥

२ ॥

३ ॥

४. तै-ना. ६-१०-२४॥ 'यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः' ॥—व्याख्यातेयं श्रुतिर्भगवता भाष्यकारेण वेदार्थसङ्ग्रहे-'सर्वस्य वेदजातस्य प्रकृतिः प्रणवः, प्रणवस्य च प्रकृतिः अकारः,प्रणवविकारो वेदः स्वप्रकृतिभूतप्रणवे लीनः, प्रणवोऽपि अकारविकारभूतः स्वप्रकृतावकारे लीनः, तस्य प्रणवप्रकृतिभूतस्याकारस्य यः-परः-वाच्यः, स महेश्वरः'—इति । यत्-यः, वेदाद्यन्तयोः प्रतिष्ठितः स्वरः ओंकारः, तस्य प्रकृतौ-स्वावयवे अकारे, लीनस्य-तदात्मतामप्राप्तस्येति यावत्, तस्य यः परः - 'अकारेणोच्यते विष्णुः सर्वलोकेश्वरो हरिः । उद्धृता विष्णुना लक्ष्मी रुकारेणोच्यते तथा । मकारस्तुतयोर्दासः एतत्प्रणवलक्षणम्' 'अकारार्थो हि विष्णुस्स्यात् अव्ययः पुरुषः प्रभुः । उकारार्थः श्रियैव स्यात् लोकमाता सदा रमा । जीव एव मकारार्थः पीताभास्या - त्वनूपमा' इत्यादिप्रणवविवरणरूपश्रुतिस्मृतिसिद्धो विष्णुः, स महेश्वरः-स एव सर्वेश्वर इति मन्त्रार्थो ग्राह्यः । शैवाः अस्य मन्त्रस्य रुद्रस्वरूपाधिक्यप्रतिपादकत्वमाहुः, ते पाद्मोत्तर (२२६-अ.) पुराणस्थरुद्रवाक्यैनैव निरस्ताः । तथा हि 'यो वेदादौ स्वरः प्रोक्तो ..स महेश्वरः॥ ७० ॥ योऽसावकारवाच्यो वै विष्णुर्नारायणो हरिः । स एव पुरुषो नित्यः परमात्मा महेश्वरः ॥ ७१ ॥ तस्याशभूतमैश्वर्यं यस्मिन् कस्मिन् हि वर्तते । तस्मिन्नीश्वरशब्दादिः प्रोच्यते मुनिभिस्तथा ॥ ७२ ॥ निरुपाधीश्वरत्वं तु वासुदेवे प्रतिष्ठितम् । आत्मेश्वर इति प्रोक्तो वेदवादैस्सनातनैः॥७३॥ तस्मान्महेश्वरत्वन्तु वासुदेवे प्रतिष्ठितम्। असौ त्रिपाद्विभूतेस्तु लीलाया अपिचेश्वरः ॥ ७४ ॥ विभूतिद्वयनैश्वर्यन्तस्यैव सकलात्मनः । श्रीभूनीलापतिर्योऽसौ ईश्वरस्समुदाहृतः॥ ७५ ॥ तस्मान्महेश्वरत्वन्तु वासुदेवे प्रतिष्ठितम्'—इति। विस्तरभीत्या नात्र विस्तृणीमहे । अथर्वशिखाविलासादिषु अस्मदाचार्यवर्यैर्विस्तरेण प्रपञ्चितस्तत्र द्रष्टव्य इति ॥

५. मनु. २-७४. अत्र 'ब्रह्मपदं-वेदपरम् । 'सर्वदा' इत्यनेन-'यदा यदा वेदस्यारम्भः समाप्तिश्च, तदातदा' इति विवक्षितम् । 'स्रवत्यनोङ्कृतम्पूर्वम्' इत्यस्य-'पूर्वमोङ्कारसाहित्येन अनुच्चारितो वेदः, विस्तृततया, सङ्ग्रहेण परमतात्पर्यविषयभूतप्रधानार्थबोधं नजनयति' इतिविवक्षितम् । 'परस्ताच्च विशीर्यते' इत्यनेन 'प्रणवसाहित्येन असमापितो वेदः प्रधानार्थबोधनं विनानन्तानुपयुक्तवाक्यार्थबोधको भवति' इति विवक्षितम् ॥

यं॥प्रवर्तन्ते विधानोक्ताः शास्त्रचोदिताः सततं सर्वदा ब्रह्मवादिनां ब्रह्मवदनशीलानाम्॥

राभ्यन्ते;एवं वेदानां वैदिकानां च यज्ञादीनां कर्मणामोमितिशब्दान्वयो वर्णितः;ओमितिशब्दान्वितवेदधारणात्तदन्वितयज्ञादिकर्मकरणाच्च ब्राह्मणशब्दनिर्दिष्टानां त्रैवर्णिकानामप्योमितिशब्दान्वयो वर्णितः ॥ २४ ॥

अथैतेषां तदितिशब्दान्वयप्रकारमाह—

**तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥** २५

फलमनभिसन्धाय वेदाध्ययनयज्ञतपोदानक्रियाः मोक्षकाङ्क्षिभिस्त्रैवर्णिकैर्याः क्रियन्ते, ताः ब्रह्मप्राप्त्युपायतया ब्रह्मवाचिना तदितिशब्देन निर्देश्याः,*'स वः कः किं य-

---

**ता॥**प्यत्र श्लोके प्रणवान्वयस्सूचित इत्यभिप्रायेणाह—**एवमिति**।ओमित्युदाहरणकर्तृत्वव्यपदेशेन तदन्वितब्रह्मवादित्वव्यपदेशेन च ब्राह्मणानामप्योमितिशब्देनान्वयः प्रदर्शित एवेत्याह—**ओमितिशब्दान्वितवेदधारणा**दिति ॥ २४ ॥

एवं स्वर्गापवर्गसाधनसमस्तवैदिकसाधारणं प्रणवान्वयरूपं लक्षणमुक्तम्; अथ तत्सच्छब्दौ मोक्षसाधनानां त्रिवर्गसाधनानां च विशेषलक्षणतयोच्येते । वक्ष्यति चैतदष्टादशारम्भे 'वैदिकस्य च कर्मणस्सामान्यलक्षणं प्रणवान्वयः; तत्र मोक्षाभ्युदयसाधनयोर्भेदः तत्सच्छब्दनिर्देश्यत्वेन' इति । **एतेषामि**ति त्रयाणां परामर्शः । उक्तानां यज्ञादीनामुपलक्षणतया वेदेष्वपि तच्छब्दप्रवृत्तिज्ञापनाय वेदाध्ययनोपादानम्। 'मोक्षकाङ्क्षिभिः' इत्यनेन सूचितमाह—**ब्रह्मप्राप्तिसाधनतये**ति।तदिति—फलमनभिसन्धायेत्यन्वयः । तच्छब्दाभिधेयब्रह्मप्राप्तिसाधनतया तच्छब्दोपचार्यतया बुद्ध्वा फलान्तरमनभिसन्धायेत्यर्थः; इतिकरणसामर्थ्यात् 'उदाहृत्य' इति पदं वा पूर्वश्लोकादनुषञ्जनीयमित्यभिप्रायेणाह—**तदितिशब्दनिर्देश्या** इति । तच्छब्दस्य ब्रह्मनामत्वे सिद्धे हि तेन तत्प्राप्तिसाधनतयेति लक्षणा, तदेव कुत इत्यत्र तदिति श्रुतेरुपबृंहणेन विशदीकृतत्वमभिप्रेत्याह—**सव** इति । भगवन्नामसहस्रे 'यानि नामानि गौणानि विख्यातानि महात्मनः' इति प्रक्रमात् 'नाम्नां सहस्रम्' इति निगमनाच्च यत्तदादिशब्दानां सर्वनामतया व्यापिनामपि विशेषतस्साक्षात्परब्रह्मनामत्वं सिद्धमिति भावः ।

---

**प्र-पा॥***भार.आनु.सहस्र.२५४-९३॥ १. शब्द. पा ॥ २. गी. १८. अ. १. श्लो. भाष्य. अव ॥

३. तच्छब्दोपचार्यमिति. पा ॥

४. भारते-आनुशा-२५४. अ.१३॥ 'यानि नामानि गौणानि विख्यातानि महात्मनः । ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये '॥ गौणानि—गुणेभ्यः कर्मभ्यश्च निमित्तभूतेभ्यः आगतानि यौगिकानीत्यर्थः । गुणशब्दः कर्मणोऽपि प्रदर्शकः । 'प्रवदन्नात्मनो नाम्नां निरुक्तं गुणकर्मणाम्' 'गौणानि मम नामानि कीर्तितानि च कानिचित्। निरुक्तङ्कर्मजा-नाञ्च श्रुणुष्व प्रयतोऽनघ' इत्यादिवचनात् । विख्यातानि-छन्दोभाषयोः प्रवृत्त्यादीनां प्रयोगभूयस्त्वात् तदसाधारण्येन प्रसिद्धानि रूढानीत्यर्थः। ऋषिभिः—अशेषवेदार्थदर्शिभिः सनकसनन्दनसनत्कुमारनारदप्रभृतिभिः, परिगीतानि-'एवं रूपाणि, एवंनिमित्तानि, एवं वाचकानि' इति परितः परितो दुग्धधेनुवत् अभिनिविशमानैः प्रीत्या प्रयुक्तानि यानि नामानि, तेभ्यः एकैकस्मादेकैकं मधुकरक्रमेण समाहृत्य भगवता व्यासेन स्तोत्ररूपेण कीर्तितानि सम्प्रदायपारम्पर्येणास्मत्पर्यन्तं सम्प्राप्तानि तुभ्यं वक्ष्यामि । किमर्थम्? भूतये-भूतिः-भवनं-सत्ता, अनादिसंसारदुष्टिविनष्टात्मनः पुनरुज्जीवनायेत्यर्थः । विस्तरेणास्यार्थः सहस्रनामभाष्ये द्रष्टव्यः॥

५. भार.आनु. २५४-१०८॥ 'इतीदं कीर्तनीयस्य केशवस्य महात्मनः । नाम्ना सहस्रं दिव्यानामशेषेण प्रकीर्तितम्' ॥

रा॥'तत्पदमनुत्तमम्'इति तच्छब्दो हि ब्रह्मवाची प्रसिद्धः;एवं वेदाध्ययनयज्ञादीनां मोक्षसाधनभूतानां तच्छब्दनिर्देश्यतया तदितिशब्दान्वय उक्तः; त्रैवर्णिकानामपि तथाविधवेदाध्ययनाद्यनुष्ठानादेव तच्छब्दान्वय उपपन्नः ॥ २५ ॥

अथैषां सच्छब्दान्वयप्रकारं वक्तुं लोके सच्छब्दस्य व्युत्पत्तिप्रकारमाह—

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६

सद्भावे—विद्यमानतायां साधुभावे—कल्याणभावेच सर्ववस्तुषु सदित्येतत्पदं प्रयु-

ता॥श्लोकेऽनुक्तस्यापि वेदाध्ययनस्य प्रयोजकेन संगृहीतत्वमाह—एवमिति । तथापि त्रयाणामन्वयो न सिध्यति, ब्राह्मणशब्दनिर्दिष्टानां त्रैवर्णिकानां मोक्षसाधनत्वनिबन्धनतच्छब्दनिर्देश्यत्वाभावादित्यत्राह—त्रैवर्णिकानामपीति । 'मोक्षकाङ्क्षिभिः क्रियन्ते' इत्यनेन परम्परया तदन्वयस्सूचित इति भावः ॥ २५ ॥

त्रयाणां त्रिभिरन्वये प्रतिपिपादयिषिते 'सद्भावे साधुभावे च' इत्यप्रस्तुतोपन्यासः किमर्थ इत्यत्राह—अथैषामिति । यथा प्रयोगबलाद्विद्यमानत्वादिषु सच्छब्दप्रवृत्तिरङ्गीक्रियते, एवं प्रस्तुतेऽपीत्यभिप्रायेणानेकार्थोदाहरणं—विद्यमानतायामिति—असद्विलक्षणत्वरूपसत्त्वविषयो वा,वर्तमानत्वविषयो वा सद्भावशब्द इति भावः । 'साधुकारी साधुर्भवति' इत्यादिष्विवात्रापि साधुशब्दः पुण्यादिरूपत्वपर इत्याह—कल्याणभाव इति। तच्छब्दान्वये'मोक्षकाङ्क्षिभिः'इति विशेषणात्, इह तु 'प्रशस्ते कर्मणि' इति प्रशस्ततामात्रनिमित्तवचनान्मोक्षेतरपुरुषार्थसाधनलक्षणतया सच्छब्दोऽत्र व्युत्पाद्यत इति भावः । अत्यन्तविजातीयेष्वप्युक्तोपाधिद्वययोगे सच्छब्दोऽनुवृत्त इत्यभिप्रायेणाह—सर्ववस्तु-

प्र-पा ॥ १. बृ. ६-४ ॥

---

शं॥'तत्' इति अनभिसन्धाय—'तत्' इति ब्रह्माभिधानम् उच्चार्य अनभिसन्धाय च यज्ञादिकर्मणः फलं यज्ञतपःक्रियाः यज्ञक्रियाः तपःक्रियाश्च यज्ञतपःक्रियाः दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्यन्ते मोक्षकाङ्क्षिभिः मोक्षार्थिभिः मुमुक्षुभिः ॥ २५ ॥

ओं तच्छब्दयोः विनियोगः उक्तः । अथ इदानीं सच्छब्दस्य विनियोगः कथ्यते—सद्भावे असतः सद्भावे, यथा अविद्यमानस्य पुत्रस्य जन्मनि, तथा साधुभावे च असद्वृ-

---

आ॥तत्फलं मे स्यादित्यनभिसन्धाय ॥ २५ ॥

सद्भावशब्देन प्रजननं सूचितम् । ओमित्युक्त्वा अनभिसन्धाय फलं यज्ञदानतप-

ज॥'तदित्यनभिसन्धाय'इति वाक्यं ब्रह्मणीव यज्ञादावपि तच्छब्दस्य प्रवृत्तिं प्रतिपादयतीति ज्ञापयितुं योजयति—तदिति । वेदोक्तं स्वर्गादिकम् ॥ २५ ॥

सद्भावे सत्तायामिति प्रतीतिनिरासार्थमाह—सद्भावेति । प्रजननं प्रागसतः सत्तापादनम् । यद्यपि सद्भावशब्दः सत्तामात्रवाची, तथाऽप्यत्र ब्रह्मणो जगज्जनकत्वस्य विवक्षितत्वात्सत्ताविशेषप्रजननपर इति ज्ञायत इति प्रतिपादयितुं सूचितमित्युक्तम् । नन्वनेन यज्ञादीना केतिकर्तव्यता प्रतिपादिता भवतेत्यत आह—ओमिति । उक्तोङ्कारार्थज्ञानपूर्वकम् अनभिसन्धाय फलं ब्रह्माभिसन्धाय

रा॥ज्यते लोकवेदयोः; तथा केनचित्पुरुषेणानुष्ठिते लौकिके प्रशस्ते—कल्याणे कर्मणि सत्कर्मेदमिति सच्छब्दो युज्यते—प्रयुज्यते इत्यर्थः ॥ २६ ॥

यज्ञे तपसि दाने च स्थितिस्सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७

अतो वैदिकानां त्रैवर्णिकानां यज्ञे तपसि दाने च स्थितिः कल्याणतया सदित्युच्यते; कर्म च तदर्थीयं—त्रैवर्णिकार्थीयं यज्ञदानादिकं सदित्येवाभिधीयते; तस्माद्वेदा

ता॥ष्विति।'प्रयुज्यते'इत्यविशेषनिर्देशात्प्रयोगस्य सार्वत्रिकत्वेन दार्ढ्यं सूच्यत इत्याह—**लोकवेदयो**रिति।'तथा'इति प्रस्तुतासन्ने लौकिकोदाहरणार्थम्,अन्यथा पुनरुक्तिप्रसङ्गादित्यभिप्रायेणाह—**लौकिक** इति । 'साधुभावे' इति निर्दिष्टमेव निमित्तं प्रकृतासन्नोदाहारणान्तरे प्रशस्तशब्देनावतार्यत इत्यभिप्रायेणाह—**कल्याण** इति । धातुलीनार्थव्यञ्जनमात्रमुपसर्गेण क्रियते। अतोऽत्र श्लोके 'युज्यते' 'प्रयुज्यते' इतिपदद्वयमेकार्थमित्याह—**प्रयुज्यत इत्यर्थ** इति ॥ २६ ॥

एवं सच्छब्दस्य व्युत्पत्तिप्रकारं प्रयोगं चोदाहृत्य तदुपजीवनेनानन्तरं लिलक्षयिषिते ब्राह्मणादित्रिके तत्प्रयोगोपपत्तिरुपसंह्रियत इत्यभिप्रायेणाह—**अत** इति । स्थितिमुखेन स्थातॄणां स्थापकानां च वेदानां सच्छब्दार्थान्वयोऽर्थादुच्यत इत्यभिप्रायेणाह—**वैदिकाना**मिति। अध्यायान्तेषु 'ओं तत्सत्' इति पाठः स्थितिशब्दोऽत्र अन्तपर इति व्याख्यान्तरं प्रकृतोपयुक्तप्रसिद्धतमार्थे सम्भवत्ययुक्तमिति भावः । स्थितिशब्देन बुद्धावुपस्थापिता स्थातारस्तच्छब्देन परामृश्यन्त इत्यभिप्रायेणाह—**त्रैवर्णिकार्थीय**मिति । त्रिविधनिर्देशविषयतया 'प्रकृतेश्वरार्थीयम्' इति व्याख्यान्तरमतिव्यवहितपरामर्शात्सर्वेषां यज्ञादीनामतदर्थीयत्वाच्च अयुक्तमिति भावः । यज्ञाद्यर्थीयसाधनसम्पादनरूपकर्मणि सच्छब्दनिर्देशवचनादपि प्रक्रान्ते यज्ञादावेव तदुक्तिरिहोपपन्नेत्यभिप्रायेणाह—**यज्ञदानादिक**मिति । 'तदर्थीयम्' इति

शं॥तस्य असाधोः सद्वृत्तता साधुभावः तस्मिन् साधुभावे च'सत्' इत्येतत् अभिधानं ब्रह्मणः प्रयुज्यते अभिधीयते । प्रशस्ते कर्मणि विवाहादौ च तथा सच्छब्दः पार्थ युज्यते प्रयुज्यते इत्येतत् ॥ २६ ॥

यज्ञे यज्ञकर्मणि या स्थितिः, तपसि च या स्थिथिः, दाने च या स्थितिः, सा 'सत्' इति च उच्यते विद्वद्भिः । कर्म च एव तदर्थीयं यज्ञदानतपोर्थीयम्—अथवा यस्य

आ॥आदिकृतामतिप्रीतेर्नामसाम्याद्ब्रह्मैव निष्पादितं भवतीत्याशयः ॥ २६ ॥

ज॥च ब्रह्मज्ञानभक्तिपूर्वकं तद्विषयत्वेन निष्ठया वेदोक्तप्रकारेण ब्राह्मणैः सहेत्यपि ग्राह्यम् । आदिपदेन जपादिग्रहणम्। षष्ठी तृतीयार्थे । **नामसाम्यात्**—नामसाम्येनावगतात्तत्प्रतिमात्वात् । घटादीनामपि ब्रह्मप्रतिमात्वसाम्यात्को विशेषो यज्ञादेरित्यत उक्तम्—**अतिप्रीतेरि**ति । ब्रह्मणः यज्ञादिषु निष्पादितं प्रतिष्ठापितम् । अत एवं क्रियमाणे यज्ञादिकं सात्त्विकमन्यद्राजसं तामसं वेत्येवमितिकर्तव्यता प्रतिपादितेति वाक्यशेषः। अत्र हि 'ओं तत्सत्' इत्यनेन ब्रह्मणो यन्नामत्रयं, तद्यज्ञादेरपि वाचकमिति प्रतिपादितम् । तेन यज्ञादेर्ब्रह्मप्रतिमात्वं सूचितम् । ब्राह्मणा इत्यादिनोङ्कारं ब्रह्मणि यज्ञादौ च व्युत्पाद्य तदुच्चारणाचार उक्तः । तेनार्थस्मरणपूर्वकमोंकारमुच्चार्य वेदोक्तप्रकारेण ब्राह्मणैः सह यज्ञादिकं कार्यमिति सूचितम् । तदित्यनेन तच्छब्दो यज्ञादौ ब्रह्मणि च व्युत्पादितः । तेन **फलमनभिसन्धाय ब्रह्माभिसन्धाय चे**ति लब्धम् । सद्भाव इत्यनेन सच्छब्दो ब्रह्मणि व्याख्यातः । तेन **ब्रह्मज्ञानपूर्वकमि**ति लभ्यते ॥ २६ ॥

रा॥वैदिकानि कर्माणि ब्राह्मणशब्दनिर्दिष्टास्त्रैवर्णिकाश्च 'ओं तत्सत्' इतिशब्दान्वयरूपलक्षणेन अवेदेभ्यश्चावैदिकेभ्यश्च व्यावृत्ता वेदितव्याः ॥ २७ ॥

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८

ॐ तत्सदिति.

इति श्रीमद्भगवद्गीतासूपनिषत्सु परब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥

श्रीकृष्णाय परब्रह्मणे नमः.

अश्रद्धया कृतं शास्त्रीयमपि होमादिकमसदित्युच्यते ; कुतः? न च तत्प्रेत्य, नो

ता॥सामान्यसंग्रहावलम्बिना आदिशब्देनाध्ययनादिग्रहणाद्वेदानामपि सच्छब्दान्वयोऽत्र प्रदर्शित एव। भवत्वेवं त्रयाणां त्रिभिरन्वयः, तदुक्तिरिह किमर्थेत्यत्र लक्षणोक्तिप्रयोजनभूतविविक्तानुसन्धानप्रतिपादनमुखेन 'ओं तत्सत्' इत्यादिश्लोकैः फलितं वदन्नुपसंहरति —तस्मादिति।यत्तु—कैश्चित्'ओं तत्सत्' इत्यमीषां वाक्यत्वकल्पनेन वाक्यार्थवर्णनं, यत्फलाभिसन्धिरहितं कर्म, तच्छोभनमिति युक्तम् ; तदोन्तदेवेत्यर्थः—इति; एतदेवं विवक्षितमित्यत्र न कश्चिद्धेतुः; नचोपयोगः;लक्षणत्वाभिधानं त्वनुष्ठानोक्तमिति भावः ॥ २७ ॥

'शास्त्रविधिमुत्सृज्य' इत्यादिना अध्यायारम्भे प्रश्नोत्तरमुखेन श्रद्धायुक्तस्याप्यशास्त्रीयस्यासुरत्वेनासत्त्वं प्रतिपाद्य शास्त्रीयस्य ततो व्यावृत्तिर्दर्शिता; इदानीं व्यतिरेकेण प्रकृतानां सदिति निर्देशार्हत्वदृढीकरणाय शास्त्रीयस्यापि श्रद्धारहितस्यासत्त्वमुच्यते । विशिष्टव्यतिरेकस्य विशेषणाभावे विशेष्याभावे च समानत्वादित्यभिप्रायेणाह—अश्रद्धया कृतं शास्त्रीयमपीति । कृतशब्दस्य हुतदत्तयोरन्वयः । 'तप्तम्' इत्यनेन तपसः कृतत्वसिद्धेर्हुतदत्तशब्दावत्र भावार्थौ । एवं कृतशब्दस्य विशेषणतयान्वयेऽपेक्षिते सामान्यविषयपरोपकारादिविषयत्वकृतिरयुक्तेति च भावः । यद्यप्यशास्त्रीयवन्निरयपतनैकहेतुत्वं नास्ति, तथापि तत्तद्वाक्योदितफलाभावादसत्त्वमुपपद्यत इत्यभिप्रायेण हेत्वाकाङ्क्षां दर्शयति—कुत

प्र-पा ॥ १. संगृहीतमात्राव. पा ॥

शं॥अभिधानत्रयं प्रकृतं तदर्थीयम् ईश्वरार्थीयम् इत्येतत्, 'सत्' इत्येव अभिधीयते। तत् एतत् यज्ञदानतपआदि कर्म असात्त्विकं विगुणमपि श्रद्धापूर्वकं ब्रह्मणः अभिधानत्रयप्रयोगेण सगुणं सात्त्विकं सम्पादितं भवति ॥ २७ ॥

तत्र च सर्वत्र श्रद्धाप्रधानतया सर्वं सम्पाद्यते यस्मात्, तस्मात्—अश्रद्धया हुतं हवनं कृतम्, अश्रद्धया दत्तं ब्राह्मणेभ्यः, अश्रद्धया तपः तप्तम् अनुष्ठितं, तथा अश्रद्धयैव कृतं च यत् स्तुतिनमस्कारादि,तत् सर्वम् 'असत्' इति उच्यते—मत्प्राप्तिसाधनमार्गबाह्यत्वात् पार्थ न च तत् बहुलायासमपि प्रेत्य फलाय, नो अपि इहार्थं, साधुभिः निन्दितत्वात् इति ॥ २८ ॥

इति श्रीपरमहंस परिव्राजकाचार्य गोविन्दभगवत्पूज्यपादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ श्रीभगवद्गीताभाष्ये सप्तदशोऽध्यायः ॥ १७ ॥

जा॥यज्ञे तपसि कर्म चैवेत्यनेन यज्ञादिषु सच्छब्दो व्याख्यातः । तेन ब्रह्मविषयत्वेन निष्ठया चेति लब्धम् । अश्रद्धयेत्यनेन ब्रह्मभक्तिरपीति ॥ २७ ॥

रा॥इह—न मोक्षाय, न सांसारिकाय च फलायेति ॥ २८ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये सप्तदशोऽध्यायः ॥ १७ ॥

श्रीमते रामानुजाय नमः.

---

ता॥इति।"येयं प्रेते'इति श्रुत्यविरोधेन प्रेत्यशब्दस्य मुक्तदशाविषयत्वोपपत्तौ 'मोक्षकाङ्क्षिभिः'इत्याद्युक्तफलव्यतिरेकस्य 'न च तत्प्रेत्य'इत्यादिना विवक्षितत्वमाह—न मोक्षायेति। परिशेषसिद्धमिहशब्दस्यार्थमाह—न सांसारिकाय फलायेति।श्रद्धायुक्तमप्यवैदिकं,वैदिकमपि श्रद्धाहीनं दृष्टादृष्टप्रयोजनविरहादननुष्ठेयम्; उभयविधप्रयोजनयोगाद्वैदिकमेव श्रद्धापूतमेवानुष्ठेयमित्यध्यायसार इति भावः॥२८॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
भगवद्रामानुजविरचितश्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां
सप्तदशोऽध्यायः ॥ १७ ॥

श्रीमते निगमान्तमहादेशिकाय नमः.

---

प्र-पा॥१. कठोप. १-१-२१. 'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः' ॥—नचिकेता आह—येयमिति।अत्राधिकरणे इमम्मन्त्रं प्रस्तुत्य-इत्थं हि भाष्यकृता 'अत्र परमपुरुषार्थरूप ब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मात्मोपासनपरावरात्मतत्त्वजिज्ञासयायम्प्रश्नः क्रियते । एवञ्च 'येयं प्रेते' इति नशरीरवियोगमात्राभिप्रायम् ; अपितु सर्वबन्धविनिर्मोक्षाभिप्रायम्। यथा 'न प्रेत्य संज्ञास्ति'इति । अयमर्थः—मोक्षाधिकृते मनुष्ये,प्रेते सर्वबन्धविनिर्मुक्ते, तत्स्वरूपविषया वादिविप्रतिपत्तिनिमित्ता अस्तिनास्त्यात्मिका येयं विचिकित्सा, तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयानुशिष्टोऽहं, विद्या विजानीयाम्—इति । तथा हि विप्रतिपद्यन्ते—केचित्-वित्तिमात्रस्यात्मनः स्वरूपोच्छित्तिलक्षणम्मोक्षमाचक्षते। अन्येतु-वित्तिमात्रस्यैव सतोऽविद्यास्तमयम् । अपरे पाषाणकल्पस्यात्मनो ज्ञानाद्यशेषविशेषणगुणोच्छेदलक्षणं कैवल्यरूपम् । अपरे-अपहतपाप्मानमभ्युपगच्छन्तस्तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्योपाध्यपगमे तद्भावलक्षणम्मोक्षमाचक्षते । त्रय्यन्तनिष्णातास्तु—निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्य अनादिकर्मविरोधोच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते । तत्र मोक्षस्वरूपं तत्साधनञ्च त्वत्प्रसादात् विद्यामिति नचिकेतसा पृष्टो मृत्युः'—इति भाषितम् । श्रुतप्रकाशिकायामपि विस्तरेण द्रष्टव्यम् ॥

---

आ॥तथा च ऋग्वेदखिलेषु—'ओं यज्ञाद्या निष्फलं कर्म तत्स्यात्सद्वै तदर्थं कर्मेति वदन्ति देवाः । तच्छब्दानां सन्निधेर्ब्रह्मप्रीतेस्तद्रूपत्वाज्जनितं ब्रह्म तस्य' इति ॥ २८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये सप्तदशोऽध्यायः ॥ १७ ॥

---

ज॥अत्र श्रुतिसंमतिमाह—तथा चेति । ओं यज्ञाद्याः वेदाद्योतत्वात् । निष्फलं फलोद्देशरहितत्वात्तदर्थं ब्रह्मविषयम् । एवं तच्छब्दानां ब्रह्मशब्दानाम् । यज्ञादिषु संनिधेरवगततद्रूपत्वात्तत्प्रतिमात्वात् तस्योक्तप्रकारेण यज्ञादीनामनुष्ठातुः ॥ २८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां
प्रमेयदीपिकायां सप्तदशोऽध्यायः ॥ १७ ॥

श्रीः

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः.



अशास्त्रमासुरं कृत्स्नं शास्त्रीयं गुणतः पृथक् ।
लक्षणं शास्त्रसिद्धस्य त्रिधा सप्तदशोदितम् ॥ २१ ॥

श्रीमद्यामुनमुनये नमः.



---

श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा.

अत्र भाष्यम्—'इदानीमशास्त्रविहितस्यासुरत्वेन अफलत्वं, शास्त्रविहितस्य च गुणतस्त्रैविध्यं, शास्त्रसिद्धस्य लक्षणं चोच्यते' इति । शास्त्रं यस्य विधायकत्वेन नास्ति, तदशास्त्रमित्यभिप्रायेण—'अशास्त्रविहितस्य' इत्युक्तम् । ओंतत्सदिति शास्त्रसिद्धस्य त्रिविधं लक्षणमुक्तम् ॥ २१ ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥



# श्रीमद्भगवद्गीता

## अष्टादशोऽध्यायः

रा॥अतीतेनाध्यायद्वयेन—अभ्युदयनिश्श्रेयससाधनभूतं वैदिकमेव यज्ञतपोदानादिकं कर्म, नान्यत्; वैदिकस्य च कर्मणस्सामान्यलक्षणं प्रणवान्वयः; तत्र मोक्षाभ्युदयसाधनयोर्भेदः तत्सच्छब्दनिर्देश्यत्वेन. मोक्षसाधनं च कर्म फलाभिसन्धिरहितं यज्ञादिकम्; तदारम्भश्च सत्त्वोद्रेकाद्भवति; सत्त्ववृद्धिश्च सात्त्विकाहारसेवया—इत्युक्तम्। अनन्तरं मोक्षसाधनतया निर्दिष्टयोस्त्यागसंन्यासयोरैक्यं, त्यागस्य च स्वरूपं, भगवति सर्वेश्वरे च सर्वकर्मणां कर्तृत्वानुसन्धानं, सत्त्वरजस्तमसां कार्यवर्णनेन सत्त्वगुणस्यावश्योपादेयत्वं, स्ववर्णोचितानां कर्मणां परमपुरुषाराधनभूतानां परमपुरुषप्राप्तिनिर्वर्तनप्रकारः, कृत्स्नस्य गीताशास्त्रस्य सारार्थो भक्तियोग इत्येते प्रतिपाद्यन्ते। तत्र तावत्त्यागसन्न्यासयोः पृथक्त्वैकत्वनिर्णयाय स्वरूपनिर्णयाय चार्जुनः पृच्छति—

अर्जुन उवाच—

सन्न्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्।
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन॥ १

---

ता॥कर्तव्यविशोधनप्रधाने अन्तिमेऽध्यायत्रिकेऽस्याध्यायस्य पश्चाद्भावित्वज्ञापनाय षोडशसप्तदशयोर्देवासुरविभागोक्त्यादिमुखेन हेयोपादेयविभजनपरतया प्रघट्टकैक्यमभिप्रेत्याह—**अतीतेनेति**। **वैदिकस्य कर्मणस्सामान्यलक्षणं प्रणवान्वयः, तत्र मोक्षाभ्युदयसाधनयोर्भेदस्तत्सच्छब्दनिर्देश्यत्वेनेति** विभजमानस्यायमभिप्रायः—विशेषणादिसामर्थ्यलब्धोऽयं विभागः। ब्रह्मणः पारोक्ष्यात् 'तत्' इति निर्देशः। तज्ज्ञाने तु सन्मात्रविवक्षया सच्छब्दः। क्रमादेते सात्त्विकराजसतामसा इति विभागस्तु कस्यचिदुत्प्रेक्षाकल्पितः—इति। एवमुक्तेष्वप्यर्थेषु मोक्षसाधनभूतांशस्वरूपशोधनमुत्तराध्यायेन क्रियत इति सङ्गत्यभिप्रायेणाह—**अनन्तरमिति**। 'ईश्वरे कर्तृताबुद्धिस्सत्त्वोपादेयतान्तिमे। स्वकर्मपरिणामश्च शास्त्रसारार्थ उच्यते' इति सङ्ग्रहश्लोके त्यागसन्न्यासैक्यतत्स्वरूपानुक्तिरीश्वरे कर्तृताबुद्धेश्शेषतया तदुपन्यासादिति मन्तव्यम्। सत्त्वोपादेयत्वमत्र तात्पर्यवृत्त्याभिधीयत इत्यभिप्रायेणाह—**सत्त्वरजस्तमसां कार्यवर्णनेनेति**। 'स्वधर्मज्ञानवैराग्यसाध्यभक्त्येकगोचरः' इति सङ्ग्रहारम्भोक्तप्रधानकर्तव्यपरोऽत्र शास्त्रसारार्थशब्द इत्यभिप्रायेणाह—**सारार्थो भक्तियोग इति**। स्वर्गादिसाधनानां यज्ञदानादीनां स्वरूपाविशेषेऽपि यद्योगान्मोक्षसाधनत्वं, तदिदानीं सविशेषं शोधयितुम् अर्जुनः पृच्छतीत्यभिप्रायेण प्रकृते प्रश्नं सङ्गमयति—**तत्र तावदिति**। सत्त्वविवृद्धितदुपायादिकथनं त्यागादिविशिष्टमोक्षसाधनकर्मार्थतया। सन्न्यासशब्दस्याश्रमविशेषादिरूढेस्त्यागमात्रेऽपि यौगः पृथक्त्वैकत्वशङ्का।

रा॥त्यागसन्न्यासौ हि मोक्षसाधनतया विहितौ—*"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः...वेदान्तविज्ञानसुनिश्चितार्थास्सन्न्यासयोगाद्यतयश्शुद्धसत्त्वाः। ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इत्यादिषु। अस्य सन्न्यासस्य त्यागस्य च तत्त्वं—याथात्म्यं पृथग्वेदितुमिच्छामि। अयमभिप्रायः—किमेतौ संन्यासत्यागशब्दौ पृथगर्थौ, उतैकार्थावेव? यदा पृथगर्थौ, तदा अनयोः पृथक्त्वेन स्वरूपं वेदितुमिच्छामि; एकत्वेऽपि तस्य स्वरूपं वक्तव्यम्—इति ॥ १ ॥

---

ता॥वादिविप्रतिपत्त्यादिभिस्स्वरूपविशेषानिश्चयः। त्यागसन्न्यासयोर्विशेषतस्तत्त्वबुभुत्साहेतुमाह—त्यागसन्न्यासौ हीति। कर्मस्वरूपे स्वर्गापवर्गादिसाधारणे त्यागादिसंज्ञकविशेषणयोगादेव ह्यपवर्गसाधनत्वम्। अतः प्राप्ताप्राप्तविवेकेन विशेषणे तत्साधनत्वव्यपदेशः। संशयविपर्ययोपमर्दी विशेष इह तत्त्वशब्देन विवक्षित इत्याह—याथात्म्यमिति। पृथक्त्वं वेदितुमिच्छामीत्युक्ते निश्चितपृथक्त्वस्य तत्तत्स्वरूपजिज्ञासा प्रतीयते; नच तद्युक्तं, पूर्वत्र पृथक्त्वनिश्चयहेत्वभावादुत्तरत्र चैकत्वस्यैव वक्ष्यमाणत्वात्। अतोऽयं प्रश्नोऽनुपपन्नः; प्रतिवचनासङ्गतिश्चेत्यत्राह—अयमभिप्राय इति। 'तत्त्वं वेदितुमिच्छामि' इत्येतदेव विवक्षितम्; पृथक्त्वनिर्देशस्तु संशयकोट्यन्यतरोपक्षेपमात्रपरः। पृथक्त्वमस्ति चेत्तद्वेदितुमिच्छामीति वा वाक्यावृत्तिरित्यभिप्रायेणाह—किमिति ॥ १ ॥

---

प्र-पा॥ * तै-ना. १०-२१, २२॥ 'नकर्मणा... आनशुः। परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ॥ २१ ॥ वेदान्त...सर्वे' ॥ २२ ॥ नकर्मणेति—यत्-अमृतत्वं यतयः प्राप्नुवन्ति, यच्चामृतत्वं, नाकस्य-भगवल्लोकस्य उपरि-परमव्योमनि, निहितं राजते, तदमृतत्वं-कर्मप्रजाधनैर्न प्राप्यम्। अपितु 'सन्न्यासस्त्याग इत्युक्तः शरणागतिरित्यपि' इत्युक्तभगवच्चरणारविन्दशरणवरणलक्षणत्यागेनैव। एके-कतिचित्प्राप्ता इत्यर्थः। भक्तिनिष्ठानामप्यङ्गतया प्रपदनस्यापेक्षितत्वात् प्रपन्नानाच प्रधानतयापेक्षितत्वात् 'तस्य च वशीकरणं तच्छरणागतिरेव' 'एतेषां संसारविमोचनं- भगवत्प्रपत्तिमन्तरेण नोपपद्यते' इति भाषणाच्च यथोक्त एवार्थः। वेदान्तविज्ञानेति - यतयः- संन्यासिनः,यमादियुक्ताः वेदान्तविज्ञानसुनिश्चितार्थाः वेदान्तजनितज्ञानेन सुनिश्चिततत्त्वहितपुरुषार्थाः, सन्न्यासयोगात्-संन्यासलक्षणप्रपदनेन, शुद्धसत्त्वाः-निरस्तभक्तिविरोधिपापतया निर्मलान्तःकरणाः,अनुष्ठितोपायाः, परान्तकाले-चरमशरीरवियोगकाले, ब्रह्मलोके-भगवल्लोके, परामृतात्-उत्कृष्टात् असंसारिणः परमात्मानम्प्राप्य, ल्यब्लोपे पञ्चमी, सर्वे परिमुच्यन्ति-बन्धान्मुक्ता भवन्तीत्यर्थः ॥

---

शं॥सर्वस्यैव गीताशास्त्रस्य अर्थः अस्मिन् अध्याये उपसंहृत्य सर्वश्च वेदार्थो वक्तव्यः इत्येवमर्थः अयम् अध्यायः आरभ्यते। सर्वो हि अतीतेषु अध्यायेषु उक्तः अर्थः अस्मिन् अध्याये अवगम्यते। अर्जुनस्तु संन्यासत्यागशब्दार्थयोरेव विशेषबुभुत्सुः उवाच—संन्यासस्य—संन्यासशब्दार्थस्य इत्येतत्—हे महाबाहो तत्त्वं तस्य भावः तत्त्वं, याथात्म्यमित्येतत्, इच्छामि वेदितुं ज्ञातुं; त्यागस्य च त्यागशब्दार्थस्येत्येतत्, हृषीकेश पृथक् इतरेतरविभागतः, केशिनिषूदन केशिनामा कश्चित् असुरः, तं निषूदितवान् भगवान् वासुदेवः, तेन तन्नाम्ना सम्बोध्यते अर्जुनेन ॥ १ ॥

---

आ॥अनन्तगुणपूर्णाय नमः। ॐ पूर्वोक्तं साधनं सर्वं संक्षिप्योपसंहरत्यनेनाध्यायेन ॥

---

ज॥अध्यायप्रतिपाद्यमाह—पूर्वोक्तमिति। साधनं ज्ञानसाधनम्। उक्तस्योक्तिर्व्यर्थेत्याशङ्कानिरासाय—संक्षिप्योपसंहरतीत्युक्तम्। अनुक्तं त्रैगुण्यं च वक्तीत्यपि ग्राह्यम् ॥ १ ॥

रा॥अथानयोरेकमेव स्वरूपं, तच्चेदृशमिति निर्णेतुं वादिविप्रतिपत्तिं दर्शयन् श्रीभगवानुवाच—

**श्रीभगवानुवाच—**

**काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥** २

**केचन विद्वांसः काम्यानां कर्मणां न्यासं स्वरूपत्यागं संन्यासं विदुः; केचिच्च विचक्षणाः नित्यानां नैमित्तिकानां काम्यानांच सर्वेषां कर्मणां फलत्याग एव मोक्षशास्त्रेषु त्यागशब्दार्थ इति प्राहुः; तत्र शास्त्रीयत्यागः काम्यकर्मस्वरूपविषयः, सर्वकर्मफलविषय इति विवादं प्रदर्शयन् एकत्र संन्यासशब्दमितरत्र त्यागशब्दं प्रयुक्तवान्; अतस्त्या-**

---

**ता॥**पृथक्त्वैकत्वतत्स्वरूपजिज्ञासया प्रश्नश्चेत्-तत्र कस्मिन्नंशे 'काम्यानाम्'इत्यादिमतभेदोपन्यासस्य संङ्गतिरित्यत्राह—**अथे**ति । अयमभिप्रायः—न्यायतो ह्यत्र निर्णयः प्रतिपाद्यते; संदिग्धेच न्यायावतारः; सन्देहश्चात्र वादिविप्रतिपत्तिनिबन्धन इति न्यायविषयविशोधनाय विप्रतिपत्त्युपन्यासः—इति । **एतेन** कथितार्थयोरपि सन्न्यासत्यागशब्दयोर्विप्रतिपत्तिप्रशमनाय अस्मिन्नध्याये पुनः प्रश्न इत्यपि सूचितम् । एकत्वस्वीकारेण प्रतिवचनात्पृथक्त्वप्रतिक्षेपोऽर्थसिद्ध इत्यभिप्रायेणाह —**एकमेव स्वरूपमि**ति । स्वमतस्य'निश्चयं शृणु'इति वक्ष्यमाणत्वात्'कवयः''विचक्षणाः'इति पदद्वयं नार्थप्राशस्त्यार्थवक्तृगौरवपरम्; अपितु विप्रतिपत्त्युपयुक्तवेदनमात्रपरमित्यभिप्रायेणाह—**केचन विद्वांस** इति। अनन्तरश्लोकेन भेदस्य 'एके,अपरे'इति व्यक्तमुक्तत्वादिहापि तद्विवक्षेत्यभिप्रायेण—**केचने**त्युक्तम्। 'काम्यानां कर्मणां न्यासम्' इति विशेषणादितरेषामपरित्यागः प्रतीयते;उत्तरत्र च'सर्वकर्मफलत्यागम्'इति विशेषणादत्र काम्यस्वरूपत्यागश्चेत्यभिप्रायेणाह—**स्वरूपत्याग**मिति। काम्यस्वरूपत्यागं वदतामयमभिप्रायः—न तावन्नित्यनैमित्तिकवत् अकरणे प्रत्यवायात्कर्मान्तरानर्हतापत्तिभयाद्वा काम्यमनुष्ठीयते।नच त्रिवर्गसाधनाय,तस्यापवर्गप्रत्यनीकत्वात्। नच तदेव कर्मापवर्गस्यापि स्वयं साधनम्, उपासनादिनैरर्थक्यप्रसङ्गात्।नच विनियोगपृथक्त्वेन विद्याङ्गतया तत्परिग्रहः, यज्ञादिश्रुतेर्नित्यनैमित्तिकमात्रविषयत्वेऽपि विरोधाभावात् । अत एव हि 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इत्यधिकरणमाश्रमधर्मसापेक्षतापरं भाष्यते । तस्मात्स्वर्गादिसंज्ञनरकहेतवः काम्याः क्रिया मुमुक्षुभिर्नानुष्ठेयाः —इति।सर्वकर्मफलत्यागमिति वदतां त्वयमाशयः—फलविरोधाद्धि काम्यानां त्यागश्शङ्क्यते; अतः फलमेव त्यज्यताम्, न च निष्फलानुष्ठानप्रसङ्गः, नित्यनैमित्तिकवदेव भगवत्प्रीतिमात्रार्थतया तदनुष्ठानोपपत्तेः। नचैवं न विधिः 'यो वा एतदक्षरं गार्ग्यविदित्वा जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि अन्तवदेवास्य तद्भवति' इत्यादिनाऽक्षरशब्दनिर्दिष्टपरमपुरुषवेदनावेदनाभ्यामेव तस्यैव कर्मणो नित्यानित्यफलसाधनत्वश्रुतेः । अतो नित्यनैमित्तिकानामिव काम्यानामपि न स्वरूपत्यागः—इति । विवादस्य भिन्नविषयत्वायोगादत्र त्यागसंन्यासशब्दयोरेकार्थत्वावश्यंभावात्पृथगर्थत्वशङ्कापरिहारोऽर्थलब्ध इत्याह—**तत्रे**ति।एतेन सन्न्यासत्यागशब्दयोः पृथगर्थत्वमङ्गीकृत्य कस्यचित्काम्यस्वरूपप्रहाणविषयतया कस्यचित्तु नित्यनैमित्तिकफलोपेक्षार्थतां च वदन्तः प्रत्युक्ताः । नह्यत्र काम्येतरकर्मफलत्यागमित्युच्यते । ततश्च संकोचकाभावात् त्रिविधमपि कर्म संगृह्णाति । तदिदमुक्तं—**नित्यानां नैमित्तिकानां काम्यानां च सर्वेषां कर्मणा**मिति । नित्या-

---

**प्र-पा** ॥ १. गी. १८-४ ॥ २. शारी. ३-४-२६ ॥ ३. बृ. ५-८-१० ॥

रा॥गसंन्यासशब्दयोरेकार्थत्वमङ्गीकृतमिति ज्ञायते;तथा *'निश्चयं शृणु मे तत्र त्यागे भरतसत्तम'इति त्यागशब्देनैव निर्णयवचनात्' †'नियतस्य तु संन्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागः तामसः परिकीर्तितः'‡'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्' इति परस्परपर्यायतादर्शनाच्च तयोरेकार्थत्वं प्रतीयत इति निश्चीयते ॥ २ ॥

ता॥नामपि 'प्राजापत्यं गृहस्थानाम्' इत्यादिना फलसंयोगोऽवगतः। अत्र श्लोके त्यागसंन्यासशब्दयोरर्थभेदव्युत्पादनपरतां निरसितुमैकार्थ्ये प्रस्पष्टं हेतुद्वयमाह— तथेति । नह्यर्थद्वयविषयेऽत्र विमर्शे अन्यतरस्यैव निश्चय उपपन्न इत्यभिप्रायेणोक्तं —त्यागशब्देनैवेति । परस्परपर्यायतादर्शनाच्चेति— अयमभिप्रायः—'नियतस्य तु संन्यासः कर्मणो नोपपद्यते' इति निषिद्ध एव हि संन्यासः 'मोहात्तस्य परित्यागः' इति त्यागशब्देनानूद्य तामसत्वेन निन्द्यते, अन्यथा जरद्गवादिवाक्यवत्परस्परानन्वयप्रसङ्गात् । एवं 'भवत्यत्यागिनां प्रेत्य' इत्युक्त एवार्थः 'नतु संन्यासिनां क्वचित्' इति व्यतिरेकेण दृढीक्रियते।नच तदन्यविधिरन्याभावस्य व्यतिरेकः। अत इमौ शब्दावत्राप्येकार्थावित्यङ्गीकृतम् —इति— प्रतिवक्त्रा भगवतेति शेषः ॥ २ ॥

प्र·पा॥*गी. १८ ४ ॥ †गी. १८-७ ॥ ‡गी. १८-१२ ॥ १. वि. पु. १-६-३७ ॥

शां॥संन्यासत्यागशब्दौ तत्रतत्र निर्दिष्टौ न निर्लुठितार्थौ, पूर्वेषु अध्यायेषु । अतः अर्जुनाय पृष्टवते तन्निर्णयाय भगवान् उवाच—काम्यानाम् अश्वमेधादीनां कर्मणां न्यासं परित्यागं संन्यासं संन्यासशब्दार्थम्,अनुष्ठेयत्वेन प्राप्तस्य अननुष्ठानं, कवयः पण्डिताः केचित् विदुः विजानन्ति।नित्यनैमित्तिकानाम् अनुष्ठीयमानानां सर्वकर्मणाम् आत्मसंबन्धितया प्राप्तस्य फलस्य परित्यागः सर्वकर्मफलत्यागः तं प्राहुः कथयन्ति त्यागं त्यागशब्दार्थं विचक्षणाः पण्डिताः । यदि काम्यकर्मपरित्यागः फलपरित्यागो वा अर्थः वक्तव्यः, सर्वथा परित्यागमात्रं संन्यासत्यागशब्दयोः एकः अर्थः स्यात्, न घटपटशब्दाविव जात्यन्तरभूतार्थौ ॥

ननु नित्यनैमित्तिकानां कर्मणां फलमेव नास्ति इति आहुः । कथम् उच्यते तेषां फलत्यागः, यथा वन्ध्यायाः पुत्रत्यागः ?

नैष दोषः, नित्यानामपि कर्मणां भगवता फलवत्त्वस्य इष्टत्वात् । वक्ष्यति हि भगवान् 'अनिष्टमिष्टं मिश्रं च' इति 'न तु संन्यासिनाम्'इति च। संन्यासिनामेव हि केवलं

आ॥फलानिच्छया अकरणेन वा काम्यकर्मणो न्यासः।त्यागस्तु फलत्याग एव। तथा हि प्राचीनशालश्रुतिः ' अनिच्छयाऽकर्मणा वाऽपि काम्यकर्मन्यासो न्यासः फलत्यागस्तु त्यागः' इति ॥ २ ॥

ज॥'काम्यानां कर्मणाम्' इत्येतं श्लोकं केचिद्व्याचक्षते—काम्यानां कर्मणामश्वमेधादीनां स्वरूपेण त्यागः संन्यासः । नित्यनैमित्तिकादिसर्वकर्मफलत्यागस्त्यागः' इति—तदसदिति भावेनाह—फलेति। वैकल्पिककाम्यानां स्वर्गादिफलानिच्छया विशेषणत्यागेन त्यागो नियतकाम्यानां स्वरूपाकरणेन त्यागः संन्यासः काम्यकर्मणामेव फलत्यागस्तु त्यागः; करणाकरणे तु न विवक्षिते इत्यर्थः । कुत एतदित्यत आह—तथाहीति । अकर्मणा अकरणेन जनकाश्वपत्यादिभिर्मुमुक्षुभिरश्वमेधादीनामनुद्दिष्टफलानामनुष्ठानान्न काम्यानां स्वरूपपरित्याग एव नित्यनैमित्तिकफलस्यान्तःकरणशुद्धेः सर्वापेक्षितत्वेन तत्त्यागो न युक्तः ॥ २ ॥

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ॥
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३

रा॥एके —मनीषिणः कापिला वैदिकाश्च तन्मतानुसारिणो रागादिदोषवद्बन्धकत्वात्

ता॥एवं 'काम्यानाम्' इति श्लोकेन फलविरोधतदभावद्वारा विरोधो दर्शितः। अथ 'त्याज्यं दोषवत्' इति श्लोकेन स्वरूपतो दोषयोगतदभावाभ्यां प्रत्यवायत्वादिमुखेन विवादः प्रदर्श्यते—वैधहिंसापि कापिलैर्निषिद्धत्वेन दोषतयाङ्गीक्रियते। यथोक्तमीश्वरकृष्णेन 'दृष्टवदानुश्रविकः स ह्यविशुद्धः क्षयातिशययुक्तः' इति। उक्तं च पञ्चशिखचार्यैः 'स्वल्पस्संकरस्सुपरिहरस्सप्रत्यवमर्शः' इति। अतो वैधहिंसा पुरुषस्य दोषवामस्यति, कतोश्चोपकरिष्यतीति तन्मतम्। अत 'एके' इति शब्देन सामान्यतो निर्दिष्टावादिनो 'दोषवत्' इति हेत्वन्वयादिसामर्थ्याद्दोषाख्यदृष्टान्तोक्तिबलाद्वा विशेषतो व्यज्यन्त इत्याह—कापिला वैदिकाश्च तन्मतानुसारिणइति। एतेन सर्वकर्मस्वरूपसन्यासवादिनां मतमपि वेदबाह्यत्वेन दर्शितम्। रागादिदोषवदिति—रागादयो दोषा बन्धका इति सर्वसैद्धान्तिकसम्मतत्वात्तदुदाहरणम्; यद्वा कर्मैव रागादिदोषवत्: अत एव बन्धकमित्यभिप्रायः। अस्यां योजनायामा-

प्र-पा ॥ १ ॥ | २ ॥

शं॥कर्मफलासम्बन्धं दर्शयन् असंन्यासिनां नित्यकर्मफलप्राप्तिं 'भवत्यत्यागिनां प्रेत्य' इति दर्शयति ॥ २ ॥

त्याज्यं त्यक्तव्यं दोषवत् दोषः अस्य अस्तीति दोषवत् —किं तत्?—कर्म. बन्धहेतुत्वात् सर्वमेव। अथवा—दोषः यथा रागादिः त्यज्यते, तथा त्याज्यम् इति एके कर्म प्राहुः मनीषिणः पण्डिताः साङ्ख्यादिदृष्टिम् आश्रिताः, अधिकृतानां कर्मिणामपि इति। तत्रैव यज्ञदानतपःकर्म न त्याज्यम् इति च अपरे ॥

कर्मिणः एव अधिकृताः, तान् अपेक्ष्य एते विकल्पाः न तु ज्ञाननिष्ठान् व्युत्थायिनः संन्यासिनः अपेक्ष्य। 'ज्ञानयोगेन सांख्यानां' 'निष्ठा मया पुरा प्रोक्ता' इति कर्माधिकारात् अपोद्धृताः ये, न तान् प्रति चिन्ता ॥

ननु 'कर्मयोगेन योगिनाम्' इति अधिकृताः पूर्वं विभक्तनिष्ठाः अपि इह सर्वशास्त्रार्थोपसंहारप्रकरणे यथा विचार्यन्ते, तथा सांख्या अपि ज्ञाननिष्ठाः विचार्यन्ताम् इति।

न, तेषां मोहदुःखनिमित्तत्यागानुपपत्तेः। न कायक्लेशादिनिमित्तं दुःखं साङ्ख्याः आत्मनि पश्यन्ति, इच्छादीनां क्षेत्रधर्मत्वेनैव दर्शितत्वात्। अतः ते न कायक्लेशदुःखभयात् कर्म परित्यजन्ति। नापि ते कर्माणि आत्मनि पश्यन्ति, येन नियत कर्म मोहात्

आ॥मनीषिण इत्युक्त्वा त्पूर्वपक्षोऽपि ग्राह्य एव। फलत्यागेन त्यागो विवक्षितः। यज्ञा-

जा॥'त्याज्यं दोषवत्' इत्यनेन हेयः कापिलानां पक्ष उपन्यस्त इति केचित्; तदसदिति भावेनाह—मनीषिण इति। पूर्वपक्षः पूर्वोपन्यस्तः पक्षः। ननु 'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्' इति भगवन्मतविरुद्धोऽसौ कथं ग्राह्य इत्यत आह—फलत्यागेनेति। फलत्यागाभिप्रायेण यज्ञादेस्त्यागो विवक्षितस्तत्पक्षे न स्वरूपतः। कुतः? मनीषिण इति विशेषणादेव। अतो न भगवन्मत-

रा॥सर्वं यज्ञादिकं कर्म मुमुक्षुणा त्याज्यमिति प्राहुः; अपरे—पण्डिता यज्ञादिकं कर्म न त्याज्यमिति प्राहुः ॥ ३ ॥

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधस्संप्रकीर्तितः ॥ ४

ता॥दिशब्दो हिंसादिकमपि संगृह्णाति । सर्वं यज्ञादिकं कर्मेति—कर्मशब्दोऽत्र सामान्यविषयोऽपि 'यज्ञदानतपःकर्म न त्याज्यम्'इति पक्षान्तरे विशेषणाच्छास्त्रचोदितविषयः;तत्र च विशेषकाभावात्काम्यविषयत्वे पौनरुक्त्याच्च सर्वविषय इति भावः । सर्वस्त्याज्यत्वे तद्विधायकस्य शास्त्रस्याप्रामाण्यप्रसङ्गात्—मुमुक्षुणेति विशेषितम्।अपरशब्दोऽत्र स्वमतानुसारिविषयः।'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्' इति हि स्वमतं वक्ष्यत इत्यभिप्रायेणाह—पण्डिताइति । त्याज्योपादेयविभागतत्त्वविद इत्यर्थः ॥ ३ ॥

शं॥परित्यजेयुः। गुणानां कर्म 'नैव किंचित्करोमि' इति हि ते संन्यस्यन्ति।'सर्वकर्माणि मनसा संन्यस्य' इत्यादिभिः तत्त्वविदः संन्यासप्रकारः उक्तः । तस्मात् ये अन्ये अधिकृताः कर्मणि अनात्मविदः. येषां च मोहनिमित्तः त्यागः सम्भवति कायक्लेशभयाच्च, ते एव तामसाः त्यागिनः राजसाश्च इति निन्द्यन्ते, कर्मिणाम् अनात्मज्ञानां कर्मफलत्यागस्तुत्यर्थं, 'सर्वारम्भपरित्यागी''मौनी सन्तुष्टो येन केनचित्''अनिकेतः स्थिरमतिः' इति गुणातीतलक्षणे च परमार्थसंन्यासिनः विशेषितत्वात् । वक्ष्यति च 'निष्ठा ज्ञानस्य या परा' इति । तस्मात् ज्ञाननिष्ठाः संन्यासिनः न इह विवक्षिताः । कर्मफलत्यागः एव सात्त्विकत्वेन गुणेन तामसत्वाद्यपेक्षया संन्यासः उच्यते, न मुख्यः सर्वकर्मसंन्यासः ॥

सर्वकर्मसंन्यासासम्भवे च 'न हि देहभृता' इति हेतुवचनात् मुख्य एव इति चेत्—न, हेतुवचनस्य स्तुत्यर्थत्वात् । यथा 'त्यागाच्छान्तिरनन्तरम्' इति कर्मफलत्यागस्तुतिरेव, यथोक्तानेकपक्षानुष्ठानाशक्तिमन्तम् अर्जुनं प्रति विधानात्; तथा इदमपि 'न हि देहभृता शक्यम्' इति कर्मफलत्यागस्तुत्यर्थः न 'सर्वकर्माणि मनसा संन्यस्य'नैव कुर्वन्न कारयन्नास्ते' इत्यस्य पक्षस्य अपवादः केनचित् दर्शयितुं शक्यः । तस्मात् कर्मणि अधिकृतान् प्रत्येव एषः संन्यासत्यागविकल्पः । ये तु परमार्थदर्शिनः साङ्ख्याः, तेषां ज्ञाननिष्ठायामेव सर्वकर्मसंन्यासलक्षणायाम् अधिकारः, न अन्यत्र, इति न ते विकल्पार्हाः । तच्च उपपादितम् अस्माभिः 'वेदाविनाशिनम्' इत्यस्मिन् प्रदेशे, तृतीयादौ च ॥ ३ ॥

आ॥देस्तत्पक्षम्। 'यस्तु कर्मफलत्यागी' इति च वक्ष्यति । अत एक एवायं पक्षः ॥ ३ ॥

ज॥विरुद्धोऽसौ । कर्मत्यागशब्दः कथं फलत्यागेनार्थेनार्थवानित्यत आह—यस्त्विति । नन्वेवं सति पूर्वोत्तरार्धोपन्यस्तयोः पक्षयोरविरोध आपद्यत इति चेत्—सत्यमित्याह—अत इति । अतो मनीषिपक्षत्वादेकोऽविरुद्धः । अयं पूर्वोत्तरार्धोपन्यस्तः । किं त्वापातप्रतीतिमपेक्ष्य संदेहबीजत्वेन विप्रतिपत्तिरियमुद्भाविततेति भावः ॥ ३ ॥

रा॥तत्र-एवं वादिविप्रतिपन्ने त्यागे—त्यागविषयं निश्चयं मत्तश्शृणु;त्यागः क्रियमाणेष्वेव वैदिकेषु कर्मसु फलविषयतया, कर्मविषयतया, कर्तृत्वविषयतया च पूर्वमेव हि मया त्रिविधस्संप्रकीर्तितः—*'मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा। निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः' इति: कर्मजन्यं स्वर्गादिकं फलं मम न स्यादिति फलत्यागः; मदीयफलसाधनतया मदीयमिदं कर्मेति कर्मणि ममतायाः परित्यागः कर्मविषयस्त्यागः; सर्वेश्वरे कर्तृत्वानुसंधानेनात्मनः कर्तृतात्यागः कर्तृत्वविषयस्त्यागः ॥ ४ ॥

ता॥'तत्र'इतिशब्दः प्रकृते विप्रतिपत्तिविषयतानुवादमुखेन न्यायप्रवृत्तिविषयसंदिग्धताद्योतक इत्यभिप्रायेणाह—एवंवादिविप्रतिपन्नइति । 'मे निश्चयम्' इत्यनेन मतान्तरोत्थानशङ्काव्युदासायाह — त्यागविषयं निश्चयं मत्तश्शृण्विति । मत्तः —भ्रमादिदोषरहितादित्यर्थः । 'त्यागोहि' इत्यादिकं न वक्ष्यमाणसात्त्विकत्यागादित्रैविध्यविषयं, किं तु सात्त्विकत्यागावान्तरभेदविषयं. 'संप्रकीर्तितः' इत्यस्य प्रागुक्ततत्परत्वस्वारस्यात्, हिशब्देन श्रोतृसंप्रतिपत्त्यादिप्रतीतेश्चेत्यभिप्रायेणाह—त्यागः क्रियमाणेष्वेवेत्यादि।'मयि सर्वाणि'इत्येक एव श्लोकस्त्रिविधत्यागपर इति अत्र निष्फलानुष्ठानस्वरूपत्यागं,साङ्ख्यमतशङ्का च प्रतिक्षेप्तुं त्रयाणां स्वरूपं विविनक्ति—कर्मजन्यमित्यादिना । मदीयफलसाधनतये-त्यादि—स्वकीयप्रीतिसाधनतया स्वार्थमेव भगवान्प्रवर्तयतीति हि मुमुक्षोरनुसंधानमिति भावः । स्वकर्तृत्वस्य तादधीन्यतदनुमतिसापेक्षत्वादिभिस्सर्वेश्वरे कर्तृत्वानुसंधानम् । कर्तृत्वत्यागस्तु अनेककर्तृके परप्रयुक्तस्वात्मकर्तृकत्वानुसन्धानमित्युत्तरत्र विशोधयिष्यते ॥ ४ ॥

प्र-पा ॥ १. इति निष्कर्षः । अत्र स्वरूपत्याग-इति सुगमः. पाठः ॥

शं॥तत्र एतेषु विकल्पभेदेषु—निश्चयं शृणु अवधारय मे मम वचनात् तत्र त्यागे त्यागसंन्यासविकल्पे यथादर्शिते भरतसत्तम भरतानां साधुतम । त्यागो हि—त्यागसंन्यासशब्दवाच्यो हि यः अर्थः स एक एवेति अभिप्रेत्य आह 'त्यागो हि' इति—पुरुषव्याघ्र त्रिविधः त्रिप्रकारः तामसादिप्रकारैः संप्रकीर्तितः शास्त्रेषु सम्यक् कथितः। यस्मात् तामसादिभेदेन त्यागसंन्यासशब्दवाच्यः अर्थः अधिकृतस्य कर्मिणः अनात्मज्ञस्य त्रिविधः सम्भवति, न परमार्थदर्शिनः, इत्ययमर्थः दुर्ज्ञानः तस्मात् अत्र तत्त्वं न

आ॥तत्प्रकारं चाह—निश्चयमित्यादिना।यज्ञभेद उक्तो द्रव्ययज्ञा इत्यादिना।दाने त्वभयदानमन्तर्भवति । एतेषां मध्ये यत्किंचिद्यज्ञादिकं कर्तव्यमेवेत्यर्थः । अन्यथा 'ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा।यदीच्छेन्मोक्षमास्थातुमुत्तमाश्रममाश्रयेत्' इत्यादिव्याससमृतिविरोधः । ज्ञानयज्ञविद्याभयदानब्रह्मचर्यादितपसो हि ते । अतो यद्वचोऽन्यथा

ज॥न केवलं मनीषिण इति विशेषणसामर्थ्यादेवमुच्यते, किं तु भगवतापि तदविरोधप्रकारस्य व्युत्पाद्यमानत्वादिति भावेनोत्तरवाक्यतात्पर्यमाह—तदिति । ननु परमहंसानां यज्ञदानयोरभावात् कथमुच्यते 'न त्याज्यं कार्यमेव तत्' इति?तत्राह—यज्ञेति। ननु ज्योतिष्टोमादिकमेव यज्ञः,धनदानादिकमेव दानं गृहीत्वा पारमहंस्यमेव कुतो न निराक्रियत इत्यत आह—अन्यथेति । यतिर्हंसादिः। आस्थातुं प्राप्तुम् । उत्तमाश्रमं पारमहंस्यम् । नन्वेतेषां मध्य इत्येवं व्याख्यानेऽपि कथं परमहंसानां यज्ञादिसंभव इत्यत आह—ज्ञानेति । बहुव्रीहिद्वयगर्भः कर्मधारयोऽयम् । विद्याभयविषयं दानं येषां ते तथोक्तास्ते परमहंसाः । ननु पारमहंस्ये हि प्रवृत्तः प्रियव्रतो हिरण्यगर्भेण निवारित इति पुराणेषूच्यते, तत्कथं पारमहंस्यकर्तव्यतेत्यत आह—अत इति । उक्तवाक्यविरोधादेव वाक्यत्वाविशे-

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।**

रा॥**यज्ञदानतपःप्रभृति वैदिकं कर्म मुमुक्षुणा न कदाचिदपि त्याज्यम्. अपि त्वाप्रयाणादहरहः कार्यमेव ॥**

**कुतः?—**

**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥** ५

**यज्ञदानतपःप्रभृतीनि वर्णाश्रमसंबन्धीनि कर्माणि मनीषिणां मननशीलानां पावनानि, मननमुपासनम्, मुमुक्षूणां यावज्जीवमुपासनं कुर्वतामुपासननिष्पत्ति - विरोधिप्राचीनकर्मविनाशनानीत्यर्थः ॥ ५ ॥**

ता॥एवं त्रिविधत्यागानुवादस्य स्वरूपत्यागव्यवच्छेदार्थतोच्यते—'यज्ञदान' इत्यादिना।विविदिषाद्युत्पत्तेः प्राग्यज्ञादिकमनुष्ठेयं, पश्चात्तु परित्याज्यमित्याख्यातीति केचित्; तन्मतव्युदासायाह— **न कदाचिदपीति** । 'स खल्वेवं वर्तयन्यावदायुषम्' इति श्रुत्यभिप्रायेणाह—**अपित्वाप्रयाणादिति**। तथाच सूत्रम् 'आप्रयाणात्तत्रापि हि दृष्टम्' इति । **अहरहरिति** —चोदितकालोपलक्षणम् । ननु विद्यानिष्ठस्य किमर्थं कर्म? न तावदारादुपकारित्वेन, समुच्चयादिपक्षानभ्युपगमात्; नापि तत्त्वज्ञानार्थं,सपरिकरात्प्रमाणादेव तत्सिद्धेः, न च तदनुस्मरणरूपोपासनार्थं, तस्यापि संस्कारपाटवादिसाध्यत्वात्; नचान्यत्किञ्चित्कर्मसाध्यं मुमुक्षुवपेक्षितं प्रयोजनं पश्यामः; न च प्रयोजनमनुद्दिश्य मन्दस्यापि प्रवृत्तिरित्यभिप्रायेण—**कुत** इत्याकाङ्क्षाप्रदर्शनम्। चकारोऽनुक्तसमुच्चयार्थ इत्यभिप्रायेण—प्रभृतिशब्दः। **वर्णाश्रमसंबन्धीनीति** — नित्यनैमित्तिकानामपि स्वरूपत्याग इति यः पक्षः, स इह प्रतिक्षिप्यत इति भावः । यज्ञादीनां सन्निपत्योपकारद्योतनायोपकर्तव्यज्ञानस्वरूपपरोऽत्र मनीषिशब्द इत्यभिप्रायेणाह— **मननशीलानामिति** । मनस ईषिणो मनीषिण इति व्युत्पत्तौ फलितोक्तिरियम् । श्रवणानन्तरभावियौक्तिकमननव्यवच्छेदायाह—**मननमुपासनमिति** । 'पावनानि मनीषिणाम्' इति समभिव्याहारसिद्धमुपकारप्रकारं व्यनक्ति—**मुमुक्षूणामित्यादिना** । 'प्रायणान्तमोंकारमभिध्यायीत' इति प्रक्रम्य 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीत' इत्युपासनं यावज्जीवमनुष्ठेयमिति गम्यते। अतस्तदङ्गमपि यावज्जीवमनुष्ठेयम् । तच्च 'स खल्वेवं वर्तयन्यावदायुषम्' इत्यादिभिर्वर्ण्यत इति भावः । उपासनवदुत्तराघनिवर्तकत्वाभावात्प्राचीनशब्दः ॥ ५ ॥

---

**प्र-पा** ॥ १. छा. ८-१५-१० ॥ २. शारी. ४ १-१२ ॥ ३. प्रश्न, ५-५ ॥

---

शं॥**अन्यः वक्तुं समर्थः । तस्मात् निश्चयं परमार्थशास्त्रार्थविषयम्** अध्यवसायम् **ऐश्वरं मे मत्तः शृणु** ॥ ४ ॥

**कः पुनः असौ निश्चयः इति; आह—यज्ञः दानं तपः इत्येतत् त्रिविधं कर्म न त्याज्यं न त्यक्तव्यं, कार्यं करणीयम् एव तत् । कस्मात्? यज्ञः दानं तपश्चैव पावनानि विशुद्धिकराणि मनीषिणां फलानभिसन्धीनाम् इत्येतत् ॥ ५ ॥**

---

आ॥**प्रतीयतेऽधिकारभेदेन, तद्योज्यम्, अन्यथेतरेषां गत्यभावात्** ॥ ४ ॥

---

ज॥षात् पुराणवाक्येनैव स्मृतेर्बाधः किं न स्यादित्यत आह—**अन्यथेति**।एवमयोजने इतरेषां 'ब्रह्मचारी' इत्यादीनां गत्यन्तराभावादप्रामाण्यमेव प्रसज्यत इति शेषः । एवं परमहंसानामपि यज्ञादिकर्तव्यतासंपादनेनेदमपि परास्तम्; यत्केनचिदुक्तम्—'अज्ञान्कर्मण्यधिकारिणोऽधिकृत्य एतत्प्रकरणं प्रवृत्तं न परमहंसपरिव्राजकान्' इति ॥ ४ ॥

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६

रा॥यस्मान्मनीषिणां यज्ञदानतपःप्रभृतीनि पावनानि, तस्मादुपासनवदेतान्यपि यज्ञादिकर्माणि मदाराधनरूपाणि सङ्गं—कर्मणि ममतां फलानि च त्यक्त्वा अहरहराप्रयाणादुपासननिर्वृत्तये मुमुक्षुणा कर्तव्यानीति मम निश्चितमुत्तमं मतम् ॥ ६ ॥

नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७

नियतस्य —नित्यनैमित्तिकस्य महायज्ञादेः कर्मणस्सन्न्यासः—त्यागो नोपपद्यते.

---

ता॥एवं पावनत्वोक्त्या 'त्याज्यं दोषवत्' इति पक्षः प्रतिक्षिप्तः। 'निश्चयं शृणु' इत्यादिनोक्त एवार्थः 'एतान्यपि' इति श्लोकेन निर्दोषत्वाध्यवसायार्थं निगमनात्मना दृढीक्रियत इत्यपुनरुक्तिः। हेतुसाध्यभावेन पूर्वोत्तरग्रन्थौ संगमयति—यस्मादिति । मनीषिशब्दसूचितोपासनसमानयोगक्षेमताद्योतनाय अपिशब्द इत्याह—उपासनवदेतान्यपीति । परमात्मप्रीतिद्वारा कर्मणां पावनत्वादिसिद्ध्यर्थमाह—मदाराधनरूपाणीति । सङ्गशब्दस्य फलत्यागोक्त्या पुनरुक्तिं परिहरति—कर्मणि ममतामिति । निश्चितमिति—नात्र पुनस्त्वया संशयितव्यमिति भावः । उत्तममिति—असर्वज्ञानामन्येषामेतद्विरुद्धं स्वरूपत्यागादिमतं सर्वमधमत्वादनादरणीयमिति भावः ॥ ६ ॥

अथ 'नियतस्य' इत्यादिना मतान्तराणामधमत्वं स्वमतस्योत्तमत्वं च प्रपञ्च्यते । वर्णाश्रमप्रयुक्ततया दुस्त्यजत्वं नियतशब्देनाभिप्रेतमित्याह—नित्यनैमित्तिकस्येति । तुशब्दसहितसंन्यासशब्दोऽत्र 'त्याज्यं दोषवत्' इत्यत्र स्वरूपत्यागानुवादी, स एव हि 'मोहात्तस्य परित्यागः' इत्युत्तरार्धेन निन्द्यत इत्यभिप्रायेण—संन्यासस्त्याग इत्युक्तः । पावनत्वेनावश्यकर्तव्यत्वे शिष्टे पुनस्त्यागो

---

शां॥एतान्यपि तु कर्माणि यज्ञदानतपांसि पावनानि उक्तानि सङ्गम् आसक्तिं तेषु त्यक्त्वा फलानि च तेषां परित्यज्य कर्तव्यानि इति अनुष्ठेयानिइति मे मम निश्चितं मतम् उत्तमम्॥

'निश्चयं शृणु मे तत्र' इति प्रतिज्ञाय, पावनत्वं च हेतुम् उक्त्वा, 'एतान्यपि कर्माणि कर्तव्यानि' इत्येतत् 'निश्चितं मतमुत्तमम्' इति प्रतिज्ञातार्थोपसंहार एव, न अपूर्वार्थं वचनम् 'एतान्यपि' इति प्रकृतसन्निकृष्टार्थत्वोपपत्तेः। सासङ्गस्य फलार्थिनः बन्धहेतूनि एतान्यपि मुमुक्षोः कर्तव्यानि इति अपिशब्दस्य अर्थः । न तु अन्यानि कर्माणि अपेक्ष्य 'एतान्यपि' इति उच्यते ॥

अन्ये तु वर्णयन्ति—नित्यानां कर्मणां फलाभावात् 'सङ्गं त्यक्त्वा फलानि च'इति न उपपद्यते । अतः 'एतान्यपि' इति यानि काम्यानि कर्माणि नित्येभ्यः अन्यानि, एतानि अपि कर्तव्यानि, किमुत यज्ञदानतपांसि इति॥

तत् असत्, नित्यानामपि कर्मणाम् इह फलवत्त्वस्य उपपादितत्वात् 'यज्ञो दानं तपश्चैव पावनानि' इत्यादिना वचनेन । नित्यान्यपि कर्माणि बन्धहेतुत्वाशङ्कया जिहासोः मुमुक्षोः कुतः काम्येषु प्रसङ्गः ? । 'दूरेण ह्यवरं कर्म' इति च निन्दितत्वात्, 'यज्ञार्थात् कर्मणोऽन्यत्र' इति च काम्यकर्मणां बन्धहेतुत्वस्य निश्चितत्वात्, 'त्रैगुण्यविषया वेदाः' 'त्रैविद्या मां सोमपाः' 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति च दूरव्यवहितत्वाच्च, न काम्येषु 'एतान्यपि' इति व्यपदेशः ॥ ६ ॥

रा॥*'शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः'इति शरीरयात्राया एवासिद्धेः,शरीरयात्रा हि यज्ञशिष्टाशनेन निर्वर्त्यमाना सम्यग्ज्ञानाय प्रभवति,अन्यथा†'ते त्वघं भुञ्जते पापाः' इत्ययज्ञशिष्टाघरूपाशनाप्यायनं मनसो विपरीतज्ञानाय भवति।‡'अन्नमयं हि सोम्य मनः' इत्यन्नेन हि मन आप्यायते;§'आहारशुद्धौ सत्त्वशुद्धिस्सत्त्वशुद्धौ ध्रुवा स्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः'इति ब्रह्मसाक्षात्काररूपं ज्ञानमाहारशुद्ध्यायत्तं श्रूयते। तस्मान्महायज्ञादिनित्यनैमित्तिकं कर्म आप्रयाणात् ब्रह्मज्ञानायैवोपादेयमिति तस्य त्यागो नोपपद्यते, एवं ज्ञानोत्पादिनः कर्मणो बन्धकत्वमोहात्परित्यागस्तामसः परिकीर्तितः; तमोमूलस्त्यागस्तामसः, तमःकार्याज्ञानमूलत्वेन त्यागस्य तमोमूलत्वम्; तमो ह्यज्ञानस्य मूलं—'प्रमादमोहौ तमसो भवतोऽज्ञानमेव च' इत्यत्रोक्तम्. अज्ञानं तु ज्ञानविरोधि विपरीतज्ञानम्;तथा च वक्ष्यते—¶'अधर्मं धर्ममिति या मन्यते तमसावृता।सर्वार्थान्वि-

ता॥नोपपद्यत इति शासनं प्राक्प्रपञ्चितदृष्टादृष्टानुपपत्तिस्मारणपरमित्यभिप्रायेणानुपपत्तिं विवृणोति—शरीरयात्रापीति । केवलाशनादिनापि लौकिकदेहयात्रा सिध्येदित्यत्राह—शरीरयात्राहीति । 'पञ्चभूतात्मकैर्भोगैः पञ्चभूतात्मकं वपुः।आप्यायते' इति स्मरणात्कथमाहारेण मनस आप्यायनमित्यत्राह—अन्नमयंहीति। सात्त्विकाहंकारकार्यस्यान्नविकारत्वासंभवादाप्यायनोक्तिः। 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इत्येतत् 'भिद्यते हृदयग्रन्थिः' इत्यादिकया समानार्थया श्रुत्या दर्शनशब्देन विशेष्यत इत्यभिप्रायेण—ब्रह्मसाक्षात्काररूपमित्युक्तम् । विशदतमत्वात्साक्षात्कारोक्तिरिह भाव्या । सकृदनुष्ठितस्य विद्योपकारित्वशङ्कां परिहरन्निगमयति—तस्मादिति । 'नोपपद्यते' इत्यस्य कारणाभावे कथं कार्यं स्यादिति भावः। उक्तप्रकारेणापरित्याज्यत्वनियमवत्त्वं तस्येत्यनूद्यत इत्यभिप्रायेणाह—एवं ज्ञानोत्पादिनइति । 'त्याज्यं दोषवत्' इत्यनूदितस्य मतस्यैतद्दूषणमित्यभिप्रायेणाह—बन्धकत्वमोहादिति । 'तत्र भवः' इत्यण्प्रत्ययेन तामसशब्दं निर्वक्ति—तमोमूलइति। सम्बन्धमात्रेऽपि तद्धितार्थे फलितविशेषोऽयम् । तामसबुद्धिमूलत्वेन सद्वारकं तमोमूलत्वं विवृणोति—तमःकार्येति । नन्वत्र समभिव्याहृतमोहमूलत्वेनैव तमोमूलत्वे दर्शयितव्ये तमःकार्याज्ञानमूलत्वोक्तिः किमर्था? तदर्थैव; नह्युक्तस्यैव पुनश्शब्दान्तरव्यञ्जने प्रयोजनम्, अधिकबोधनं तु युक्तम् अविरुद्धं चेति। ननु 'प्रमादमोहौ तमसो भवतोऽज्ञानमेव च' इति श्लोके मोहशब्देन विपरीतज्ञानस्य पृथगुक्तत्वादज्ञानशब्देन ज्ञानाभाव उच्यत इति व्याख्यातम्;इह पुनः'अज्ञानं तु ज्ञानविरोधि विपरीतज्ञानम्'इति कथमुच्यते? इत्थं—ज्ञानाभावस्यापि वृत्तिहेतुत्वं विपरीतज्ञानद्वारेति प्रदर्शनार्थं श्लोकस्थमोहशब्दस्य प्रयोजनान्तरविवक्षया वा श्लोकस्थस्याज्ञानशब्दस्य मोहविषयत्वज्ञापनार्थं वेति । तामसबुद्धेः कर्मत्यागहेतुतां वक्ष्यमाणेन व्यनक्ति—तथाचेति । तत्त्वविदो न परित्यजन्तीत्यभिप्रायेण तामसनिर्देशफलितं निगम-

प्र-पा ॥ * गी. ३ ८ ॥ † गी. ३-१३ ॥ जलमयः, तेजोमयी वागित्यर्थः ॥

‡ छा. ६ ५-४. 'अन्नमयं हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वाक्'इति-मनःप्राणवाचामन्नजलतेजस्सूक्ष्मांशाप्यायितत्वात् मनोऽन्नमयं,प्राणो-

§ छा. ७-२६-२ ॥ ¶ गी. १८-३२ ॥

१ ॥ २. छा. ७-२६-२ ॥

३. मु.२-२-८॥ ४. अष्टाध्याय्यां. ४३-५३ ॥

शं॥तस्मात् अज्ञस्य अधिकृतस्य मुमुक्षोः—नियतस्य तु नित्यस्य संन्यासः परित्यागः कर्मणः न उपपद्यते, अज्ञस्य पावनत्वस्य इष्टत्वात्। मोहात् अज्ञानात् तस्य नियतस्य

रा॥परीतांश्च बुद्धिस्सा पार्थ तामसी' इति: अतो नित्यनैमित्तिकादेः कर्मणस्त्यागो विपरीतज्ञानमूल एवेत्यर्थः ॥ ७ ॥

**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥** ८

यद्यपि परंपरया मोक्षसाधनभूतं कर्म; तथापि दुःखात्मकद्रव्यार्जनसाध्यत्वात् बह्वायासरूपतया कायक्लेशकरत्वाच्च मनसोऽवसादकरमिति तद्भीत्या योगनिष्पत्तये ज्ञानाभ्यास एव यतनीय इति यो महायज्ञाद्याश्रमकर्म परित्यजेत्,स राजसं—रजोमूलं त्यागं कृत्वा तदयथावस्थितशास्त्रार्थरूपमिति ज्ञानोत्पत्तिरूपं त्यागफलं न लभेत: *'अयथावत्प्रजानाति बुद्धिस्सा पार्थ राजसी'इति हि वक्ष्यते: नहि कर्म दृष्टद्वारेण मनःप्रसाद हेतुः, अपितु भगवत्प्रसादद्वारेण ॥ ८ ॥

**कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।**
**सङ्गं त्यक्त्वा फलं चैव स त्यागस्सात्त्विको मतः ॥** ९

ता॥यति—अन इति।'नित्यनैमित्तिकादेः'इत्यादिशब्देन फलाभिसंधिरहितकाम्यानामपि वक्ष्यमाणानां ग्रहणम्।**विपरीतज्ञाने**त्यनेनायथाज्ञानमूलाद्राजसत्यागाद्विशेषप्रदर्शनम्।'अयथावत्'इति हि राजसबुद्धिर्वक्ष्यते ॥ ७ ॥

तदेवमन्तरङ्गतया स्वरूपशब्दव्यपदेश्यस्वरूपनिरूपकधर्मप्राणप्रदधर्मवैपरीत्याभावेऽपि निरूपितस्वरूपविशेषकधर्मवैपरीत्येन राजसीं बुद्धिं वक्ष्यमाणामनुस्मरन् राजसत्यागं विवृणोति—**यद्यपीत्या**दिना । 'दुःखमित्येव' इत्यवधारणात् 'कायक्लेशभयात्' इति चोक्तेरधर्मत्वमोहोऽत्र नास्तीति फलितम् । 'अर्थानामार्जने दुःखम्' इत्याद्यनुसारेणाह—**दुःखात्मके**ति । **मनसोऽवसादकर**मिति—अनवसादो हि विवेकादिसाधनसप्तके गणित इति भावः । अन्तरङ्गबहिरङ्गविरोधे बहिरङ्गत्यागो युक्त इत्यभिप्रायेणाह—**ज्ञानाभ्यासएवे**ति । 'यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तम । आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्' इत्यनुवादवाक्यान्यस्य मूलम् । 'स कृत्वा राजसं त्यागम्' इत्यनुवादविवक्षितमाह—**अयथावस्थिते**ति । वक्ष्यमाणसात्त्विकत्यागफलमिह त्यागफलशब्देन विवक्षितम्, मुमुक्षुप्रकरणत्वात्कर्मत्यागे तत्साध्यस्वर्गादिफलस्य प्रसङ्गाभावाच्चेत्यभिप्रायेणाह—**ज्ञानोत्पत्तिरूपमि**ति । दुःखात्मकत्वादिप्रयुक्तमनोवसादशङ्कां परिहरति—**नही**ति । 'फलसंविभक्तयाहि' इत्याद्युक्तक्रमेण कर्मभिः प्रसादितो भगवान्मनसोऽनवसादमेव करोतीत्यर्थः ॥ ८ ॥

प्र-पा ॥ * गी. १८-३१ ॥ घ्नन्ति चैवार्थकारणात्'॥—अर्थस्योपार्जने दुःखमिति

१. भारते · आरण्य २-४४. 'अर्थानामार्जने च पाठः ॥ २ ॥

दुःखमार्जितानाञ्च रक्षणे । नाशे दुःखं व्यये दुःखं ३. द्रमिडभाष्यश्रीसूक्तिः ॥

शं॥**परित्यागः**—नियतं च अवश्यं कर्तव्यं. त्यज्यते च,इति विप्रतिषिद्धम् ;अतः मोहनिमित्तः परित्यागः—तामसः परिकीर्तितः. मोहश्च तामसः इति ॥ ७ ॥

किञ्च—दुःखम् इति एव यत् कर्म कायक्लेशभयात् शरीरदुःखभयात् त्यजेत् , सः कृत्वा राजसं रजोनिर्वर्त्यं त्यागं नैव त्यागफलं ज्ञानपूर्वकस्य सर्वकर्मत्यागस्य फलं मोक्षाख्यं न लभेत नैव लभेत ॥ ८ ॥

रा॥नित्यनैमित्तिकमहायज्ञादिवर्णाश्रमविहितं कर्म मदाराधनरूपतया कार्यं—स्वयंप्रयोजनमिति मत्वा सङ्गं—कर्मणि ममतां फलं च त्यक्त्वा यत्क्रियते,स त्यागस्सात्त्विको मतः—स सत्त्वमूलः, यथावस्थितशास्त्रार्थज्ञानमूल इत्यर्थः; सत्त्वं हि यथावस्थितवस्तुज्ञानमुत्पादयतीत्युक्तं *'सत्त्वात्सञ्जायते ज्ञानम्' इति, वक्ष्यते च †'प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये । बन्धं मोक्षं च या वेत्ति बुद्धिस्सा पार्थ सात्त्विकी' इति ॥ ९ ॥

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्यते ।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १०**

एवं सत्त्वसमाविष्टो—मेधावी यथावस्थिततत्त्वज्ञानस्तत एव छिन्नसंशयः कर्मणि

---

ता॥अथ 'त्यागो हि' इत्यादिना स्मारितमेवोद्धृत्य सत्त्वकार्ययथावस्थितज्ञानमूलतया तस्यैव शास्त्रीयत्वं द्रढयति—'कार्यमित्येव' इति श्लोकेन। 'नियतस्य तु संन्यासः कर्मणो नोपपद्यते' इति प्रक्रमादिहापि नियतशब्दः कर्मविशेषणमिति तदर्थमाह—**नित्येति**। आहत्य कार्यत्वं हि प्रयोजनस्यैव। तदर्थतयैव हि साधनस्य कार्यता ; तस्मादफलस्य कथं कर्तव्यत्वमित्यत्राह—**मदाराधनरूपतया कार्यमिति**। तदभिप्रेतमाह—**स्वयंप्रयोजनमिति**। कर्तृत्वत्यागोऽप्यत्रानुसंधेयः। अत एव ह्यनन्तर श्लोके 'त्यागी' इति शब्दस्सङ्गफलकर्तृत्वत्यागीति व्याख्यायते ॥ ९ ॥

सत्त्वादिमूलशास्त्रीयत्यागयुक्तस्य 'वर्तते सात्त्विको भाव इत्युपेक्षेत तत्तदा' 'उदासीनवदासीनः' इत्यादिप्रसिद्धं विकाराभावरूपं लक्षणमुच्यते— न द्वेष्टि 'इति श्लोकेन। तेनोक्तलक्षणत्यागस्य सत्त्वमूलत्वमप्युपपादितं भवति। तत्र हेतुकार्यक्रमौचित्येन भिन्नक्रमतया व्याख्याति - **सत्त्वसमाविष्टइत्यादिना**। 'धीर्धारणावती मेधा' इति नैघण्टुकाः। श्रुतिश्च 'मेधा मनीषेमा विशतां समीची भूतस्य भव्यस्यावरुध्यै' इति। अत आचार्योपदिष्टेष्वर्थेषु अप्रच्युतेरन्यासङ्कराच्च फलितमाह—**यथावस्थिततत्त्वज्ञानइति**। अत्र शुभाशुभपर्यायकुशलाकुशलशब्दाभ्यां प्रतिषिध्यमानद्वेषसङ्गहेत्वनुवाद

---

प्र.पा ॥ * गी. १४-१७ ॥
† गी. १८-३० ॥
१. गी. १८-७ ॥ २ ॥
३. गी. १४ २३ ॥
४ नामलिङ्गानुशासने १ काण्डे. धीवर्गे ॥
५. आरण्यके ५. प्रश्ने. ४२. अनु ॥

---

शं॥कः पुनः सात्त्विकः त्यागः इति ? आह—कार्यं कर्तव्यम् इत्येव यत् कर्म नियतं नित्यं क्रियते निर्वर्त्यते हे अर्जुन ! सङ्गं त्यक्त्वा फलं च एव । एतत्—नित्यानां कर्मणां फलवत्त्वे भगवद्वचनं प्रमाणम् अवोचाम । अथवा—यद्यपि फलं न श्रूयते नित्यस्य कर्मणः, तथाऽपि नित्यं कर्म कृतम् आत्मसंस्कारं प्रत्यवायपरिहारं वा फलं करोति आत्मनः इति कल्पयत्येव अज्ञः । तत्र तामपि कल्पनां निवारयति 'फलं त्यक्त्वा' इत्यनेन। अतः साधु उक्तं 'सङ्गं त्यक्त्वा फलं च' इति । सः त्यागः नित्यकर्मसु सङ्गफलपरित्यागः सात्त्विकः सत्त्वनिर्वृत्तः मतः अभिप्रेतः । ननु कर्मपरित्यागः त्रिविधः संन्यास इति च प्रकृतम् । तत्र तामसो राजसश्च उक्तः त्यागः । कथम् इह सङ्गफलत्यागः तृतीयत्वेन उच्यते ? यथा त्रयो ब्राह्मणाः आगताः, तत्र षडङ्गविदौ द्वौ, क्षत्रियः तृतीयः इति; तद्वत् । नैष दोषः, त्यागसामान्येन स्तुत्यर्थत्वात् । अस्ति हि कर्मसंन्यासस्य फलाभिसन्धित्यागस्य च त्यागत्वसामान्यम् । तत्र राजसतामसत्वेन कर्मत्यागनिन्दया कर्मफलाभिसन्धित्यागः सात्त्विकत्वेन स्तूयते 'स त्यागः सात्त्विको मतः' इति ॥ ९ ॥

रा॥कम्; कर्म—यागादिकं; कर्ता—अनुष्ठातेति ॥ १८ ॥

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि ॥ १९

कर्तव्यकर्मविषयं ज्ञानमनुष्ठीयमानं च कर्म तस्यानुष्ठाता च सत्त्वादिगुणभेदतस्त्रिधैव प्रोच्यते; गुणसंख्याने—गुणकार्यगणने यथावच्छृणु तान्यपि—तानि गुणतो भिन्नानि ज्ञानादीनि यथावच्छृणु ॥ १९ ॥

ता॥मपाकरोति—कर्म यागादिकमिति।क्रियास्वरूपं हि गुणतस्त्रिविधं विभजिष्यत इति भावः।नियोज्यावस्थतया 'परिज्ञाता' इति निर्दिष्ट एवानुष्ठात्रवस्थतया पुनः कर्मशेषतया तत्प्रकारत्वेन 'कर्ता' इति व्यपदिश्यत इत्याह—कर्ता अनुष्ठातेति ॥ १८ ॥

'ज्ञानं ज्ञेयं परिज्ञाता' इत्युक्ता एव पदार्थाः 'ज्ञानं कर्म च कर्ता च' इत्यनूद्यन्ते । ज्ञातृत्वकर्तृत्वयोरवस्थाभेदमात्रत्वात् ज्ञानोक्त्यैव ज्ञातुरपि सिद्धेरिहानुक्तिः;ज्ञेयशब्दस्य च कर्मविषयत्वात् । करणं तु कर्मानुप्रविष्टत्वान्न पृथग्विभजिष्यते । गुणसंख्यानशब्देन सांख्यराद्धान्तविवक्षायां प्रमाणाभावात्प्रकृते चानुपयोगात् गुणस्वरूपगणने च ज्ञानादेरनुप्रवेशाभावात्—गुणकार्यगणनइत्युक्तम् । यथावच्छृणु—यथावच्छ्रवणयोग्यमवधानं कुर्वित्यर्थः । 'यथावत्' इति विवक्षितं प्रकारमाह—गुणतो भिन्नानीति ॥ १९ ॥

शं॥संगृह्यते अस्मिन्निति संग्रहः,कर्मणः संग्रहः कर्मसंग्रहः—कर्म एषु हि त्रिषु समवैति, तेन अयं त्रिविधः कर्मसंग्रहः ॥ १८ ॥

अथ इदानीं क्रियाकारकफलानां सर्वेषां गुणात्मकत्वात् सत्त्वरजस्तमोगुणभेदतः त्रिविधः भेदः वक्तव्यः इति आरभ्यते—ज्ञानं कर्म च कर्म क्रिया, न कारकं पारिभाषिकम् ईप्सिततमं कर्म कर्ता च निर्वर्तकः क्रियाणां त्रिधा एव अवधारणं गुणव्यतिरिक्तजात्यन्तराभावप्रदर्शनार्थं गुणभेदतः सत्त्वादिभेदेन इत्यर्थः । प्रोच्यते । कथ्यते गुणसंख्याने कापिले शास्त्रे तदपि कापिलमपि गुणसंख्यानशास्त्रं गुणभोक्तृविषये प्रमाणमेव । परमार्थब्रह्मैकत्वविषये यद्यपि विरुध्यते, तथाऽपि ते हि कापिलाः गुणगौणव्यापारनिरूपणे अभियुक्ताः इति तच्छास्त्रमपि वक्ष्यमाणार्थस्तुत्यर्थत्वेन उपादीयते इति न विरोधः । यथावत् यथान्यायं यथाशास्त्रं शृणु तान्यपि ज्ञानादीनि तद्भेदजातानि च गुणभेदकृतानि शृणु, वक्ष्यमाणे अर्थे समाधिं कुरु इत्यर्थः ॥ १९ ॥

आ॥सर्वं चैतदनुभवोक्तप्रमाणसिद्धमिति न पृथक् प्रमाणमुच्यते ॥ १८ ॥

पुनः साधनप्रथनाय गुणभेदानाह—ज्ञानमित्यादिना । गुणसंख्याने गुणगणनप्रकरणे ॥ १९ ॥

ज॥णात्प्रतिपत्तव्यमित्यत आह-सर्वंचेति। अनुभवेनोक्तप्रमाणैश्च। विधिज्ञाने सतीच्छोत्पत्तिरित्यादिकम् अनुभवसिद्धम्; ईश्वरप्रसादादित्यादिकं तु 'यथा नियुक्तोऽस्मि'इत्याद्युदाहृतागमसिद्धम्। पृथक् पुनः॥

'ज्ञानं कर्म'इत्यादेः प्रकृतोपयोगाप्रतीतेस्तं दर्शयन्नाह—पुनरिति। मोक्षसाधनं प्रागपि गुणभेदानामुक्तत्वात्—पुनरित्युक्तम्।गुणसंख्यानशब्देन कापिलं शास्त्रमुच्यत इति भावेनाह—गुणेति । तत्र वैदिकमभिप्रेतम् ॥ १९ ॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २०

रा॥ब्राह्मणक्षत्रियब्रह्मचारिगृहस्थादिरूपेण विभक्तेषु सर्वेषु भूतेषु कर्माधिकारिषु येन ज्ञानेनैकम् आत्माख्यं भावं तत्राप्यविभक्तं—ब्राह्मणत्वाद्यनेकाकारेष्वपि भूतेषु सितदीर्घादिविभागवत्सु ज्ञानाकार आत्मनि विभागरहितम् अव्ययं-व्ययस्वभावेष्वपि ब्राह्मणादिशरीरेष्वव्ययम् अविकृतं फलादिसङ्गानर्हं च कर्माधिकारवेलायामीक्षते.तज्ज्ञानं सात्त्विकं विद्धि ॥ २० ॥

पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१

सर्वेषु भूतेषु-ब्राह्मणादिषु ब्राह्मणाद्याकारपृथक्त्वेनात्माख्यानपि भावान्नानाभूतान्

ता॥सात्त्विकज्ञानादिकथनं कर्तृत्वे गुणपारतन्त्र्यज्ञापनार्थम् । सर्वभूतशब्दाभिप्रेतमनात्मविद्भिरनुसंहितं बाह्यवैचित्र्यमाह—ब्राह्मणेत्यादिना। ज्ञानशब्दस्यात्र प्रकृतकर्मचोदनानुबन्धिकर्मानुष्ठानदशाभाविज्ञापनपरत्वात्—कर्माधिकारिष्विति भूतानि विशेषितानि । भावशब्दोऽत्र पदार्थपर्यायः। एकमिति—जात्यैक्यविवक्षयोच्यते ; आत्मबहुत्वस्य प्रागेव समर्थितत्वात्, अद्वैतदर्शनं सात्त्विकज्ञानमिति परोक्तस्य निर्मूलत्वात्, 'नानाभावान्' इति च अनन्तरं बहुत्वोक्तेः, साम्यानुसन्धानप्रपञ्चनस्यात्र प्रत्यभिज्ञानात्,कर्तेति प्रकृतप्रत्यगात्मविषयत्वौचित्येन परमात्मपरत्वायोगाच्चेत्यभिप्रायेणाह—आत्माख्यमिति।सितदीर्घेत्यादिना—'गवामनेकवर्णानां क्षीरस्य त्वेकवर्णता'इत्यादिश्रुतिसूचनम्। अत्र सर्वभूतशब्देन ब्राह्मणत्वादिजातिग्रहणाद्गुणाद्यवान्तरविभागपरोऽविभक्तशब्द इति च भावः । केनाकारेणैकत्वमित्यत्राह—ज्ञानाकारइति । प्रतिषिध्यमानस्य व्ययस्य प्रसञ्जकमाह—व्ययस्वभावेष्वपीति । प्रागुक्तं फलादिसङ्गरूपविकृतिराहित्यमप्यविकृतत्वपरेणाव्ययशब्देन संगृहीतमित्याह —फलादिसङ्गानर्हंचेति । सङ्गोऽत्र संबन्धः ; अनुभव इत्यर्थः । इच्छापरत्वेऽपि भोगोऽर्थसिद्धः । कर्मचोदनानुबन्धिज्ञानफलत्वात्— कर्माधिकारवेलायामित्युक्तम् । मयेदं कर्तव्यमित्यनुसंधानदशायामित्यर्थः । येन ज्ञानेनेक्षते—विषयीकरोतीत्यर्थः ॥ २० ॥

पृथक्त्वेनच पृथग्विधान्—पृथक्त्वेन विशेषितानित्यर्थः।पृथक्त्वादिशब्दानां पुनरुक्तिपरिहारायाह—ब्राह्मणाद्याकारपृथक्त्वेनेति ।'सर्वेषु भूतेषु' इति विशिष्टानुवादः . तत्र 'भावान्' इति विशेष्यनिष्कर्ष इत्यभिप्रायेणाह—आत्माख्यानपि भावानिति । जातिभेदविशेष्यभेदगुणादि-

प्र-पा ॥ १. अमृतबिन्दूपनिषत्॥

शं॥ज्ञानस्य तु तावत् त्रिविधत्वम् उच्यते—सर्वभूतेषु अव्यक्तादिस्थावरान्तेषु भूतेषु येन ज्ञानेन एकं भावं वस्तु, भावशब्दः वस्तुवाची, एकम् आत्मवस्तु इत्यर्थः, अव्ययं न व्येति स्वात्मना स्वधर्मेण वा, कूटस्थम् इत्यर्थः,ईक्षते पश्यति येन ज्ञानेन,तं च भावम् अविभक्तं प्रतिदेहं, विभक्तेषु देहभेदेषु न विभक्तं तत् आत्मवस्तु, व्योमवत् निरन्तरमित्यर्थः, तत् ज्ञानं साक्षात् सम्यग्दर्शनम् अद्वैतात्मविषयं सात्त्विकं विद्धि इति॥ २०॥

आ॥एकं भावं विष्णुम् ॥ २० ॥

ज॥एकंभावमिति सामान्येनोक्तं, कोऽसावेको भाव इत्याकाङ्क्षायामाह—एकमिति ॥ २० ॥

रा॥सितदीर्घादिपृथक्त्वेन च पृथग्विधान् फलादिसंयोगयोग्यान् कर्माधिकारवेलायां यत् ज्ञानं वेत्ति, तत् ज्ञानं राजसं विद्धि ॥ २१ ॥

यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहेतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२

यत्तु-ज्ञानमेकस्मिन् कार्ये-एकस्मिन् कर्तव्ये कर्मणि प्रेतभूतगणाद्याराधनरूपे अत्यल्पफले कृत्स्नफलवत् सक्तम् अहेतुकं-वस्तुतस्त्वकृत्स्नफलवत्तया तथाविधसङ्गहेतुरहितम्, अतत्त्वार्थवत्—पूर्ववदेवात्मनि पृथक्त्वादियुक्ततया मिथ्याभूतार्थविषयम्, अत्यल्पफलं च प्रेतभूताद्याराधनविषयत्वादल्पं च, तत् ज्ञानं तामसमुदाहृतम् ॥ २२ ॥

ता॥भेदपरतया पृथक्त्वनानात्वपृथग्विधशब्दानामपुनरुक्तिः । उक्तव्यतिरेकपरतया फलादिसंयोगयोग्यत्वोक्तिः । ज्ञानं वेत्तीति कर्तृत्वोपचारः ॥ २१ ॥

कार्यशब्दोऽत्र नोत्पत्तिमात्रपरः, स्वकर्तव्यविषयत्वात्; एकशब्दश्च सङ्गानर्हत्वाय फलद्वारा परिमितपरः; तत्रापि हेतुः प्रागुक्तपरिमितशक्तीनामाराधनत्वमित्यभिप्रायेणाह—एकस्मिन् कर्तव्ये कर्मणि प्रेतभूतगणाद्याराधनरूपेऽत्यल्पफलइति । कर्मस्वरूपकार्यमात्रस्यापि सङ्गयोग्यत्वाभावः; तत्रापि फलविवक्षायामाह—कृत्स्नफलवदिति । कृत्स्नफलहेतुभूतकर्मणीवेत्यर्थः । कार्यभूतस्य ज्ञानस्य सङ्गस्य वा कारणमात्रनिषेधायोगात्प्रेक्षावत्सङ्गहेतुरिह प्रतिषिध्यत इत्याह—वस्तुतइति । 'अहैतुकम्' इति पाठेऽपि हैतुकादन्यत्वविवक्षयाऽयमेवार्थो ग्राह्यः । पूर्ववदेवेति—राजसवदित्यर्थः।'एकस्मिन्कार्ये सक्तमहेतुकम्'इत्यनेनैवाल्पफलत्वसिद्धेः खद्योतप्रकाशवत्स्वरूपत एवाल्पत्वं स्वारसिकमल्पशब्देन विवक्षितमित्यपुनरुक्तिरित्यभिप्रायेण—अत्यल्पफलंच प्रेतभूताद्याराधनविषयत्वादल्पं चेत्युक्तम्।'सत्त्वात्संजायते ज्ञानम्' इति पूर्वोक्तं तु राजसतामसज्ञानयोरज्ञानत्वविवक्षया । उक्तं हि 'एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा' इति ॥ २२ ॥

प्र-पा ॥ १. गी. १४-१७ ॥ | २ ॥

शं॥यानि द्वैतदर्शनानि तानि असम्यग्भूतानि राजसानि तामसानि च इति न साक्षात् संसारोच्छित्तये भवन्ति—पृथक्त्वेन तु भेदेन प्रतिशरीरम् अन्यत्वेन यत् ज्ञानं नानाभावान् भिन्नान् आत्मनः पृथग्विधान् पृथक्प्रकारान् भिन्नलक्षणान् इत्यर्थः, वेत्ति विजानाति यत् ज्ञानं सर्वेषु भूतेषु ज्ञानस्य कर्तृत्वासम्भवात् येन ज्ञानेन वेत्ति इत्यर्थः, तत् ज्ञानं विद्धि राजसं रजोगुणनिर्वृत्तम् ॥ २१ ॥

यत्तु ज्ञानं कृत्स्नवत् समस्तवत् सर्वविषयमिव एकस्मिन् कार्ये देहे बहिर्वा प्रतिमादौ सक्तम् 'एतावानेव आत्मा ईश्वरो वा,न अतः परम् अस्ति' इति,यथा नग्नश्रमणकादीनां शरीरान्तर्वर्ती देहपरिमाणो जीवः, ईश्वरो वा पाषाणदार्वादिमात्रम्,इत्येवम् एकस्मिन् कार्ये सक्तम् अहेतुकं हेतुवर्जितं निर्युक्तिकम्, अतत्त्वार्थवत् अयथाभूतार्थवत् यथाभूतः अर्थः तत्त्वार्थः, सः अस्य ज्ञेयभूतः अस्तीति तत्त्वार्थवत् न तत्त्वार्थवत् अतत्त्वार्थवत् अहेतुकत्वादेव अल्पं च, अल्पविषयत्वात् अल्पफलत्वाद्वा तत् तामसम् उदाहृतम् तामसानां हि प्राणिनाम् अविवेकिनाम् ईदृशं ज्ञानं दृश्यते ॥ २२ ॥

रा॥एवं कर्तव्यकर्मविषयज्ञानस्याधिकारवेलायामधिकार्यंशेन गुणतस्त्रैविध्यमुक्त्वा अनुष्ठेयस्य कर्मणो गुणतस्त्रैविध्यमाह —

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३

नियतं—स्ववर्णाश्रमोचितं, सङ्गरहितं—कर्तृत्वादिसङ्गरहितम्, अरागद्वेषतः कृतं—कीर्तिरागादकीर्तिद्वेषाच्च न कृतम्, अदम्भेन कृतमित्यर्थः; अफलप्रेप्सुना—अफलाभिसन्धिना कार्यमित्येव कृतं यत्कर्म, तत्सात्त्विकमुच्यते ॥ २३ ॥

यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४

यत्तु पुनः कामेप्सुना—फलप्रेप्सुना साहंकारेणवा—वाशब्दश्चार्थे, कर्तृत्वाभिमानयुक्तेन च, बहुलायासं यत्कर्म क्रियते, तद्राजसम्—बहुलायासमिदं कर्म मयैव क्रियत इत्येवंरूपाभिमानयुक्तेन यत्कर्म क्रियते, तद्राजसमित्यर्थः ॥ २४ ॥

---

ता॥अधिकार्यंशेनेति — अविभक्तत्वविभक्तत्वादिविशेषितकर्माधिकारिस्वरूपानुसंधानेनेत्यर्थः । विशिष्टे कर्मणि विशेषणतयाऽधिकारिणोंऽशत्वोक्तिः । यद्यपि सङ्गशब्दो विभज्य फलसङ्गकर्तृत्वत्यागप्रतिपादने विशेषविषयः, तथापि सङ्गरहितम्' इत्यत्र संकोचकाभावादपेक्षितत्वाच्च कण्ठोक्तफलप्रेप्सातिरिक्तसामान्यविषय इत्याह—कर्तृत्वादिसङ्गरहितमिति । आदिशब्देन ममता गृह्यते । 'मुक्तसङ्गोऽनहंवादी' इत्यादिकथितः कर्तृधर्म इह तद्द्वारा कर्मविशेषणत्वेन योजितः । ब्रह्मणि रागात्संसारद्वेषाच्च क्रियमाणस्य कर्मणः कथमरागद्वेषतः कृतत्वमित्यत्राह—कीर्तिरागादकीर्तिद्वेषाच्चेति । सङ्गशब्दपुनरुक्तिश्चानेन परिहृता । अकारस्यासमस्तत्वविवक्षया वा फलितत्वोक्तिविवक्षया वा—न कृतमित्युक्तम्। 'तपो दम्भेन चैव यत्' इत्याद्युक्तप्रतिषेधार्थमिदमित्यभिप्रायेणाह—अदम्भेनेति । कार्यमित्येवेति—सात्विकत्यागस्मारणम् ॥ २३ ॥

'कामेप्सुना' इत्यनेन 'अफलप्रेप्सुना' इत्युक्तविपरीतोक्तिं व्यनक्ति—फलप्रेप्सुनेति । संबन्धसामान्यषष्ठ्यात्र समासः । अत्र विकल्पाद्यसंभवात्—वाशब्दश्चार्थ इत्युक्तम् । प्रवृत्तिप्रधानरजोमूलतयानुपयुक्तप्रयासमिश्रणाद्बहुलायासत्वम् । तत्र च सर्वत्र स्वयमेव हेतुरित्यभिमानस्साहंकारशब्देन विवक्षितः । तत एव बहुलायासपदं च सप्रयोजनमित्यभिप्रायेणाह—बहुलायासमिदं कर्म मयैवेति ॥ २४ ॥

---

प्र-पा ॥ १. गी. १७-१८ ॥

---

शं॥अथ इदानीं कर्मणः त्रैविध्यम् उच्यते—नियतं नित्यं सङ्गरहितम् आसक्तिवर्जितम् अरागद्वेषतः कृतं रागप्रयुक्तेन द्वेषप्रयुक्तेन च कृतं रागद्वेषतः कृतं, तद्विपरीतम् अरागद्वेषतः कृतम्, अफलप्रेप्सुना फलं प्रेप्सतीति फलप्रेप्सुः फलतृष्णः तद्विपरीतेन अफलप्रेप्सुना कर्त्रा कृतं कर्म यत् तत् सात्त्विकम् उच्यते ॥ २३ ॥

यत्तु कामेप्सुना कर्मफलप्रेप्सुना इत्यर्थः, कर्म साहङ्कारेण इति न तत्त्वज्ञानापेक्षया. किं तर्हि ? लौकिकश्रोत्रियनिरहङ्कारापेक्षया यो हि परमार्थनिरहङ्कारः आत्मवित्, न तस्य कामेप्सुत्वबहुलायासकर्तृत्वप्राप्तिः अस्ति सात्त्विकस्यापि कर्मणः अना-

अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५

रा॥कृते कर्मण्यनुबद्ध्यमानं दुःखमनुबन्धः; क्षयः - कर्मणि क्रियमाणे अर्थविनाशः; हिंसा-तत्र प्राणिपीडा; पौरुषम्-आत्मनः कर्मसमापनसामर्थ्यम्; एतानि अनवेक्ष्य-अविमृश्य मोहात्-परमपुरुषकर्तृत्वाज्ञानात् यत्कर्मारभ्यते, तत्तामसमुच्यते ॥ २५ ॥

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६

मुक्तसङ्गः—फलसङ्गरहितः, अनहंवादी—कर्तृत्वाभिमानरहितः, धृत्युत्साहसमन्वितः—आरब्धे कर्मणि यावत्कर्मसमाप्त्यवर्जनीयदुःखधारणं धृतिः, उत्साहः—उद्युक्तचेतस्त्वं, ताभ्यां समन्वितः, सिद्ध्यसिद्ध्योर्निर्विकारः—युद्धादौ कर्मणि तदुपकरणभूतद्रव्यार्जनादिषु च सिद्ध्यसिद्ध्योरविकृतचित्तः कर्ता सात्त्विक उच्यते ॥ २६ ॥

---

ता॥क्षयशब्देन तादात्विकार्थव्ययदोषविवक्षणादुपसर्गशक्त्या चानुबन्धशब्द एतत्संबन्धितया पश्चाद्भाविदुःखपर इत्याह—**कृते कर्मणी**ति। हिंसा स्वविषया परविषया चेत्यभिप्रायेण—**तत्र प्राणिपीडे**ति सामान्योक्तिः । दैवप्रतिसंबन्धिनः पौरुषस्य पुरुषसंबन्धिदृष्टसामग्रीसमवधानरूपतामाह—**आत्मनः कर्मसमापनसामर्थ्यमि**ति । भविष्यतोऽनुबन्धादेस्साक्षात्कारासंभवाद्युक्तिभिरागमैश्च अपरामर्शोऽत्रानवेक्षणमित्याह—**अविमृश्ये**ति । अनुबन्धाद्यज्ञानस्य प्रागुक्तत्वात्प्रक्रान्ताकर्तृत्वज्ञानप्रत्यनीकोऽत्र मोहशब्दार्थ इत्याह—**परमपुरुषे**ति ॥ २५ ॥

'अनहंवादी' इत्यनेन कर्तृत्वाभिमानरूपसङ्गस्य पृथङ्निषेधात् 'मुक्तसङ्गः' इत्यत्र सङ्गशब्दस्संकुचितविषय इत्याह—**फलसङ्गरहित**इति। तत एव कर्मणि स्वकीयतानुसन्धानरूपसङ्गोऽपि प्रतिषिद्धः । अहंवदनशीलोऽहंवादी, तदन्योऽनहंवादी ; तत्र मनःपूर्वा हि वागित्यभिप्रायेणाह—**कर्तृत्वाभिमानरहित**इति। कर्तृत्वस्य विविच्यमानत्वात्तदुपयुक्ता धृतिरिह विवक्षितेत्याह—**आरब्ध**इति । प्रयत्नरूपस्योत्साहस्य कर्तृशब्देनैव सिद्धत्वाद्राजसादिकर्तृसाधारण्याच्च विशेषविवक्षामाह—**उद्युक्तचेतस्त्वमि**ति । 'मुक्तसङ्गः' इत्यनेन स्वर्गादिफलसङ्गनिवृत्तेरुक्तत्वात् 'सिद्ध्यसिद्ध्योर्निर्विकारः' इत्यस्य दृष्टफलविषयतामाह - **युद्धादावि**ति । मुक्तसङ्गत्वफलं वा निर्विकारत्वम् ॥ २६ ॥

---

शं॥त्मवित् साहङ्कारः कर्ता, किमुत राजसतामसयोः लोके अनात्मविदपि श्रोत्रियो निरहङ्कारः उच्यते 'निरहङ्कारः अयं ब्राह्मणः' इति तस्मात् तदपेक्षयैव 'साहङ्कारेण वा' इति उक्तम् । पुनश्शब्दः पादपूरणार्थः । क्रियते बहुलयासं कर्म महता आयासेन निर्वर्त्यते, तत् कर्म राजसम् उदाहृतम् ॥ २४ ॥

अनुबन्धं पश्चाद्भावि यत् वस्तु सः अनुबन्धः उच्यते तं च अनुबन्धं, क्षयं यस्मिन् कर्मणि क्रियमाणे शक्तिक्षयः अर्थक्षयो वा स्यात् तं क्षयं, हिंसां प्राणिबाधां च, अनपेक्ष्य च पौरुषं पुरुषकारं 'शक्नोमि इदं कर्म समापयितुम्' इत्येवम् आत्मसामर्थ्यम्, इत्येतानि अनुबन्धादीनि अनवेक्ष्य पौरुषान्तानि मोहात् अविवेकतः आरभ्यते कर्म यत् तत् तामसं तमोनिर्वृत्तम् उच्यते ॥ २५ ॥

इदानीं कर्तृभेदः उच्यते—मुक्तसङ्गः मुक्तः परित्यक्तः सङ्गः येन सः मुक्तसङ्गः अनहंवादी न अहंवदनशीलः, धृत्युत्साहसमन्वितः धृतिः धारणम्, उत्साहः उद्यमः-ता-

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७

रा॥रागी-यशोर्थी, कर्मफलप्रेप्सुः—कर्मफलार्थी; लुब्धः—कर्मापेक्षितद्रव्यव्ययस्वभावरहितः; हिंसात्मकः—परान् पीडयित्वा तैः कर्म कुर्वाणः, अशुचिः—कर्मापेक्षितशुद्धिरहितः, हर्षशोकान्वितः—युद्धादौ कर्मणि जयादिसिद्ध्यसिद्ध्योर्हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥

अयुक्तः प्राकृतःस्तब्धश्शठो नैकृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८

अयुक्तः—शास्त्रीयकर्मायोग्यः, विकर्मस्थः, प्राकृतः—अनधिगतविद्यः, स्तब्धः—अनारम्भशीलः, शठः—अभिचारादिकर्मरुचिः, नैकृतिकः—वञ्चनपरः, अलसः—आर-

ता॥'कर्मफलप्रेप्सुः' इत्यनेनानुश्रविकस्वर्गादिफलार्थित्वस्याभिधानात् 'रागी' इत्यानुषङ्गिकदृष्टफलसङ्गविवक्षामाह—यशोर्थीति। अपात्रव्ययादिराहित्यस्य गुणत्वात्—कर्मापेक्षितेति विशेषितम्। 'काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्न त्वेव दासकर्मकरम्' इत्याद्युक्तविपरीतस्वभावतात्र हिंसात्मकशब्देन विवक्षितेत्याह—परान्पीडयित्वेति। कर्तृत्वोपयोगाय—तैः कर्म कुर्वाण इति फलितोक्तिः। एवं—कर्मापेक्षितशुद्धिरहितइत्यपि। न हि दर्शनस्पर्शनादियोग्यशुचित्वमात्रेण कर्मण्यतानिष्पत्तिरिति भावः ॥ २७ ॥

अवधानाभावादेः 'प्राकृतः' इत्यादिना सिद्धेरयुक्तशब्देन अनर्हत्वं विवक्षितमित्याह—शास्त्रीयेति। अशुचिशब्दनिर्दिष्टाद्राजसस्यायोग्यत्वादधिकमयोग्यत्वमिह विवक्षितमित्याह विकर्मस्थइति। एवं हि तस्यायोग्यतातिशयः; यथा—'शैवान्पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान्। विकर्मस्थान् द्विजाञ्छूद्रान् सचेलो जलमाविशेत्' इति। शास्त्राध्ययनतदर्थोपदेशादिजनितसात्त्विककर्मानुष्ठानानुगुणविशेषराहित्यं प्राकृतशब्देन विवक्षितमित्याह—अनधिगतविद्यइति। पूज्येष्वपि त्वरितावश्यकर्तव्ययथोचितप्रणामाद्यारम्भविपरीतं स्तिमितस्वभावत्वमिह स्तब्धशब्दार्थ इत्याह—अनारम्भशीलइति। गूढविप्रियकृत्त्वं शठत्वं; तच्च प्रकरणाच्छास्त्रोदिततामसकर्मद्वारेत्याह—अभिचारादिकर्मरुचिरिति। पुनरुक्तिपरिहाराय मायाप्रतारणादिलौकिककर्मद्वारा नैकृतिकत्वमाह—वञ्चनपरइति। 'श्वःकार्यमद्य कुर्वीत' इति न्यायाच्छास्त्रीयेषु त्वरितेन भवितव्यम्; तद्वैप

प्र-पा॥ १. आपस्तम्बधर्मे. २. प्रश्ने. ४ पटले. ९ खण्डे. ११-सू. ॥ २ ॥ ३ ॥

शां॥भ्यां समन्वितः संयुक्तः धृत्युत्साहसमन्वितः, सिद्ध्यसिद्ध्योः क्रियमाणस्य कर्मणः फलसिद्धौ असिद्धौ च सिद्ध्यसिद्ध्योः निर्विकारः केवलं शास्त्रप्रमाणेन प्रयुक्तः, न फलरागादिना यः सः निर्विकारः उच्यते एवम्भूतः कर्ता यः सः सात्त्विकः उच्यते॥

रागी रागः अस्य अस्तीति रागी, कर्मफलप्रेप्सुः कर्मफलार्थी इत्यर्थः, लुब्धः परद्रव्येषु संजाततृष्णः, तीर्थादौ स्वद्रव्यापरित्यागी वा, हिंसात्मकः परपीडाकरस्वभावः, अशुचिः बाह्याभ्यन्तरशौचवर्जितः, हर्षशोकान्वितः इष्टप्राप्तौ हर्षः, अनिष्टप्राप्तौ इष्टवियोगे च शोकः, ताभ्यां हर्षशोकाभ्यां समन्वितः संयुक्तः, तस्यैव च कर्मणः सम्पत्ति-

रा॥ब्धेष्वपि कर्मसु मन्दप्रवृत्तिः, विषादी—अतिमात्रावसादशीलः, दीर्घसूत्री—अभिचारादिकर्म कुर्वन् परेषु दीर्घकालवर्त्यनर्थपर्यालोचनशीलः, एवंभूतो यः कर्ता, स तामसः॥

एवं कर्तव्यकर्मविषयज्ञाने कर्तव्ये च कर्मणि अनुष्ठातरि च गुणतस्त्रैविध्यमुक्तम्; इदानीं सर्वतत्त्वसर्वपुरुषार्थनिश्चयरूपाया बुद्धेर्धृतेश्च गुणतस्त्रैविध्यमाह —

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९**

---

ता॥रीत्यमिहालस्यं, तत्रानारम्भस्य स्तब्धशब्देनोक्तत्वात्--आरब्धेष्विति विशेषितम् । 'विषादी' इत्यत्र धातोरेवावसादार्थत्वादुपसर्गेण तत्प्रकर्षः, प्रत्ययेन ताच्छील्यं च विवक्षितमित्याह—**अतिमात्रावसादशील** इति । अवसादश्च लक्षितो वाक्यकारेण —'देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः' इति । प्रारब्धकर्मणां शीघ्रमसमापनरूपमन्दप्रवृत्तित्वादेरलसादिशब्देन निर्दिष्टत्वादवयवशक्तेश्शाठ्यादिसमभिव्याहारस्य चानुगुणदीर्घसूत्रत्वं विशिनष्टि — **अभिचारादिकर्म कुर्वन्परेषु दीर्घकालवर्त्यनर्थपर्यालोचनशील** इति । 'सूत्र सूत्रणे' इति धातुः, सूत्रणं चिन्तनं ; ताच्छील्यार्थप्रत्ययः ; दीर्घसूत्राणाद्दीर्घसूत्री । निरपराधशकुन्तादिग्रहणार्थदीर्घसूत्रकर्तृसमानतया दीर्घसूत्रीत्यौपचारिकग्रहणं तु मन्दमिति भावः ॥ २८ ॥

ज्ञानत्रैविध्यमुक्तम् ; पुनर्बुद्धित्रैविध्यं वक्ष्यते ; तत्र पर्यायतया पुनरुक्तिशङ्कां परिहर्तुमुक्तस्य विशेषविषयतामनुवदति—**एवं कर्तव्यकर्मविषयज्ञान** इति । प्रकृतोपयुक्तमनन्तरं प्रस्तूयत इति संगत्यभिप्रायेणाह - **इदानीमिति** । ज्ञानत्रैविध्यं पूर्वोक्तं, पुनरिह त्रैविध्यकथनं किमर्थमिति शङ्कायामनुष्ठानदशाभाव्यनुसंधानाद्विलक्षणस्तद्धेतुतया ततः पूर्वभाविशास्त्रादिजन्योऽध्यवसाय इह बुद्धिशब्दार्थ इत्याह—**सर्वतत्त्वसर्वपुरुषार्थनिश्चयरूपाया** इति।एतेन 'ज्ञानम्बुद्धेर्वृत्तिः, बुद्धिस्तु वृत्ति-

---

शं॥विपत्तिभ्यां हर्षशोकौ स्यातां, ताभ्यां संयुक्तो यः कर्ता सः राजसः परिकीर्तितः ॥

अयुक्तः न युक्तः असमाहितः ; प्राकृतः अत्यन्तासंस्कृतबुद्धिः बालसमः; स्तब्धः दण्डवत् न नमति कस्मैचित् ; शठः मायावी शक्तिगूहनकारी ; नैकृतिकः परविभेदनपरः ; अलसः अप्रवृत्तिशीलः कर्तव्येष्वपि, विषादी विषादवान् सर्वदा अवसन्नस्वभावः ; दीर्घसूत्री च कर्तव्यानां दीर्घप्रसारणः, सर्वदा मन्दस्वभावः, यत् अद्य श्वो वा कर्तव्यं तत् मासेनापि न करोति; यश्च एवम्भूतः सः कर्ता तामसः उच्यते ॥२८॥

बुद्धेः भेदं धृतेश्चैव भेदं गुणतः सत्त्वादिगुणतः त्रिविधं शृणु—इति सूत्रोपन्यासः; प्रोच्यमानं कथ्यमानम् अशेषेण निरवशेषतः यथावत् पृथक्त्वेन विवेकतः धनंजय—

---

आ॥परकृतं दोषं दीर्घकालकृतमप्यनुचितं यः सूचयति,स दीर्घसूत्री, 'परेण यः कृतो दोषो दीर्घकालकृतोऽपि वा । यस्तस्य सूचको दोषाद्दीर्घसूत्री स उच्यते' इत्यभिधानात् ॥ २८ ॥

---

ज॥दीर्घसूत्रित्वं कथं तामसत्वे हेतुरित्यतः सप्रमाणकं व्याचष्टे—परेति । दीर्घकालकृतं चिरातीतकालकृतम् । अनुचितं वचनायोग्यं परोपद्रवहेतुत्वात् । दोषान्मात्सर्यादेः ॥ २८ ॥

रा॥बुद्धिः—विवेकपूर्वकं निश्चयरूपं ज्ञानं, धृतिः—आरब्धायाः क्रियाया विघ्नोपनिपातेऽपि धारणं, तयोस्सत्त्वादिगुणतस्त्रिविधं भेदं पृथक्त्वेन प्रोच्यमानं यथावच्छृणु॥२९॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिस्सा पार्थ सात्त्विकी ॥ ३०

प्रवृत्तिः—अभ्युदयसाधनभूतो धर्मः. निवृत्तिः – मोक्षसाधनभूतः, तावुभौ यथावस्थितौ या बुद्धिर्वेत्तिः कार्याकार्ये—सर्ववर्णानां प्रवृत्तिनिवृत्तिधर्मयोरन्यतरनिष्ठानां देशकालावस्थाविशेषेषु 'इदं कार्यम्, इदमकार्यम्' इति या वेत्ति, भयाभये—शास्त्रातिवृत्तिः—भयस्थानं, तदनुवृत्तिः—अभयस्थानं. बन्धं मोक्षं च-संसारयाथात्म्यं तद्विगम-

---

ता॥मती'इति परोक्तं निरस्तम्।तदेव व्यनक्ति— बुद्धिर्विवेकपूर्वकं निश्चयरूपं ज्ञानमि.त॥विवेकपूर्वं—पक्षान्तरप्रतिक्षेपपर्यन्तविचारपूर्वमित्यर्थः ।[1] प्रस्तुतत्रिविधानुष्ठानोपयुक्तप्रकारेण त्रिविधाया धृतेस्साधारणं रूपमाह—आरब्धायाइति । अयमपि संकल्पदार्ढ्यादिरूपो बुद्धिस्वभावविशेष एव । गुणतो विभक्ते वाच्ये, वचने चासंकीर्णस्वरूपेऽन्वयात्त्रिविधपृथक्त्वशब्दयोरपुनरुक्तिमाह—त्रिविधं भेदं पृथक्त्वेन प्रोच्यमानमिति । एवं बुद्ध्यादिकार्यकात्स्न्यपरस्य 'अशेषेण' इत्यस्य श्रवणेऽन्वयादपुनरुक्तिः—यथावच्छृण्विति दर्शिता। सावधानं संशयविपर्ययरहितं शृण्वित्यर्थः । दिग्विजये मानुषदैवधनवच्छमादिधनं च जेतव्यमिति सम्बुद्धेर्भावः ॥ २९ ॥

कार्याकार्यशब्दाभ्यां पुनरुक्तिशङ्कापरिहाराय 'प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत् । निवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीत्' इत्याद्यनुसारेण प्रवृत्तिनिवृत्तिशब्दयोः प्रधानकर्मविषयत्वमाह—अभ्युदयसाधनभूतइत्यादिना । राजसतामसबुद्ध्योः 'अयथावत्' इत्यादिविशेषणादिहार्थतस्तन्निवृत्तेर्विवक्षितत्वज्ञापनाय यथावस्थितत्वोक्तिः । कार्याकार्यशब्दयोरिह प्रकृतप्रधानकर्मेतिकर्तव्यताभूतदृष्टादृष्टव्यापारपरत्वमाह—सर्ववर्णानामित्यादिना । तत्र सूक्ष्मधीवेद्यत्वाय—देशकालावस्थाविशेषेष्विति विशेषितम् । स्मर्यते हि —'[2] शरीरं बलमायुश्च वयः कालं च कर्म च । समीक्ष्य धर्मविद्बुद्ध्या प्रायश्चित्तानि निर्दिशेत्' इति;'[3] देशं कालं तथात्मानम्' इत्यादि च । अत्र शक्याशक्ययोरपि कार्याकार्यशब्दाभ्यामेव ग्रहणम् । भयाभययोस्स्वरूपज्ञानस्य सर्वसाधारणत्वादिह तन्निमित्तज्ञानं विवक्षितम् ; तच्च प्राकरणिकविशेषविषयमाह—शास्त्रातिवृत्तिर्भयस्थानमिति । बिभेत्यस्मादिति भयम्; सर्वप्रशासितुरीश्वरादेव हि तत्त्वविदाम्भयमभयं च ; नहि तत्प्रेरणमन्तरेण केनचिद्बाधितुमबा-

---

प्र·पा ॥ १ भार-शा-मो-२१९-३ ॥ ३ ॥
२ ॥

---

शं॥दिग्विजये मानुषं दैवं च प्रभूतं धनं जितवान्, तेन असौ धनंजयः अर्जुनः ॥ २९ ॥

प्रवृत्तिं च प्रवृत्तिः प्रवर्तनं बन्धहेतुः कर्ममार्गः शास्त्रविहितविषयः, निवृत्तिं च निवृत्तिः मोक्षहेतुः संन्यासमार्गः बन्धमोक्षसमानवाक्यत्वात् प्रवृत्तिनिवृत्ती कर्मसंन्यासमार्गौ इति अवगम्येते कार्याकार्ये विहितप्रतिषिद्धे लौकिके वैदिके वा शास्त्रबुद्धेः कर्तव्याकर्तव्ये करणाकरणे इत्येतत् , कस्य ? देशकालाद्यपेक्षया दृष्टादृष्टार्थानां कर्मणाम् । भयाभये बिभेति अस्मादिति भयं चोरव्याघ्रादि, न भयम् अभयं, भयं च अभयं च भयाभये, दृष्टादृष्टयोः भयाभययोः कारणे इत्यर्थः । बन्धं सहेतुकं मोक्षं च सहे-

रा॥याथात्म्यं च या वेत्ति, सा सात्त्विकी बुद्धिः ॥ ३० ॥

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिस्सा पार्थ राजसी ॥ ३१

यया पूर्वोक्तं द्विविधं धर्मं तद्विपरीतं च तन्निष्ठानां देशकालावस्थादिषु कार्यं चाकार्यं च यथावन्न जानाति, सा राजसी बुद्धिः ॥ ३१ ॥

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान्विपरीतांश्च बुद्धिस्सा पार्थ तामसी ॥ ३२

तामसी तु बुद्धिः तमसावृता सती सर्वार्थान्विपरीतान्मन्यते; अधर्मं धर्मं, धर्मं चाधर्मं, सन्तं चार्थमसन्तम्, असन्तम् चार्थं सन्तं; परं च तत्त्वमपरम्; अपरं च तत्त्वम्प-

ता॥धितुं वा शक्यम् । ततस्तदाज्ञानुवृत्त्यतिवृत्ती एव भयाभयनिमित्तमिति भावः । बन्धमोक्षसद्भावज्ञानस्यापि साधारण्याद्बन्धस्य मिथ्यात्वादिवादो मोक्षस्य पाषाणवद्भावादिमतं च याथात्म्यशब्देन व्युदस्तम् । वेत्तीति कर्तृत्वोपचारः ; स्वाच्छन्द्येन विषयीकरोतीत्यर्थः ॥ ३० ॥

धृतिसाधनं धर्म इति व्युत्पत्त्या धर्मशब्दस्य प्रवृत्तिनिवृत्तिसाधारण्यादुभयप्रसङ्गाच्च—**पूर्वोक्तं द्विविधमित्युक्तम्** ॥ ३१ ॥

'तामसी' इत्यनेनैव तमोमूलत्वसिद्धेः 'तमसावृता' इत्यनेन तादात्विकतमोनिरुद्धप्रसरत्वं विवक्षितमित्याह—**तमसावृता सतीति** । 'सर्वार्थान्' इत्यनेन सिद्धसाध्यरूपसमस्तानुक्तसंग्रहमाह—**सन्तं चार्थमसन्तमसन्तमि**त्यादिना। एतेन बाह्यानां कुदृष्टीनां च मतं तामसमिति दर्शितम् । उक्तं च मनुना 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः' इति । अत्र राजसतामसबुद्ध्योरियान्विशेषः—असमग्रवेदनमन्यथावेदनं च राजस्यां, 'यथावन्न जानाति' इति व्याख्यानात् ; तामस्यां तु सर्वं विपरीतम्मन्यते, 'सर्वार्थान्' इत्युक्तेरित्येके । अन्ये

प्र-पा ॥ १. मनु. १२-९५ ॥

शां॥तुकं या वेत्ति विजानाति बुद्धिः सा पार्थ सात्त्विकी । ज्ञानं बुद्धेः वृत्तिः ; बुद्धिस्तु वृत्तिमती । धृतिरपि वृत्तिविशेषः एव बुद्धेः ॥ ३० ॥

यया धर्मं शास्त्रचोदितम् अधर्मं च प्रतिषिद्धं कार्यं च अकार्यमेव च पूर्वोक्ते एव कार्याकार्ये अयथावत् न यथावत् सर्वतः निर्णयेन न प्रजानाति, बुद्धिः सा पार्थ राजसी ॥ ३१ ॥

अधर्मं प्रतिषिद्धं धर्मं विहितम् इति या मन्यते जानाति तमसा आवृता सती,

आ॥यथार्थत्वनियमाभावे राजस्याः, अन्यथा तामस्या भेदाभावात् ॥ ३१ ॥

ज॥'यया धर्ममधर्मं च' इति राजस्या बुद्धेर्धर्मादिविषयायाः अयथार्थज्ञानहेतुत्वमुच्यत इत्यन्यथाप्रतीतिनिरासार्थमाह—**यथार्थत्वेति** । 'अयथावत्प्रजानाति' इत्यस्य यथार्थज्ञानजनननियमाभावे तात्पर्यमित्यर्थः । प्रतीत एवार्थः किं न स्यादित्यत आह—**अन्यथेति** । राजस्या इति षष्ठ्यन्तमनुवर्तते । तामस्या इति पञ्चमी । भेदाभावाद्भेदाभावप्रसङ्गात् ॥ ३१ ॥

रा॥रम् एवं सर्वं विपरीतं मन्यत इत्यर्थः ॥ ३२ ॥

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिस्सा पार्थ सात्त्विकी ॥ ३३

यया धृत्या योगेनाव्यभिचारिण्या मनःप्राणेन्द्रियाणां क्रियाः पुरुषो धारयते; योगो—मोक्षसाधनभूतं भगवदुपासनं; योगेन प्रयोजनभूतेनाव्यभिचारिण्या योगोद्देशेन प्रवृत्तास्तत्साधनभूता मनःप्रभृतीनां क्रियाः यया धृत्या धारयते, सा सात्त्विकीत्यर्थः ॥ ३३ ॥

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिस्सा पार्थ राजसी ॥ ३४

फलाकाङ्क्षी पुरुषः प्रकृष्टसङ्गेन धर्मकामार्थान् यया धृत्या धारयते, सा राजसी; धर्मकामार्थशब्देन तत्साधनभूता मनःप्राणेन्द्रियक्रिया लक्ष्यन्ते; 'फलाकाङ्क्षी' इत्यत्रापि

---

ता॥त्वाहुः—प्रकारान्यथात्वं प्रकार्यन्यथात्वं च विशेषः।यद्यपि उभयत्राधिष्ठानभूते धर्मिण्यतद्धर्म एवाध्यास्यते ; तथापि स्वरूपनिरूपकधर्मवैपरीत्ये तामसता; यथा शुक्तिरजतभ्रमे; निरूपितस्वरूपविशेषकधर्मवैपरीत्ये तु राजसता ; यथा पीतशंखभ्रम इति ॥ ३२ ॥

राजसधृतौ त्रिवर्गोक्तेरपवर्गसाधनभूतो योग इह विवक्षितः ; सचानन्योपासनमेव प्रागनुशिष्टमित्याह—**योगो मोक्षसाधनभूतं भगवदुपासनमि**ति । फलान्तरसङ्गोऽत्र व्यभिचारः; योगस्य तन्निरोधकरणं स्वरूपतः फलतश्च महानन्दरूपत्वेनेत्याह—**योगेन प्रयोजनभूतेने**ति । योगाव्यभिचारोक्तिसामर्थ्याद्यथासंभवमुपकारविवक्षया—**योगोद्देशेन प्रवृत्ताः तत्साधनभूता**इत्युक्तम् । मानसी क्रिया तावत्साक्षात्करणं; प्राणक्रियापि 'यत्र मनस्तत्र वायुर्यत्र वायुस्तत्र मनः' इत्यन्योन्यपरिष्वङ्गात् ; यथोच्यते 'पुनर्वायुपथं प्राप्य मनो भ्रमति वायुवत्' इति ; तथा प्राणायामप्रक्रियया च योगविरोधिक्लेशपापादिजयहेतुत्वात् । बाह्येन्द्रियक्रिया तु 'स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत्। स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते' इत्यादिभिरुत्थानकालभावियोगाङ्गनिषेवणरूपेण प्रत्याहारे निरुध्यमानरूपेण वा ॥ ३३ ॥

प्रसङ्गशब्दोऽत्र न प्रासङ्गिकत्वार्थः, तदनुपयोगात् । धृतेस्स्वव्यापारविषयत्वाय प्रकृतप्रक्रियानुसाराय च धर्मादिशब्दैस्तत्तत्साधनलक्षणोक्ता । सामान्यस्यापि फलशब्दस्यात्र सात्त्विकफलादपवर्गात्सङ्कोचायाह—**फलाकाङ्क्षीत्यत्रापी**ति । लाक्षणिकप्रयोगाभिप्रेतं विवृण्वन् शब्दतोऽर्थतश्च फलि-

---

प्र-पा ॥ १ ॥ | २. वि-पु. ६-६ २ ॥

---

शं॥सर्वार्थान् सर्वानेव ज्ञेयपदार्थान् विपरीतांश्च विपरीतानेव जानाति, बुद्धिः सा पार्थ तामसी ॥ ३२ ॥

धृत्या यया—अव्यभिचारिण्या इति व्यवहितेन सम्बन्धः धारयते, किं? मनःप्राणेन्द्रियक्रियाः मनश्च प्राणाश्च इन्द्रियाणि च मनःप्राणेन्द्रियाणि,तेषां क्रियाः चेष्टाः ताः उच्छास्त्रमार्गप्रवृत्तेः धारयते धारयति धृत्या हि धार्यमाणाः उच्छास्त्रमार्गविषयाः न भवन्ति योगेन समाधिना, अव्यभिचारिण्या नित्यसमाध्यनुगतया इत्यर्थः । एतत् उक्तं भवति—अव्यभिचारिण्या धृत्या मनःप्राणेन्द्रियक्रियाः धार्यमाणाः योगेन

रा॥फलशब्देन राजसत्वाद्धर्मकामार्था एव विवक्षिताः। अतो धर्मकामार्थापेक्षया मनःप्रभृतीनां क्रिया यया धृत्या धारयते, सा राजसीत्युक्तं भवति ॥ ३४ ॥

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिस्सा पार्थ तामसी ॥ ३५

यया धृत्या स्वप्नं, निद्रां-मदं—विषयानुभवजनितं मदं, स्वप्नमदावुद्दिश्य प्रवृत्ता मनःप्राणादीनां क्रियाः दुर्मेधा न विमुञ्चति - धारयति; भयशोकविषादशब्दाश्च भयशोकादिदायिविषयपराः; तत्साधनभूताश्च मनःप्राणादिक्रिया यया धारयते, सा धृतिस्तामसी ॥ ३५ ॥

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।

पूर्वोक्तास्सर्वे ज्ञानकर्मकर्त्रादयो यच्छेषभूताः, तच्च सुखं गुणतस्त्रिविधमिदानीं शृणु ॥

अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६

---

ता॥तमाह—अत इति ॥ ३४ ॥

स्वप्नशब्दोऽत्र सुषुप्तेरप्युपलक्षक इत्यभिप्रायेणाह—निद्रामिति । दैवागतोन्मादादिव्यवच्छेदाय दुर्नीतिमूलत्वं मदस्यात्र दर्शयति—विषयानुभवजनितमिति । अस्वाधीनानां स्वप्नादीनां कथं पुरुषेण धारणमिति शङ्कायामत्रापि हेतुलक्षणा पूर्ववदित्याह—स्वप्नमदावुद्दिश्येति । स्वप्नमदयोस्सुखाभिमानास्पदतया भयादेः पृथक्कृत्य व्याख्यानम् । धारणमेवात्र मोक्तव्यत्वसूचनाय 'न विमुञ्चति' इत्युच्यत इत्यभिप्रायेणाह—नविमुञ्चति धारयतीति । नचात्र भीरोर्धृतिर्विरुद्धेति वाच्यम्, आगाम्यनवेक्षणेन दुर्मतेस्तद्धेत्वनुवर्तनपरत्वात् । भयदायिविषयो दुर्मानमूलप्रबलविरोधादिः ; शोकदायी तु क्रोधादिमूलबन्धुवधादिः;विषाददायी तु वृथावित्तव्ययादिः। दुर्मेधाः—दुर्मेधस्त्वादित्यर्थः॥

अनन्तरग्रन्थसंगत्यर्थं तुशब्दद्योतितं व्यनक्ति —पूर्वोक्ताइति। भरतर्षभशब्दोऽत्र प्रकृष्टसात्त्विकसुखसङ्गयोग्यताज्ञापनार्थः । इदानीमिति—साधनभेदस्योक्तस्य साध्यभेदाकाङ्क्षावसर इत्यर्थः ॥

आपातमधुरत्वाभावात्सात्त्विकस्याभ्याससापेक्षत्वं ;लोकेऽप्याभ्यासिकी क्षुद्रा प्रीतिरस्ति तद्व्युदासाय

---

शं॥धारयतीति । या एवंलक्षणा धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥

यया तु धर्मकामार्थान् धर्मश्च कामश्च अर्थश्च धर्मकामार्थाः तान् धर्मकामार्थान् धृत्या यया धारयते मनसि नित्यमेव कर्तव्यरूपान् अवधारयति हे अर्जुन प्रसङ्गेन यस्ययस्य धर्मादेः धारणप्रसङ्गः तेनतेन प्रसङ्गेन फलाकाङ्क्षी च भवति यः पुरुषः, तस्य धृतिः या सा पार्थ राजसी ॥ ३४ ॥

यया स्वप्नं निद्रां भयं त्रासं शोकं विषादम् अवसादं विषण्णतां मदं विषयसेवाम् आत्मनः बहुमन्यमानः मत्त इव मदम् एव च मनसि नित्यमेव कर्तव्यरूपतया कुर्वन् न विमुञ्चति धारयत्येव दुर्मेधाः कुत्सितमेधाः पुरुषः यः, तस्य धृतिः या सा पार्थ तामसी मता ॥ ३५ ॥

गुणभेदेन क्रियाणां कारकाणां च त्रिविधो भेदः उक्तः । अथ इदानीं फलस्य सुखस्य त्रिविधो भेदः उच्यते—सुखं तु इदानीं त्रिविधं शृणु—समाधानं कुरु इत्येतत् मे मम भरतर्षभ अभ्यासात् परिचयात् आवृत्तेः रमते रतिं प्रतिपद्यते यत्र

रा॥यस्मिन् सुखे चिरकालाभ्यासात् क्रमेण निरतिशयां रतिं प्राप्नोति, दुःखान्तं च निगच्छति - निखिलस्य सांसारिकस्य दुःखस्यान्तं निगच्छति ॥ ३६ ॥

तदेव विशिनष्टि—

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७

यत्तत्सुखम्-अग्रे—योगोपक्रमवेलायां बह्वायाससाध्यत्वाद्विविक्तस्वरूपस्याननुभूतत्वाच्च विषमिव—दुःखमिव भवति, परिणामेऽमृतोपमं—परिणामे—विपाके अभ्यासबलेन विविक्तस्वरूपाविर्भावे अमृतोपमं भवति, तच्चात्मबुद्धिप्रसादजम्—आत्मविषया बुद्धिः-आत्मबुद्धिः, तस्याः निवृत्तसकलेतरविषयत्वं प्रसादः, निवृत्तसकलेतरविषयबुद्ध्या विविक्तस्वभावात्मानुभवजनितं सुखममृतोपमं भवति; तत्सुखं सात्त्विकं प्रोक्तम् ॥

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८

अग्रे—अनुभववेलायां, विषयेन्द्रियसंयोगात् यत्तदमृतमिव भवति, परिणामे - विपाके विषयाणां सुखतानिमित्तक्षुदादौ निवृत्ते तस्य च सुखस्य निरयादिनिमित्तत्वा·

ता॥—क्रमेण निरतिशयामित्युक्तम्। रतिम्—अत्यन्तादरमित्यर्थः। दुःखशब्दस्यात्र संकोचकाभावात्कृत्स्नविषयत्वोक्तिः ॥ ३६ ॥

अभ्याससापेक्षत्वदुःखान्तहेतुत्वयोः प्रयोजकरूपमनन्तरमुच्यत इत्यभिप्रायेणाह—तदेव विशिनष्टीति। 'यत्तत्' इति तच्छब्दशिरस्केण यच्छब्देनानुवादः श्रुत्यादिप्रसिद्धतरत्वद्योतनाय। 'तत्सुखम्' इति प्रीत्यतिदेशः। 'विषमिव' इत्यनेन आपातप्रातिकूल्यमात्रं विवक्षितमित्याह—दुःखमिवेति। अनेन मन्दमतीनां जिहासास्पदत्वं दर्शितम्। न हि सुखं नाम किंचिद्वस्तु विषवदमृतवच्च परिणमते; अतस्तदुपचरितमाह—अभ्यासबलेन विविक्तात्मस्वरूपाविर्भावइति। बुद्धेरात्मीयत्वादिमात्रोक्तेरफलत्वात्—आत्मविषयेत्युक्तम्। बुद्धेरयोग्यविषयसंसर्गरूपकालुष्यनिवृत्तिर्हि प्रसाद इत्यभिप्रायेणाह—निवृत्तसकलेतरविषयत्वमिति। जरामरणादिनिवर्तकत्वाद्भोग्यतमत्वेन हातुमशक्यत्वाच्चामृतोपमत्वम्। परशेषतैकरसस्वस्वरूपस्य यथावदाविर्भावे परमात्मानुभवसुखस्यान्तर्नीतत्वादिह पृथगनुक्तिः ॥ ३७ ॥

विषयाणां—तत्तदिन्द्रियार्थानामन्नपानादीनामित्यर्थः। सुखतानिमित्तक्षुदादौ निवृत्ते इति

शं॥यस्मिन् सुखानुभवे दुःखान्तं च दुःखावसानं दुःखोपशमं च निगच्छति निश्चयेन प्राप्नोति ॥ ३६ ॥

यत् तत् सुखम् अग्रे पूर्वं प्रथमसन्निपाते ज्ञानवैराग्यध्यानसमाध्यारम्भे अत्यन्तायासपूर्वकत्वात् विषमिव दुःखात्मकं भवति, परिणामे ज्ञानवैराग्यादिपरिपाकजं सुखम् अमृतोपमं, तत् सुखं सात्त्विकं प्रोक्तं विद्वद्भिः, आत्मनः बुद्धिः आत्मबुद्धिः, आत्मबुद्धेः प्रसादः नैर्मल्यं सलिलस्य इव स्वच्छता, ततः जातम् आत्मबुद्धिप्रसादजम्। आत्मविषया वा आत्मावलम्बना बुद्धिः आत्मबुद्धिः, तत्प्रसादप्रकर्षाद्वा जातमित्येतत्। तस्मात् सात्त्विकं तत् ॥ ३७ ॥

रा॥द्विषमिव पीतं भवति, तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥** ३९

यत्सुखमग्रे चानुबन्धे च—अनुभववेलायां विपाके च आत्मनो मोहनं—मोहहेतुर्भवति, मोहोऽत्र यथावस्थितवस्त्वप्रकाशोऽभिप्रेतः ; निद्रालस्यप्रमादोत्थं—निद्रालस्यप्रमादजनितं, निद्रादयो ह्यनुभववेलायामपि मोहहेतवः ; निद्राया मोहहेतुत्वं स्पष्टम् ; आलस्यम्—इन्द्रियव्यापारमान्द्यम्; इन्द्रियव्यापारमान्द्ये च ज्ञानमान्द्यं भवत्येव; प्रमादः—कृत्यानवधानरूप इति तत्रापि ज्ञानमान्द्यं भवति; ततश्च तयोरपि मोहहेतुत्वम् ;

ता॥—राजससुखस्य दृष्टप्रातिकूल्यनिदानोक्तिः । यदुक्तं भगवता पराशरेण 'अग्नेश्शीतेन तोयस्य तृषा भक्तस्य च क्षुधा । क्रियते सुखकर्तृत्वं तद्विलोमस्य चेतरैः ' इति ।'[३] क्षुत्तृष्णोपशमं तद्वच्छीताद्युपशमं सुखम् । मन्यते बालबुद्धित्वाद्दुःखमेव हि तत्पुनः' इति । दृष्टसुखतानिमित्तनिवृत्ताद्युपेक्षणीयतामात्रव्यावृत्त्यर्थं दुःखोदर्कत्वं 'परिणामे विषमिव' इत्यनेन व्यज्यते । पारदारिकरसादीनि हि भयादिभूयिष्ठक्षणिकक्षुद्रतरसुखान्यनन्तरकालभाव्यतिघोरनिरतिशयदुःखाय भवन्तीत्यागामिकं विषत्वमाह—**निरयादिनिमित्तत्वादिति** ॥ ३८ ॥

अनुबध्यत इत्यनुबन्धो विपाकः, मोहनशब्दस्यात्र भावार्थानन्वयात्करणार्थत्वमाह—**मोहहेतुरिति** । निद्रादिजन्यसुखस्य विपरीतज्ञानहेतुत्वाभावात्—**मोहोऽत्र यथावस्थितवस्त्वप्रकाश** इत्युक्तम्। राजससुखस्य विपाके मोहहेतुत्वं, तामससुखस्य तु तदानीमपीति लोकसिद्धमित्यभिप्रायेणोक्तं विवृणोति—**निद्रादयो हीति** । **स्पष्टमिति**—न युक्त्यागमसापेक्षमित्यर्थः । अलसस्य प्रवृत्त्यभावमात्रं दृश्यते, न ज्ञानाभाव इत्यत्राह—**आलस्यमिन्द्रियव्यापारमान्द्यमिति** । ततः किमित्यत्राह—**इन्द्रियेति** । करणव्यापारतारतम्यानुगुणं हि कार्यतारतम्यम् । ज्ञानस्य मान्द्यं चाल्पविषयत्वम् । तच्च विषयान्तरप्रकाशाभावगर्भमिति भावः । प्रमादस्य स्वरूपेणैवापेक्षिताज्ञानरूपतामाह—**कृत्यानवधानरूपइति** । एवमालस्यप्रमादयोरज्ञानानुविद्धत्वं दर्शितं, तद्धेतुत्वं तु कथमित्यत्राह—**ततश्चेति** । ज्ञानस्यापटुत्वं हि क्रमादत्यन्ताज्ञाने विश्राम्यतीति भावः । निद्रायास्सुखहेतुत्वमायासविश्रमहेतुत्वादिभिः, विच्छेदकेषु रोषाच्च लोकसिद्धम्, इन्द्रियव्यापारमान्द्यस्याप्यङ्गसंक्षोभादिनिवृत्तिद्वारा, अनवधानस्य तु बुद्धेरेकाग्रताकल्पनरूपप्रयासनिवृत्त्येति । सुखाभासप्रसङ्गेनाकालनिद्रादिकं नोपादेयमित्युक्तं भवति । स्मरन्ति च—'यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते' इत्यादि। आहुश्चायुर्वेदविदः—'अका-

प्र-पा ॥ १. वि. पु १ १७-६४. दैत्यसुतान्प्रति प्रह्लादः॥ २. वि. पु १-१७-६० ॥ | ३ ॥ ४ ॥

शं॥विषयेन्द्रियसंयोगात् जायते यत् सुखं तत् सुखम् अग्रे प्रथमक्षणे अमृतोपमम् अमृतसमं परिणामे विषमिव, बलवीर्यरूपप्रज्ञामेधाधनोत्साहहानिहेतुत्वात् अधर्मजनितनरकादिहेतुत्वाच्च परिणामे तदुपभोगपरिणामान्ते विषमिव, तत् सुखं राजसं स्मृतम् ॥ ३८ ॥

यत् अग्रे च अनुबन्धे च अवसानोत्तरकाले च सुखं मोहनं मोहकरम् आत्मनः निद्रालस्यप्रमादोत्थं निद्रा च आलस्यं च प्रमादश्च तेभ्यः समुत्तिष्ठतीति निद्राल-

रा॥तत्सुखं तामसमुदाहृतम्;अतो मुमुक्षुणा रजस्तमसी अभिभूय सत्त्वमेवोपादेयमित्युक्तं भवति ॥ ३९ ॥

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात्त्रिभिर्गुणैः ॥ ४०

पृथिव्यां मनुष्यादिषु दिवि देवेषु वा प्रकृतिसंसृष्टेषु ब्रह्मादिस्थावरान्तेषु प्रकृतिजैरेभिस्त्रिभिर्गुणैर्मुक्तं यत्सत्त्वं प्राणिजातं न तदस्ति ॥ ४० ॥

* 'त्यागेनैके अमृतत्वमानशुः' इत्यादिषु मोक्षसाधनतया निर्दिष्टस्त्यागः संन्यासशब्दार्थादनन्यः; स च क्रियमाणेष्वेव कर्मसु कर्तृत्वत्यागमूलः; फलकर्मणोस्त्यागः कर्तृत्वत्यागश्च परमपुरुषे कर्तृत्वानुसंधानेनेत्युक्तम्; एतत्सर्वं सत्त्वगुणवृद्धिकार्यमिति सत्त्वोपादेयताज्ञापनाय सत्त्वरजस्तमसां कार्यभेदाः प्रपञ्चिताः, इदानीमेवंभूतस्य मोक्षसाधनतया क्रियमाणस्य कर्मणः परमपुरुषाराधनवेषतां, तथानुष्ठितस्य च कर्मणस्तत्प्राप्तिलक्षणं फलं प्रतिपादयितुं ब्राह्मणाद्यधिकारिणां स्वभावानुबन्धिसत्त्वादिगुणभेदभिन्नं वृत्त्या सह कर्तव्यकर्मस्वरूपमाह—

ता॥लेऽतिप्रसङ्गाच्च न च निद्रा निषेविता। सुखायुषी पराकुर्यात्कालरात्रिरिवापरा' इति। गुणकृतविभागप्रकरणतात्पर्यमनुष्ठानपर्यवसानरूपप्रयोजनेनोपसंहरति —अतइति ॥ ३९ ॥

प्राकृतगुणातीतशुद्धसत्त्वमयभगवत्प्राप्तिलक्षणमोक्षात्प्राङ्नियतदेशकालफलभोगैरुच्चावचैस्सर्वैरपि क्षेत्रज्ञैरुक्तस्य त्रिगुणस्य निश्शेषदुस्त्यजत्वमुखेन गुणकार्यप्रकरणं निगम्यते —'न तदस्ति' इति श्लोकेन। गुणत्रयप्रकरणं तु नात्रोपसंहृतम्, अनन्तरमपि 'स्वभावप्रभवैर्गुणैः' इत्युक्तेः। 'दिवि देवेषु' इति सत्त्वोत्तरदेशाधिकारिणामुपलक्षणम्। तत्तुल्यतया 'पृथिव्याम्' इत्यत्रापि मनुष्यादिष्विति राजसतामसाधिकारिविवक्षाख्यापनम्। 'हिरण्यगर्भो भगवान्'[1] 'आब्रह्मस्तम्बपर्यन्ताः'[2] इत्याद्यनुसारेण बहुवचनाभिप्रेतमाह—ब्रह्मादिष्विति। गुणप्रकरणात्सत्त्वशब्दस्य गुणविशेषार्थताभ्रमव्युदासाय प्राणिशब्दः। समुदायरूपेणापि निर्धार्यमाणेषु तत्रापि गुणनिर्मुक्तं न किंचित्सत्त्वमित्यभिप्रायेण जातशब्दः। जातमिति वा व्यस्तम्,—आसंसारं जन्मप्रभृति गुणबद्धताद्योतनार्थम् ॥ ४० ॥

एवं सर्वेषां संसारिणां गुणत्रयवश्यत्वमुक्तम्; अथ तत्तद्गुणतारतम्यवद्देहयोगिनामधिकारिणां यथाधिकारं शास्त्रैर्विभक्तानि कर्मादीनि विविच्यन्ते। तस्य परमप्रस्तुतेन संगत्यर्थमध्यायारम्भप्रक्रान्तं प्रदर्शयति—त्यागेनेत्यादिना। संन्यासशब्दार्थादनन्यइति—श्रुतावपि हि 'त्यागेनैके'[3] 'संन्यासयोगात्'[4] इत्युभावेकविषयाविति भावः। एवम्भूतस्येति —त्रिविधत्यागयुक्तस्येत्यर्थः। वृत्त्या सहेति—

प्र-पा॥* तै-ना. १०॥ १. वि-पु. ६-७ ५६॥ २. वि ध. १०४-२३॥ ३. तै. ना॥ ४. तै. ना॥

शां॥स्यप्रमादोत्थं, तत् तामसम् उदाहृतम् ॥ ३९ ॥

अथ इदानीं प्रकरणोपसंहारार्थः श्लोकः आरभ्यते—न तत् अस्ति तत् नास्ति पृथिव्यां वा मनुष्यादिषु सत्त्वं प्राणिजातम्, अन्यद्वा अप्राणि, दिवि देवेषु वा पुनः सत्त्वं, प्रकृतिजैः प्रकृतितः जातैः एभिः त्रिभिः गुणैः सत्त्वादिभिः मुक्तं परित्यक्तं यत् स्यात् भवेत् 'न तत् अस्ति' इति पूर्वेण सम्बन्धः ॥ ४० ॥

सर्वः संसारः क्रियाकारकफललक्षणः सत्त्वरजस्तमोगुणात्मकः अविद्यापरिक-

**ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥** ४१

रा॥ब्राह्मणक्षत्रियविशां स्वकीयो भावः स्वभावः, ब्राह्मणादिजन्महेतुभूतं प्राचीनकर्मेत्यर्थः; तत्प्रभवास्सत्त्वादयो गुणाः; ब्राह्मणस्य स्वभावप्रभवो रजस्तमोभिभवेनोद्भूतस्सत्त्वगुणः, क्षत्रियस्य स्वभावप्रभवस्तमस्सत्त्वाभिभवेनोद्भूतो रजोगुणः; वैश्यस्य स्वभावप्रभवस्सत्त्वरजोभिभवेनाल्पोद्रिक्तस्तमोगुणः; शूद्रस्य स्वभावप्रभवस्तु रजस्सत्त्वाभिभवेनात्युद्रिक्तस्तमोगुणः; एभिः स्वभावप्रभवैर्गुणैस्सह प्रविभक्तानि कर्माणि शास्त्रैः

---

ता॥कृषिगोरक्ष्यादीनि हि वक्ष्यमाणानि जीविकाविशेषा इति भावः। अत्र 'ब्राह्मणक्षत्रियविशाम्' इति समासो द्विजत्वे सति वेदाधिकारात्। प्राचीनकर्मानुरूपं सत्त्वादिगुणवृद्धिः प्रागेव प्रपञ्चिता; अतस्तद्धेतुकं कर्मात्र तत्तद्गुणप्रचुरपुरुषासाधारणधर्मतया स्वभाव इति दर्शितम्। एतेन 'कर्मवश्या गुणा ह्येते सत्त्वाद्याः पृथिवीपते' इति वचनादौपाधिकानां गुणानां चात्र स्वाभाविकतोक्तिशङ्कापि निरस्ता। गुणविभागप्रकारो ब्राह्मपुराणादिषु प्रपञ्चितः। तस्यायं संक्षेपः—'तमश्शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्तमम्' इति। अस्यार्थं वदन्प्रकृतं विवृणोति—**रजस्तमोभिभवेनोद्भूतस्सत्त्वगुण**इति। उत्तमशब्दस्य 'रजः क्षत्रे' इत्यादिष्वप्यन्वयमाह—**क्षत्रियस्ये**त्यादिना। **अल्पोद्रिक्त**इति—शूद्राद्व्यवच्छेदाय।अतीन्द्रियाणां गुणानामपि शास्त्राधीनविभागत्वात्कर्मप्रविभागे गुणानां कर्तृत्वाद्यसम्भवाच्च—**गुणैस्सहे**त्युक्तम्।गुणापेक्षया शास्त्रेण विभक्ततया गुणप्रविभक्तत्वोपचारादयमेवार्थ उचित इति भावः। कैर्विभक्तानीति शङ्कायां—**शास्त्रै**रिति शेषपूरणम्। स्वरूपविभागस्य शास्त्राधीनत्वाभावादसंकीर्ण-

---

प्र-पा॥ १. वि-पु. १ ॥ २ यस्यायं. पा ॥ ३ ॥

---

शं॥ल्पितः समूलः अनर्थः उक्तः,वृक्षरूपकल्पनया च'ऊर्ध्वमूलम्'इत्यादिना,'तं च असङ्गशस्त्रेण दृढेन छित्त्वा ततः पदं तत् परिमार्गितव्यम्' इति च उक्तम्। तत्र च सर्वस्य त्रिगुणात्मकत्वात् संसारकारणनिवृत्त्यनुपपत्तौ प्राप्तायां, यथा तन्निवृत्तिः स्यात् तत् वक्तव्यं, सर्वश्च गीताशास्त्रार्थः उपसंहर्तव्यः,एतावानेव च सर्ववेदस्मृत्यर्थः पुरुषार्थम् इच्छद्भिः अनुष्ठेयः इत्येवमर्थं 'ब्राह्मणक्षत्रियविशाम्' इत्यादिः आरभ्यते—ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशः,तेषां ब्राह्मणक्षत्रियविशां शूद्राणां च शूद्राणाम् असमासकरणम् एकजातित्वे सति वेदानधिकारात्। हे परन्तप कर्माणि प्रविभक्तानि इतरेतरविभागेन व्यवस्थापितानि। केन? स्वभावप्रभवैः गुणैः, स्वभावः ईश्वरस्य प्रकृतिः त्रिगुणात्मिका, सा प्रभवः येषां गुणानां ते स्वभावप्रभवाः, तैः शमादीनि कर्माणि प्रविभक्तानि ब्राह्मणादीनाम् ॥

अथवा ब्राह्मणस्वभावस्य सत्त्वगुणः प्रभवः कारणं, तथा क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः प्रभवः, वैश्यस्वभावस्य तमउपसर्जनं रजः प्रभवः, शूद्रस्वभावस्य रजउपसर्जनं तमः प्रभवः, प्रशान्त्यैश्वर्येहामूढस्वभावदर्शनात् चतुर्णाम् ॥

अथवा—जन्मान्तरकृतसंस्कारः प्राणिनां वर्तमानजन्मनि स्वकार्याभिमुखत्वेन अभिव्यक्तः स्वभावः, सः प्रभवो येषां गुणानां ते स्वभावप्रभवाः गुणाः गुणप्रादुर्भा-

रा॥प्रतिपादितानि; ब्राह्मणादय एवंगुणकाः, तेषां चैतानि कर्माणि, वृत्तयश्चैता इति हि विभज्य प्रतिपादयन्ति शास्त्राणि ॥ ४१ ॥

शमो दमस्तपश्शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥ ४२

शमः—बाह्येन्द्रियनियमनं, दमः—अन्तःकरणनियमनं, तपः—भोगनियमनरूपश्शास्त्रसिद्धः कायक्लेशः,शौचं—शास्त्रीयकर्मयोग्यता,क्षान्तिः—परैः पीड्यमानस्याप्यविकृतचित्तता, आर्जवं—परेषु मनोनुरूपं बाह्यचेष्टाप्रकाशनं, ज्ञानं—परावरतत्त्वयाथात्म्यज्ञानं, विज्ञानं—परतत्त्वगतासाधारणविशेषविषयं ज्ञानम् , आस्तिक्यम्—वैदिकार्थस्य कृत्स्नस्य सत्यतानिश्चयः प्रकृष्टः, केनापि हेतुना चालयितुमशक्य इत्यर्थः ; भगवान् पुरुषोत्तमो वासुदेवः परब्रह्मशब्दाभिधेयो निरस्तनिखिलदोषगन्धः स्वाभाविकानवधिकातिशयज्ञानशक्त्याद्यसङ्ख्येयकल्याणगुणगणो निखिलवेदवेदान्तवेद्यः,स एव निखिलजगदेककारणं निखिलजगदाधारभूतः,निखिलस्य स एव प्रवर्तयिता ; तदाराधनभूतं च वैदिकं कृत्स्नं कर्म, तैस्तैराराधितो धर्मार्थकाममोक्षाख्यं फलं प्रयच्छतीत्य-

---

ता॥बोधनं विवक्षितमित्याह—**प्रतिपादितानी**ति।विभज्य प्रतिपादनं विवृणोति—**ब्राह्मणादय** इति। कर्मशब्द एव सामान्यतो वृत्तिमपि संगृह्णाति, तादर्थ्याद्वा तदाक्षेप इत्यभिप्रायेणाह—**वृत्तयश्चे**ति । जीवनोपाया इत्यर्थः ॥ ४१ ॥

'शमो दमः' इत्यादौ पूर्वं व्याख्यातानामपि गुणानां पुनर्व्याख्यानं वर्णानुबन्धेन विधानेऽवान्तरविशेषशङ्कापाकरणार्थं 'ब्राह्मं कर्म' इत्युक्तकर्मत्वसिद्धये,नियमनादिरूपेण पुरुषव्यापारसाध्यत्वज्ञापनार्थं च । अतश्शौचादावपि तदापादनं ग्राह्यम् । अस्ति मतिरस्येत्यास्तिकः ; तद्भाव आस्तिक्यं ; तच्चाप्रामाणिकेषु भवद्दोषाय ; प्रत्यक्षादिसिद्धे तु नासावतिशयः ; शास्त्रीयेष्वपि क्वाचित्कसंशयादौ कुदृष्टित्वप्रसङ्गः ; अतो—**वैदिकार्थस्य कृत्स्नस्ये**त्युक्तम् । सहपठितविज्ञानादेर्भेदज्ञापनाय सत्यतानिश्चयस्य प्रकृष्टत्वोक्तिः । तद्विवृणोति—**केनापी**ति । वैदिकस्य कृत्स्नस्येत्युक्तं कुदृष्ट्याद्यभिमतवैदिकार्थसंग्रहव्युदासाय प्राधान्येन संकलय्य व्यनक्ति—**भगवानि**त्यादिना । अत्र विशेषणानां प्रागेव व्या-

---

शं॥वस्य निष्कारणत्वानुपपत्तेः।'स्वभावः कारणम्' इति च कारणविशेषोपादानम्। एवं स्वभावप्रभवैः प्रकृतिप्रभवैः सत्त्वरजस्तमोभिः गुणैः स्वकार्यानुरूपेण शमादीनि कर्माणि प्रविभक्तानि ॥

ननु शास्त्रप्रविभक्तानि शास्त्रेण विहितानि ब्राह्मणादीनां शमादीनि कर्माणि ; कथम् उच्यते सत्त्वादिगुणप्रविभक्तानि इति ? ।

नैष दोषः ; शास्त्रेणापि ब्राह्मणादीनां सत्त्वादिगुणविशेषापेक्षयैव शमादीनि कर्माणि प्रविभक्तानि, न गुणानपेक्षया, इति शास्त्रप्रविभक्तान्यपि कर्माणि गुणप्रविभक्तानि इति उच्यते ॥ ४१ ॥

कानि पुनः तानि कर्माणि इति ? उच्यते—शमः दमश्च यथाव्याख्यातार्थौ, तपः यथोक्तं शारीरादि,शौचं व्याख्यातं,क्षान्तिः क्षमा,आर्जवम् ऋजुता एव च ज्ञानं विज्ञानम्, आस्तिक्यम् आस्तिकभावः श्रद्धानता आगमार्थेषु,ब्राह्मं कर्म ब्राह्मणजातेः कर्म स्वभाव-

रा॥स्यार्थस्य सत्यतानिश्चय आस्तिक्यं,*'वेदैश्च सर्वैरहमेव वेद्यः'†'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते'‡ 'मयि सर्वमिदं प्रोतम्'§'भोक्तारं यज्ञतपसां...ज्ञात्वा मां शान्तिमृच्छति' ‡'मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय' ¶'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' × 'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्' इति ह्युच्यते, तदेतद्ब्राह्मणस्य स्वभावजं कर्म ॥ ४२ ॥

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३

शौर्यं—युद्धे निर्भयप्रवेशसामर्थ्यं, तेजः—परैरनभिभवनीयता, धृतिः—आरब्धे कर्मणि विघ्नोपनिपातेऽपि तत्समापनसामर्थ्यं, दाक्ष्यं—सर्वक्रियानिर्वृत्तिसामर्थ्यं, युद्धे चाप्यपलायनं—युद्धे चात्ममरणनिश्चयेऽप्यनिवर्तनम्, दानम्—आत्मीयस्य धनस्य परस्वत्वापादनपर्यन्तस्त्यागः , ईश्वरभावः—स्वव्यतिरिक्तसकलजननियमनसामर्थ्यम्, एतत् क्षत्रियस्य स्वभावजं कर्म ॥ ४३ ॥

कृषिगोरक्ष्यवाणिज्यं वैश्यं कर्म स्वभावजम् ।

---

ता॥ख्यातत्वादिह सर्ववेदसारतयोद्धृतस्यार्थस्य तदुपबृंहणेऽस्मिञ्छास्त्रे तथात्वेनैव प्रस्पष्टतामाह—वेदैश्चेति।निखिलवेदवेदान्तवेद्य इत्युक्तार्थक्रमानुसारेण विप्रकीर्णवाक्योद्धारक्रमः।श्लोकार्थं निगमयति—तदेतदिति। ब्रह्मणः कर्म ब्राह्मम् ; ब्रह्मशब्दोऽत्र ब्राह्मणजातिपर इत्यभिप्रायेणाह—ब्राह्मणस्येति ॥

'शूरं भीरुं कविं जडम्' इति भीरुप्रतियोगिनि शूरशब्द इत्यभिप्रायेणाह—निर्भयप्रवेशसामर्थ्यमिति । मानसशारीरसंवलनमिदम्। प्रविष्टस्य परैः परिभवे प्रवेशोऽपि दोषस्स्यात्, अतस्तत्परिहाराय तेज इहोक्तमित्याह—परैरनभिभवनीयतेति। दाक्ष्याद्धृतेर्विशेषो—विघ्नोपनिपातेऽपीति दर्शितः । प्रवृत्तिसामर्थ्यात्प्रवृत्तापरित्यागो ह्यन्य एव । 'युद्धे चापि' इत्यत्रापिशब्दद्योतितं तीव्रं पलायननिमित्तमाह—आत्ममरणनिश्चयेऽपीति । अत्रेश्वरभावशब्देन दुष्टनिग्रहशिष्टानुग्रहशक्तिर्विवक्षितेत्यभिप्रायेणाह—स्वव्यतिरिक्तेति । सकलजनेति—स्वराष्ट्राद्यवच्छिन्नविषयम् ॥ ४३ ॥

---

प्र पा ॥ * गी. १५-१५ ॥
† गी. १०-८ ॥
‡ गी. ७-७ ॥
§ गी. ५-२९ ॥
¶ गी. १८-४६ ॥
× गी. १०-३ ॥
१. अत्र ग्रन्थः पतितः । न विवरणं कृतम्—इति स्यादिति प्रतिभाति ॥ २ ॥

---

शं॥जं—तत् उक्तं 'स्वभावप्रभवैः गुणैः प्रविभक्तानि' इति तदेव उक्तं 'स्वभावजम्' इति॥

शौर्यं शूरस्य भावः, तेजः प्रागल्भ्यं, धृतिः धारणं, सर्वावस्थासु अनवसादः भवति यया धृत्या उत्तम्भितस्य, दाक्ष्यं दक्षस्य भावः, सहसा प्रत्युत्पन्नेषु कार्येषु अव्यामोहेन प्रवृत्तिः, युद्धे चापि अपलायनम् अपराङ्मुखीभावः शत्रुभ्यः, दानं द्रव्येषु मुक्तहस्तता, ईश्वरभावः ईश्वरस्य भावः,प्रभुशक्तिप्रकटीकरणम् ईशितव्यान् प्रति, क्षात्रं कर्म क्षत्रियजातेः विहितं कर्म क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥

रा॥कृषिः—सस्योत्पादनं कर्षणं, गोरक्ष्यं—पशुपालनमित्यर्थः,वाणिज्यं—धनसञ्चय-हेतुभूतं क्रयविक्रयात्मकं कर्म, एतद्वैश्यस्य स्वभावजं कर्म ॥

**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४**

पूर्ववर्णत्रयपरिचर्यारूपं शूद्रस्य स्वभावजं कर्म, तदेतच्चतुर्णां वर्णानां वृत्तिभिस्सह कर्तव्यानां शास्त्रविहितानां यज्ञादिकर्मणां प्रदर्शनार्थमुक्तम् , यज्ञादयो हि त्रयाणां वर्णानां साधारणाः, शमादयोऽपि त्रयाणां वर्णानां मुमुक्षूणां साधारणाः, ब्राह्मणस्य तु सत्त्वोद्रेकस्य स्वाभाविकत्वेन शमदमादयस्सुखोपादाना इति कृत्वा तस्य शमादयः स्वभावजं कर्मेत्युक्तम्, क्षत्रियवैश्ययोस्तु स्वतो रजस्तमःप्रधानत्वेन शमदमादयो दुःखोपादाना इति कृत्वा न तत्कर्मेत्युक्तम् , ब्राह्मणस्य तु वृत्तिर्याजनाध्यापनप्रतिग्रहाः, क्षत्रियस्य जनपदपरिपालनम् , वैश्यस्य च कृष्यादयो यथोक्ताः, शूद्रस्य तु कर्तव्यं वृत्तिश्च पूर्ववर्णत्रयपरिचर्यैव ॥ ४४ ॥

---

ता॥रूढिं व्युत्पत्तिं चानुसृत्य फलतस्स्वरूपतश्च कृषिं दर्शयति—**सस्योत्पादनं कर्षणमि**ति। एवं वाणिज्यव्याख्यानेऽपि ग्राह्यम् । गौः रक्ष्या यत्र, तत्कर्म गोरक्ष्यमित्यभिप्रायेणाह—**पशुपालनमि**ति। रक्ष्यमिति भावार्थे वा, रक्षणमित्यर्थः । गौरक्ष्यमिति वा पाठः । गां रक्षतीतिगोरक्षः, तस्य कर्म गौरक्ष्यं पशुपालनं ; वणिजः कर्म वाणिज्यमितिवत् । एवं विशः कर्म वैश्यं ; 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ् प्रत्ययः ॥

शास्त्रान्तरानुसारेण परिचर्यायाः प्रकृतत्रितयानुबन्धित्वमाह—**पूर्ववर्णत्रये**ति । ननु षट्कर्मा ब्राह्मणः, त्रिकर्माणौ क्षत्रियवैश्यौ, शूद्रस्यापि 'भार्यारतिश्शुचिर्भृत्यभर्ता श्राद्धक्रियान्वितः । नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्' इत्यादयो धर्मा विधीयन्ते ; तत्कथमिह तत्कर्मणामियत्तानिर्देश इत्यत्राह—**तदेतदि**ति । प्रदर्शनीयानुदाहरति—**यज्ञादयो ही**ति । प्रदर्शनार्थत्वे हेत्वन्तरमाह—**शमादयोऽपी**ति। शमादीनां मोक्षार्थिवर्णत्रयसाधारण्येन कथं ब्राह्मणस्यैव तदुक्तमित्यत्राह—**ब्राह्मणस्य त्वि**ति । 'स्वभावप्रभवैः' इति पूर्वोक्तानुविधानात्सहजत्वविवक्षयात्र स्वभावजशब्द इत्यभिप्रायेणाह—**सत्त्वोद्रेकस्य स्वाभाविकत्वेन शमादयस्सुखोपादाना इति** । वर्णान्तरगुणसंभेदं निर्वहति—**क्षत्रियवैश्ययोरि**ति । **न तत्कर्मेत्युक्तमि**ति—तत्कर्मेति नोक्तमित्यन्वयः । उक्तानां वृत्तीनां प्रदर्शनार्थत्वाय चतुर्णां वृत्त्यंशं विविच्य विविनक्ति—**ब्राह्मणस्य वृत्तिरि**त्यादिना । शूद्रधर्मो वृत्तिश्च याज्ञवल्क्येन स्मर्यते—'शूद्रस्य द्विजशुश्रूषा तया जीवन्वणिग्भवेत् । शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्' इति : मनुस्तत्र विशेषमाह—'विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते' इति ; तदिदमभिप्रेत्याह—**शूद्रस्य कर्तव्यं वृत्तिश्च पूर्ववर्णत्रयपरिचर्यैवे**ति । नन्विदमयुक्तं 'भार्यारतिः' इत्यादेरुक्तत्वात् ; 'मां हि पार्थ व्यपाश्रित्य' इत्यारभ्य 'स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्'

---

**प्र.पा** ॥ १. अष्टा. ५-१-१२४ ॥
२. याज्ञवल्क्यस्मृ. १-५-१२१ ॥
३. याज्ञवल्क्यस्मृ. १-अ-५-प्र १२० ॥
४ ननु ॥
५. गी. ९-३२ ॥

---

शं॥कृषिगौरक्ष्यवाणिज्यं कृषिश्च गौरक्ष्यं च वाणिज्यं च कृषिगौरक्ष्यवाणिज्यं—कृषिः भूमेः विलेखनं, गौरक्ष्यं गाः रक्षतीति गोरक्षः तस्य भावो गौरक्ष्यं पशुपालनम् इत्यर्थः,

ता॥इति च स्वयमेवाह ;'वसन्ते दीक्षयेद्विप्रम्'इत्यारभ्य'हेमन्ते शूद्रमेव चा[स्त्रि]यं च वर्षाकाले तु पञ्चरात्रविधानतः' इति भगवत्समाराधनार्थं दीक्षा च विहिता ; तथा 'ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैश्च कृतलक्षणैः । अर्चनीयश्च सेव्यश्च नित्ययुक्तैस्स्वकर्मसु । सात्त्वतं विधिमास्थाय गीतस्संकर्षणेन यः' इति दीक्षितशूद्रादेर्भगवदर्चनादिकं स्पष्टमुक्तम् ; तथा युगधर्मान् प्रक्रम्योच्यते—'कृतं नाम युगं पूर्वं यत्र धर्मस्सनातनः । कृतमेव न कर्तव्यं यस्मिन् काले नरोत्तम । ब्राह्मणाः क्षत्रिया वैश्याश्शूद्राश्च कृतलक्षणाः । कृते युगे समभवन् स्वकर्मनिरतास्सदा । एकवेदसमायुक्ता एकमन्त्रविधिक्रियाः । पृथग्धर्मास्त्वेकवेद्या धर्ममेकमनुव्रताः। चातुराश्रम्ययुक्तेन कर्मणा कालयोगिना । अकामफलसंयोगात् प्राप्नुवन्ति परां गतिम्' इति । श्रीसात्त्वते च 'अष्टाङ्गयोगयुक्तानां हृद्यागनिरतात्मनाम् । योगिनामधिकारस्स्यादेकस्मिन् हृदयेशये । व्यामिश्रयागयुक्तानां विप्राणां वेदवादिनाम् । समन्ते तु चतुर्व्यूहे ह्यधिकारो न चान्यथा। त्रयाणां क्षत्रियादीनां प्रपन्नानां च तत्त्वतः । अमन्त्रमधिकारस्तु चतुर्व्यूहक्रियाक्रमे । सक्रिये मन्त्रचक्रे तु वैभवीये विवेकिनाम्। ममतासन्निरस्तानां स्वकर्मनिरतात्मनाम् । कर्मवाङ्मनसैस्सम्यग्भक्तानां परमेश्वरे । चतुर्णामधिकारो वै वृत्ते दीक्षाक्रमे सति' इत्यधिकारविशेषनियमः कृतः । सप्तमे च व्रतविधानपरिच्छेदे 'दानार्चने तु शूद्राणां व्रतकर्मणि सर्वदा। असिद्धान्नं तु विहितं सिद्धं वा ब्राह्मणेच्छया । स्वकर्मणा यथोत्कर्षमभ्येति च तथार्चनात् । तस्मात्स्वेनाधिकारेण कुर्यादाराधनं सदा । सर्वत्राधिकृतो विप्रो वासुदेवादिपूजने । यथा तथा न क्षत्राद्यास्तस्माच्छास्त्रार्थमाचरेत् । नयेन्नक्ताशनैर्भक्त्या दिनान्येतानि मौद्गल। व्रताद्यन्ते तु विहितं परिपीडं हि तस्य वा'इति व्रतविशेषक्रमो दर्शितः। मौद्गलेति भगवच्छास्त्रे शूद्रनाम। परिपीडमुपवासः । तथा मन्त्रेषु चैवं नियमोऽन्यत्र कृतः। 'वौषट्स्वाहावषट्कारनिष्ठानां तु प्रतिक्रिया । नमस्कारेण विहिता' इति । तथा नारदीये श्रीमदष्टाक्षरकल्पे 'नैं स्वरः प्रणवोऽङ्गानि नाप्यन्यविधयस्तथा । स्त्रीणां तु शूद्रजातीनां मन्त्रमात्रोक्तिरिष्यते' इति । एवमेकादशीव्रतादयोऽपि सर्वसाधारणाः पुराणादिषु पठ्यन्ते । तथान्येऽपि वर्ज्यावर्ज्यनियमाः कतिकति धर्मशास्त्रादिषु कथ्यन्ते । यथा 'कपिलाक्षीरपानेन ब्राह्मणीगमनेन च । शूद्रे वेदाक्षरेणैव निष्कृतिर्न विधीयते' 'हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः । शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः' 'तेषां स एवाचमनकल्प अधिक अहरहः।। केशश्मश्रुलोमनखवापनम्' इत्यादि । तस्मात् 'जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् । देवताराधनं चैव स्त्रीशूद्रपतनानि षट्' इत्यादिकं विहितव्यतिरिक्तवर्णत्रयशुश्रूषाविरुद्धविषयमिति योज्यम्। अपि च 'नैं शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः' इत्यादिवचनाज्जयाख्यसंहितादिषु भागवतानां चतुर्णां समत्ववचनाच्च भगवत्परिचर्यावशाद्वर्णत्रयपरिचर्यानिवृत्तिरपि सम्भवेत् । अतः कथं 'शूद्रस्य तु कर्तव्यं वृत्तिश्च पूर्ववर्णत्रयपरिचर्यैव' इति भाषितम्। अत्र ब्रूमः—यद्यपि विहितव्यतिरिक्तविषयाः सर्वनिषेधाः विशिष्टसंस्कारगुणविशेषादिमतां च शूद्राणामपि धर्मविशेषा विहिताः, तथापि ते सर्वे वर्णत्रयपरिचर्याख्यप्रधानधर्माविरोधेन तन्नियुक्तैश्शूद्रैः

---

प्र·पा ॥ १ ॥

२. भारते. भीष्म. ६६-३९-४० ॥

३. विष्णुधर्मे. १०८-१९ ॥

४. श्रीसात्त्वते.२. परिच्छेदे.७-८-९-१०-११. श्लोकाः॥ ५. श्रीसात्त्वते. ७-५३-५४-५५-५६॥

६ ॥

७. नारदीये. अष्टाक्षर. कल्पे. १-१०२ ॥

८. लघुपाराशरस्मृतौ. १-७४ ॥

९ ॥

१०. विहगेन्द्रसं. २४-पटले. १०-श्लो. 'सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने' इत्युत्तरार्धम् ॥

**स्वेस्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतस्सिद्धिं यथा विन्दति तच्छृणु ॥** ४५

**ता॥**तत्परिचर्याभावनयैवानुष्ठेयाः। अत एव ह्यत्रोच्यते —'परिचर्यात्मकं कर्म' इति। अन्यथा परिचर्येत्येव वक्तव्यम्: नच निष्प्रयोजनाधिकग्रहणं युक्तम्: आमनन्ति च रहस्याम्नायविदः—'ज्ञानज्ञापनसंप्रेषणकर्मा ब्राह्मणः, ज्ञानपरित्राणकर्मा क्षत्रियः. ज्ञानबीजवर्धनकर्मा वैश्यः, ज्ञानपर्युत्थानकर्मा शूद्रः, कृतयुगस्यान्ते त्रेतायुगस्यादौ ब्राह्मणक्षत्रियवैश्यशूद्रा भिद्यन्ते, तेषां भिन्नानां दृष्टिः न तथा भवति, पथ्या रसना न तथा भवन्तिः पुष्पफलमोषधिवनस्पतयो न तथा दधते: तां दृष्ट्वा ब्राह्मणक्षत्रियवैश्यशूद्राणामसूया प्रादुर्बभूव । शूद्रः प्रथमजातिर्न वः पर्युत्थास्यामीती । वैश्यो द्वितीयजातिः न वो बीजानि वर्धयिष्यामीति । क्षत्रियस्तृतीयजातिर्न वः परित्रास्य इति । तान् ब्राह्मण इत्याह। आश्रिता यूयं न वो वक्ष्यामि' इति । अत्र पर्युत्थानं परिचर्या । एवं 'शूद्रस्साधुः' इत्यादिप्रकरणान्तराणि च द्रष्टव्यानि । एतेन 'न शूद्रा भगवद्भक्ताः' इत्यादिस्तुतिवाक्येन वर्णत्रयपरिचर्यादिनिवृत्तिप्रसङ्गोऽपि प्रत्युक्तः, भगवदेकान्तशूद्रस्यैव पर्युत्थानविधेः । भगवद्भक्तिस्तुतिपरत्वादेव हि 'सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने' इति व्यतिरेकनिन्दा । किं तर्ह्यत्र स्तुतिनिन्दालम्बनम्? आन्तरस्सत्त्वादिगुणोन्मेषः; यदपेक्षया ब्राह्मणादेरेव ब्रह्मण्यादिकं श्रुत्यादिषु कीर्त्यते—'मौनं चामौनं च निर्विद्याथ ब्राह्मणः' इति । 'विष्णुं क्रान्तं वासुदेवं विजानन्विप्रो विप्रत्वं गच्छते तत्त्वदर्शी' 'चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः' इत्यादि। यत्तु शारीरसत्त्वादिगुणतारतम्यनिबन्धनं जातिरूपं ब्राह्मण्यादिकं, तस्यान्तरसत्त्वोन्मेषादावप्यनुवृत्तेराशरीरपातं जातिनियमः स्थित एव। तदनुबन्धिनश्च धर्मास्तत एवावतिष्ठन्ते। अत एव हि विदितब्रह्मविद्योऽपि विदुरस्स्वस्य तद्वचनेऽनधिकारमाह-'शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे' इति । शमादिगुणपौष्कल्ययोगिनि तु शूद्रादौ स्त्रीधर्मिण्यां जनन्यामिवावज्ञानादिनिवृत्तिमात्रविशेषापेक्षया जातिसामान्यवीक्षणप्रतिषेध इति । यथा स्मरन्ति—'एतैस्समेतश्शूद्रोऽपि वार्धके मानमर्हति' इति । अत एव 'भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते । तस्मै देयन्ततो ग्राह्यं स च पूज्यो यथा ह्यहम्'इत्यादिकमनुपप्लवपर्यन्ततयापि निर्व्यूढम्। साम्योक्तिरपि सर्वोत्कर्षफलादिसाम्यविषया;अपशूद्रनयाद्यविरोधश्च । उक्तं चाचार्यैर्भागवतत्वेन शूद्रस्योत्कर्षे ब्राह्मणस्यापि तेनैवोत्कर्ष इति पुनर्वैषम्यमिति सर्वं समञ्जसम् । अतस्सुष्ठूक्तं —शूद्रस्य वृत्तिकर्तव्ययोरैक्यम्—इति ॥ ४४ ॥

**प्र-पा** ॥ १ ॥

२. वि-पु. ६-२-६. 'मग्नोऽथ जाह्नवीतोयात् उत्थायाह सुतो मम । शूद्रस्साधुः कलिस्साधुरित्येवं शृण्वतां वचः' ॥

३. विह. सं. २४-१० ॥

४. बृ. उप. ५-५-१ ॥

५. शाठ्यायनोपनिषदि. आथर्वण इति वेदार्थसंग्रहव्याख्याने श्रुतप्रकाशिकायाम्. भारतेच. आनु. १६-२ ॥

६ ॥

७. भारते. उद्यो. सनत्सुजातीये. ४१-५ ॥

८ ॥

९. गारुडे. पूर्वखण्डे. २१९-६-७-८. 'मद्भक्तजनवात्सल्यं पूजाया चानुमोदनम् । स्वयमभ्यर्चनञ्चैव मदर्थे डम्भवर्जनम् ॥ मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया । ममानुस्मरणं नित्यं यच्च मां नोपजीवति॥ भक्तिरष्टविधाह्येषा यस्मिन् म्लेच्छेऽपि वर्तते। सविप्रेन्द्रो मुनिः श्रीमान् स यतिस्सच पण्डितः । तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम्' ॥

**शं॥वाणिज्यं वणिक्कर्म क्रयविक्रयादिलक्षणं—वैश्यं कर्म वैश्यजातेः कर्म वैश्यं कर्म स्वभावजम्। परिचर्यात्मकं शुश्रूषास्वभावं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥**

रा॥स्वे स्वे—यथोदिते कर्मण्यभिरतो नरः संसिद्धिं—परमपदप्राप्तिं लभते; स्वकर्मनिरतो यथा सिद्धिं विन्दति—परमपदं प्राप्नोति, तथा शृणु ॥ ४५ ॥

**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६**

यतो भूतानामुत्पत्त्यादिका प्रवृत्तिः, येन च सर्वमिदं ततम्, स्वकर्मणा तं—मामिन्द्राद्यन्तरात्मतयावस्थितमभ्यर्च्य मत्प्रसादान्मत्प्राप्तिरूपां सिद्धिं विन्दति मानवः, मत्त एव सर्वमुत्पद्यते, मया च सर्वमिदं ततमिति पूर्वमेवोक्तम्* 'अहं कृत्स्नस्य जगतः प्रभवः

---

ता॥वर्णधर्मविभागो मोक्षशास्त्रे किमर्थमित्यत्राह—स्वे स्वे कर्मणीति। संसिद्धिशब्दस्यात्र परमपदप्राप्तिविषयत्वं प्रकरणात्सिद्धम्। 'शाश्वतं पदमव्ययम्' इति हि वक्ष्यति। यद्वा सिद्धिशब्दो 'नैष्कर्म्यसिद्धिम्' इति वक्ष्यमाणविषयः। तत्पर्यवसानज्ञापनायात्र परमप्राप्यग्रहणम्। ननु स्वकर्मनिरतस्यापि शूद्रस्य कथं परमपदप्राप्तिः? तस्य मोक्षसाधनविद्यायामनधिकारश्शारीरके अपशूद्राधिकरणे शिक्षितः। सत्यं, भवान्तराधिकारद्वारा परंपरया परमपदप्राप्तेर्विवक्षितत्वान्न विरोधः। विदुरादिवज्जातिस्मरेषु जन्मान्तरप्रारब्धपरविद्याप्रतिसंधायिषु स्वकर्मणामकरणनिमित्तप्रत्यवायपरिहारार्थत्वं साक्षात्संसिद्धियोग्यत्वं द्रष्टव्यम्। यथोक्तं भगवता शौनकेन—'धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते। वर्णावरत्वे संप्राप्तास्संसिद्धिं श्रमणी यथा' इति। ननु परिमितफलप्रदानसमर्थेन्द्राद्याराधनरूपाणां तत्तद्वर्णाश्रमकर्मणां कथं परमपदप्राप्तिहेतुत्वमित्यत्रोत्तरं—स्वकर्मनिरत इति। 'यथा' इत्यस्य प्रतिनिर्देशत्वात्तच्छब्दः प्रकारपरामर्शीत्याह—तथा शृण्विति ॥ ४५ ॥

सर्वकारणभूतस्सर्वान्तर्यामी परमात्मा स्वसृज्यस्वशरीरभूतेन्द्रादिवाचकैश्शब्दैराम्नायत इति तत्समाराधनत्वात्संसिद्धिसाधनत्वं वर्णाश्रमधर्माणामुपपन्नमित्युच्यते—यतः प्रवृत्तिः' इति श्लोकेन। प्रवृत्तिशब्दस्यात्र चेष्टामात्रपरत्वव्युदासायाह—उत्पत्त्यादिकेति। चेतनाचेतनवाचिभूतशब्दसमन्वितः प्रवृत्तिशब्दोऽत्र विशेषकाभावात्सर्वविधव्यापारसंग्राहक इति भावः। सर्वविधकारणत्वोपयुक्त आकार उच्यते—'येन सर्वमिदं ततम्' इति। ततं नियन्तृत्वेनेति हृदयम्। 'ताम्' इति परोक्षतया निर्दिष्टः कथं

---

प्र-पा ॥ * गी. ७-६ ॥ २. विष्णुधर्मे. १०२-३० ॥
१. गी. १८-५६॥

---

शं॥एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठितानां स्वर्गप्राप्तिः फलं स्वभावतः, 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलधर्मायुश्श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' इत्यादिस्मृतिभ्यः; पुराणे च वर्णिनाम् आश्रमिणां च लोकफलभेदविशेषस्मरणात्। कारणान्तरात्तु इदं वक्ष्यमाणं फलं—स्वे स्वे यथोक्तलक्षणभेदे कर्मणि अभिरतः तत्परः संसिद्धिं स्वकर्मानुष्ठानात् अशुद्धिक्षये सति कार्येन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां संसिद्धिं लभते प्राप्नोति नरः अधिकृतः पुरुषः। किं स्वकर्मानुष्ठानत एव साक्षात् संसिद्धिः?—न। कथं तर्हि? स्वकर्मनिरतः सिद्धिं यथा येन प्रकारेण विन्दति, तत् शृणु ॥ ४५ ॥

यतः यस्मात् प्रवृत्तिः उत्पत्तिः चेष्टा वा यस्मात् अन्तर्यामिणः ईश्वरात् भूतानां प्राणिनां स्यात्, येन ईश्वरेण सर्वम् इदं ततं जगत् व्याप्तं, स्वकर्मणा पूर्वोक्तेन प्रतिवर्णं

रा॥प्रलयस्तथा।मत्तः परतरं नान्यत्किंचिदस्ति धनञ्जय' 'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना' 'मयाध्यक्षेण प्रकृतिस्सूयते सचराचरम्' 'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते' इत्यादिषु ॥ ४६ ॥

श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।

एवं त्यक्तकर्तृत्वादिको मदाराधनरूपस्स्वधर्मः—स्वेनैवोपादातुं योग्यो धर्मः; प्रकृतिसंसृष्टेन हि पुरुषेणेन्द्रियव्यापाररूपः कर्मयोगात्मको धर्मस्सुकरो भवति : अतः कर्मयोगाख्यः स्वधर्मो विगुणोऽपि परधर्मात्—इन्द्रियजयनिपुणपुरुषधर्मात् ज्ञानयोगात् सकलेन्द्रियनियमनरूपतया सप्रमादात् कदाचित्स्वनुष्ठितात् श्रेयान् ॥

तदेवोपपादयति—

स्वभावनियतं कर्म कुर्वन् नाप्नोति किल्बिषम् ॥ ४७

ता॥मामिति व्याख्यायत इति शङ्कायां'यतः' इत्यनुवादस्य प्रामाण्यार्थं पुरोवादं स्मारयति—मत्तएवेति। कारणत्वसर्वाधिकत्वसर्वव्यापित्वसर्वनियन्तृत्वादिषु यथासंभवं वचनानि योज्यानि ॥ ४६ ॥

एवं वर्णाश्रमधर्माणां स्वरूपेणापरित्याज्यत्वं परप्राप्तिसाधनत्वप्रकारश्च दर्शितः । अथ तेषामेव 'दैवमेवापरे यज्ञम्' इत्याद्युक्तप्रधानधर्मयोगेन नियमविशेषादियोगेन कर्मयोगान्तर्भूतानां ज्ञानयोगाधिकारिणामप्यपरित्याज्यत्वं प्रागुक्तं प्रत्यभिज्ञाप्यते—'श्रेयान्स्वधर्मः' इत्यादिभिः ।[1] अत्र स्वधर्मशब्दो न वर्णाश्रमनियतधर्मपरः, तथा सति परधर्मशब्देन वर्णान्तरादिधर्मोपादानप्रसङ्गात् : नच तद्युक्तं, तस्य निषिद्धत्वेनाधर्मतया स्वधर्मस्य तत्र प्रशस्ततमत्वलक्षणश्रेयस्त्ववचनायोगात्; नहि पापात्पुण्यं श्रेय इति कथ्येत : अत एव वेदबाह्यधर्माद्वैदिकस्य धर्मस्य श्रेयस्त्वमुच्यत इत्यपि न योज्यम्; क्षत्रियस्यार्जुनस्य 'श्रेयो भोक्तुं भैक्षम्' इत्युक्तब्राह्मणधर्मभूतप्रव्रज्याप्रतिषेधोऽयमिति चेन्न, तत्प्राप्तौ निषेधायोगात्, अप्राप्तौ पापत्वादेव दत्तोत्तरत्वात् । आपत्स्वनन्तरा च वृत्तिर्दुस्त्यजा। अतोऽत्र स्वधर्मपरधर्मशब्दौ प्राग्वत्कर्मयोगज्ञानयोगविषयौ व्याख्यातौ। 'एवम्'इत्यारभ्य'स्वधर्मः' इत्यन्तमेकं वाक्यम्, अन्यथोत्तरग्रन्थानन्वयप्रसङ्गात्। स्वशब्दस्य जातिविवक्षाव्युदासायाह—स्वेनैवेति। 'स्वभावनियतं कर्म' इत्यनन्तरोक्त्यनुसारेण कर्मविषयस्स्वधर्मशब्दः प्रकरणान्निष्कामकर्मविषयः । तत्र—स्वेनैवोपादातुं योग्य इत्युक्तं विवृणोति—प्रकृतीति। विगुणशब्दस्य त्याज्यत्वशङ्कापरत्वमाह—विगुणोऽपीति। गत्यन्तराभावादमुख्यत्कल्पत्वेनानुमतोऽपीत्यर्थः। स्वशब्दनिर्दिष्टात्कर्मयोगार्हादन्योऽत्र परः; स च ज्ञानयोगार्ह इत्यभिप्रायेणाह—इन्द्रियजयेति । सप्रमादस्य स्वनुष्ठितत्वं कथं स्यादित्यत्राह—कदाचिदिति ॥

'स्वभावनियतम्' इत्यत्र जातिनियतत्वशङ्काव्युदासायाह—तदेवेति । यथा विषतरुनिम्बतिन्त्रिण्यादिजातानां जन्तूनां स्वभावनियता आहारा इति भावः । किल्बिषशब्दोऽनिष्टतमत्वद्योतनाय

प्र पा ॥ * गा. ९-४ ॥
† गी. १०-८ ॥

१. गी. ३-३५॥
२. गी. २-५॥

शां॥तम् ईश्वरम् अभ्यर्च्य पूजयित्वा आराध्य केवलं ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं विन्दति मानवः ॥ ४६ ॥

यतः एवम् अतः—श्रेयान् प्रशस्यतरः स्वो धर्मः स्वधर्मः विगुणोऽपि इति अपिशब्दो द्रष्टव्यः । परधर्मात् स्वनुष्ठितात् । 'स्वभावनियतम्' इति यथा विषजातस्य (इव)

रा॥प्रकृतिसंसृष्टस्य इन्द्रियव्यापाररूपतया स्वभावत एव नियतत्वात्कर्मणः कर्म कुर्वन् किल्बिषं संसारं न प्राप्नोति, अप्रमादत्वात्कर्मणः; ज्ञानयोगस्य सकलेन्द्रियनियमनसाध्यतया सप्रमादत्वात्तन्निष्ठस्तु प्रमादात्किल्बिषं प्रतिपद्येतापि, अतः कर्मनिष्ठैव ज्यायसीति तृतीयाध्यायोक्तं स्मारयति॥ ४७ ॥

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८

अतस्सहजत्वेन सुकरमप्रमादं च कर्म सदोषं—सदुःखमपि न त्यजेत्; ज्ञानयोगयो-

---

ता॥संसारशब्देन तत्फलपर्यन्ततया व्याख्यातः। ज्ञानयोगनिष्ठासंभावितनिषेधाय वा, विशेषनिषेधश्शेषाभ्यनुज्ञापर इत्यभिप्रायेणवाह—ज्ञानयोगस्येति । अर्थान्तरपरत्वशङ्काव्युदासायादरातिशयविवक्षया, पुनरुक्तिपरिहाराय च—तृतीयाध्यायोक्तं स्मारयतीत्युक्तम् ॥ ४७ ॥

सहजत्वेन—वासनानियतत्वादित्यर्थः । ततः कथं त्याज्यत्वाभाव इत्यत्राह—सुकरमिति । दोषशब्देन पापविवक्षा न युक्ता, विहिते तदयोगात्; तथा च 'न त्यजेत्' इति न युक्तं, पापांशस्य सर्वैः परित्याज्यत्वात्; अतः कायक्लेशादिमात्रगर्भत्वमिह सदोषत्वमित्युच्यते, तावन्मात्रेऽप्यलसानां त्याज्यताबुद्धिस्स्यादित्यभिप्रायेणाह—सदुःखमपीति । एतेन कापिलमतान्वारोहेण 'सदोषमपि' इत्यनुवाद इति व्याख्यान्तरं निरस्तम्; मुमुक्षोः कथं शास्त्रीये श्रेयस्त्वेन चोक्ते क्षुद्रक्लेशासहत्वेन त्याज्यता-

---

शं॥कृमेः विषं न दोषकरं, तथा स्वभावनियतं कर्म कुर्वन् न आप्नोति किल्बिषं पापम् ॥

स्वभावनियतं कर्म कुर्वाणो विषजः इव कृमिः किल्बिषं न आप्नोतीति उक्तम्, परधर्मश्च भयावहः इति, अनात्मज्ञश्च 'न हि कश्चित् क्षणमपि अकर्मकृत् तिष्ठति' इति; अतः—सहजं सह जन्मनैव उत्पन्नं किं तत्? कर्म कौन्तेय सदोषमपि त्रिगुणात्मकत्वात् न त्यजेत् । सर्वारम्भाः आरभ्यन्त इति आरम्भाः, सर्वकर्माणि इत्येतत्—प्रकरणात् यः कश्चित् आरम्भः स्वधर्मः, परधर्मश्च ते सर्वे हि यस्मात् त्रिगुणात्मकत्वम् अत्र हेतुः त्रिगुणात्मकत्वात् दोषेण, धूमेन सहजेन अग्निरिव, आवृताः। सहजस्य कर्मणः स्वधर्माख्यस्य परित्यागेन परधर्मानुष्ठानेऽपि दोषात् नैवमुच्यते; भयावहश्च परधर्मः । न च शक्यते अशेषतः त्यक्तुम् अज्ञेन कर्म यतः, तस्मात् न त्यजेत् इत्यर्थः ॥

किम् अशेषतः त्यक्तुम् अशक्यं कर्म इति न त्यजेत्? किं वा सहजस्य कर्मणः त्यागे दोषो भवतीति? किं च अतः? यदि तावत् अशेषतः त्यक्तुम् अशक्यम् इति न त्याज्यं सहजं कर्म, एवं तर्हि अशेषतः त्यागे गुण एव स्यादिति सिद्धं भवति। सत्यम् एवम्; अशेषतः त्याग एव न उपपद्यते इति चेत् किं नित्यप्रचलितात्मकः पुरुषः, यथा सांख्यानां गुणाः? किं वा क्रियैव कारकं, यथा बौद्धानां स्कन्धाः क्षणप्रध्वंसिनः? उभयथाऽपि कर्मणः अशेषतः त्यागः न सम्भवति ॥

अथ तृतीयोऽपि पक्षः यदा करोति तदा सक्रियं वस्तु । यदा न करोति, तदा निष्क्रियं तदेव । तत्र एवं सति शक्यं कर्म अशेषतः त्यक्तुम् । अयं तु अस्मिन् पक्षे विशेषः—न नित्यप्रचलितं वस्तु, नापि क्रियैव कारकं किं तर्हि? व्यवस्थिते

रा॥ग्योऽपि कर्मयोगमेव कुर्वीतेत्यर्थः .सर्वारम्भाः,—कर्मारम्भाः ज्ञानारम्भाश्च हि दोषेण

त॥बुद्धिः॥अतः प्रसङ्गाभावात्प्रतिषेधो न युक्त इत्यत्राह—ज्ञानयोगयोग्योऽपीति।अपिशब्दोऽन्यस्य कैमुत्यज्ञापनार्थः।अक्लेशोपायदर्शने स्वाधिकारमप्रतिसंधाय तत्र प्रवृत्तिःस्यादिति ततो नियम्यत इत्यर्थः। सदुःखत्वनिर्दुःखत्वलक्षणवैषम्यमन्वारुह्याप्रमादत्वादिभिर्नियम उक्तः : अथ सदुःखत्वमपि द्वयोस्समानमित्युच्यते —'सर्वारम्भाहि' इत्यर्धेन । कर्मारम्भाः ज्ञानारम्भाश्चेत्यनेन सर्वशब्दस्यात्र प्रकृतशा-

शं॥द्रव्ये अविद्यमाना क्रिया उत्पद्यते.विद्यमाना च विनश्यति । शुद्धं तत् द्रव्यं शक्तिमत् अवतिष्ठते—इति एवम् आहुः काणादाः, तदेव च कारकम् इति। अस्मिन् पक्षे को दोषः इति ?

अयमेव तु दोषः यतस्तु अभागवतं मतम् इदम् । कथं ज्ञायते ? यतः आह भगवान् 'नासतो विद्यते भावः' इत्यादि । काणादानां हि असतः भावः, सतश्च अभावः, इति इदं मतम् अभागवतम् ॥

अभागवतमपि न्यायवच्चेत् को दोषः ? इति चेत् -उच्यते—दोषवत्तु इदं, सर्वप्रमाणविरोधात् । कथं?—यदि तावत् द्व्यणुकादि द्रव्यं प्राक् उत्पत्तेः अत्यन्तमेव असत्, उत्पन्नं च स्थितं कञ्चित् कालं पुनः अत्यन्तमेव असत्त्वम् आपद्यते, तथा च सति असदेव सत् जायते, सदेव असत्त्वम् आपद्यते, अभावः भावो भवति, भावश्च अभावः भवति : तत्र अभावः जायमानः प्राक् उत्पत्तेः शशविषाणकल्पः समवाय्यसमवायिनिमित्ताख्यं कारणम् अपेक्ष्य जायते इति । न च एवम् अभावः उत्पद्यते, कारणं च अपेक्षते, इति शक्यं वक्तुम् ; असतां शशविषाणादीनाम् अदर्शनात् । भावात्मकाश्चेत् घटादयः उत्पद्यमानाः, किंचित् अभिव्यक्तिमात्रे कारणम् अपेक्ष्य उत्पद्यन्ते इति शक्यं प्रतिपत्तुम् ॥

किंच—असतश्च सद्भावे सतश्च असद्भावे न क्वचित् प्रमाणप्रमेयव्यवहारेषु विश्वासः कस्यचित् स्यात् ; 'सत् सदेव असत् असदेव' इति निश्चयानुपपत्तेः ॥

किंच—उत्पद्यते इति द्व्यणुकादेः द्रव्यस्य स्वकारणसत्तासम्बन्धम् आहुः । प्राक् उत्पत्तेश्च असत्, पश्चात् कारणव्यापारम् अपेक्ष्य स्वकारणैः परमाणुभिः सत्तया च समवायलक्षणेन सम्बन्धेन सम्बध्यते । सम्बद्धं सत् कारणसमवेतं सत् भवति । तत्र वक्तव्यं;कथम् असतः स्वं कारणं भवेत्, सम्बन्धो वा केनचित् स्यात्? न हि वन्ध्यापुत्रस्य स्वं कारणं, सम्बन्धो वा केनचित् प्रमाणतः कल्पयितुं शक्यते ॥

ननु नैवं वैशेषिकैः अभावस्य सम्बन्धः कल्प्यते । द्व्यणुकादीनां हि द्रव्याणां स्वकारणसमवायलक्षणः सम्बन्धः सतामेव उच्यते इति ॥

न ; सम्बन्धात् प्राक् सत्त्वानभ्युपगमात् । न हि वैशेषिकैः कुलालदण्डचक्रादिव्यापारात् प्राक् घटादीनाम् अस्तित्वम् इष्यते । न च मृद एव घटाद्याकारप्राप्तिम् इच्छन्ति । ततश्च असत एव सम्बन्धः पारिशेष्यात् इष्टो भवति ॥

ननु असतोऽपि समवायलक्षणः सम्बन्धो न विरुद्धः ।

न ; वन्ध्यापुत्रादीनाम् अदर्शनात् । घटादेरेव प्रागभावस्य स्वकारणसम्बन्धो

गा।।—दुःखेन धूमेनाग्निरिवावृताः; इयांस्तु विशेषः—कर्मयोगस्सुकरोऽप्रमादश्च, ज्ञानयोगस्तद्विपरीतः—इति ॥ ४८ ॥

असक्तबुद्धिस्सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति ॥ ४९

ता॥स्त्रीयकात्स्न्र्यपरत्वमाह।दुःखसाम्ये सति किमन्यतरनियमेन? कथं च न तत्तस्य हेतुरित्यत्राह—इयानिति।कर्मारम्भेषु कायक्लेशमात्रं; ज्ञानारम्भेषु त्वत्यासन्नत्वेऽपि कफोणिगूढायमानप्रत्यग्विषयान्वेषणेन इन्द्रियमनोनियमनप्रयासो दुःखात्मक इति भावः ॥ ४८ ॥

शं॥भवति. न वन्ध्यापुत्रादेः, अभावस्य तुल्यत्वेऽपि. इति विशेषः अभावस्य वक्तव्यः। एकस्य अभावः द्वयोः अभावः, सर्वस्य अभावः, प्रागभावः, प्रध्वंसाभावः, इतरेतराभावः, अत्यन्ताभावः इति लक्षणतो न केनचित् विशेषो दर्शयितुं शक्यः । असति च विशेषे घटस्य प्रागभाव एव कुलालादिभिः घटभावम् आपद्यते, सम्बध्यते च भावेन कपालाख्येन स्वकारणेन, संबद्धश्च सर्वव्यवहारयोग्यश्च भवति. न तु घटस्यैव प्रध्वंसाभावः अभावत्वे सत्यपि, इति प्रध्वंसाद्यभावानां न क्वचित् व्यवहारयोग्यत्वं, प्रागभावस्यैव द्व्यणुकादिद्रव्याख्यस्य उत्पत्त्यादिव्यवहारार्हत्वम् इत्येतत् असमञ्जसम् ;अभावत्वाविशेषात् अत्यन्तप्रध्वंसाभावयोरिव ॥

ननु नैव अस्माभिः प्रागभावस्य भावापत्तिः उच्यते ।

भावस्यैव तर्हि भावापत्तिः : यथा घटस्य घटापत्तिः, पटस्य पटापत्तिः । एतदपि अभावस्य भावापत्तिवदेव प्रमाणविरुद्धम् ॥

सांख्यस्यापि यः परिणामपक्षः सोऽपि अपूर्वधर्मोत्पत्तिनाशाङ्गीकरणात् वैशेषिकपक्षात् न विशिष्यते । अभिव्यक्तितिरोभावाङ्गीकरणेऽपि अभिव्यक्तितिरोभावयोः विद्यमानत्वाविद्यमानत्वनिरूपणे पूर्ववदेव प्रमाणविरोधः ॥

एतेन कारणस्यैव संस्थानम् उत्पत्त्यादि इत्येतदपि प्रत्युक्तम् ॥

पारिशेष्यात्—सत् एकमेव वस्तु अविद्यया उत्पत्तिविनाशादिधर्मैः अनेकधा नटवत् विकल्प्यते इति। इदं भागवतं मतम् उक्तं 'नासतो विद्यते भावः'इत्यस्मिन् श्लोके, सत्प्रत्ययस्य अव्यभिचारात्, व्यभिचाराच्च इतरेषामिति ॥

कथं तर्हि आत्मनः अविक्रियत्वे अशेषतः कर्मणः त्यागः न उपपद्यते इति ?

यदि वस्तुभूताः गुणाः, यदि वा आविद्याकल्पिताः, तद्धर्मः कर्म । तत् आत्मनि अविद्याध्यारोपितमेव इति अविद्वान् ' न हि कश्चित् क्षणमपि अशेषतः त्यक्तुं शक्नोति' इति उक्तम् । विद्वांस्तु पुनः विद्यया अविद्यायां निवृत्तायां शक्नोत्येव अशेषतः कर्म परित्यक्तुम्, अविद्याध्यारोपितस्य शेषानुपपत्तेः । न हि तैमिरिकदृष्ट्या अध्यारोपितस्य द्विचन्द्रादेः तिमिरापगमेऽपि शेषः अवतिष्ठते । एवं च सति इदं वचनम् उपपन्नं 'सर्वकर्माणि मनसा ' इत्यादि, 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति च ॥ ४८ ॥

रा॥सर्वत्र—फलादिष्वसक्तबुद्धिः,जितात्मा—जितमनाः,परमपुरुषकर्तृत्वानुसंधानेनात्मकर्तृत्वे विगतस्पृहः, एवं त्यागादनन्यत्वेन निर्णीतेन संन्यासेन युक्तः कर्म कुर्वन् परमां नैष्कर्म्यसिद्धिमधिगच्छति—परमां ध्याननिष्ठां ज्ञानयोगस्यापि फलभूतामधिगच्छतीत्यर्थः ; वक्ष्यमाणध्यानयोगावाप्तिं सर्वेन्द्रियकर्मोपरतिरूपामधिगच्छति ॥ ४९ ॥

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५०

सिद्धिं प्राप्तः-आप्रयाणादहरहरनुष्ठीयमानकर्मयोगनिष्पाद्यध्यानसिद्धिं प्राप्तः,यथा—

ता॥'सर्वत्रासक्तबुद्धिः' इत्युक्तेऽपि पुनः 'विगतस्पृहः' इत्येतत्फलसङ्गनिवृत्तिरूपत्यागसहपठितकर्तृत्वत्यागविषयत्वौचित्यात् स्वप्नादिष्वपि स्वात्मनि कर्तृत्वानुसंधानप्रसङ्गनिवृत्तिरूपत्यागकाष्ठाविवक्षयेत्याह—आत्मकर्तृत्वे विगतस्पृहइति । 'संन्यासेनाधिगच्छति' इति न ज्ञानयोगादिपरं, 'कर्म न त्यजेत्' इति प्रकृतानन्वयात्, अध्यायारम्भोक्तसंन्यासविषयत्वौचित्याच्चेत्यभिप्रायेणाह—एवं त्यागादनन्यत्वेन निर्णीतेनेति । अत्र नैष्कर्म्यसिद्धिशब्दो न मोक्षविषयः, 'सिद्धिं प्राप्तः' इत्यादिना पुनः कर्तव्यविधानात्, नापि ज्ञानयोगमात्रविषयः, 'परमाम्' इति विशेषणान्नैष्कर्म्यशब्दमात्रेण च तद्विवक्षोपपत्तेः ; अतोऽत्र ज्ञाननिष्ठाफलप्रारम्भो विवक्षित इत्यभिप्रायेणाह—परमां ध्याननिष्ठामिति । 'नैष्कर्म्यसिद्धिम्' इति समासवशात्परमत्वविशेषणशक्त्या वा सिद्धं विवृणोति—ज्ञानयोगस्यापि फलभूतामिति । उक्तार्थपरत्वमुत्तरग्रन्थानुगुण्येनाह — वक्ष्यमाणध्यानयोगावाप्तिमित्यादिना । निर्गतकर्मा निष्कर्मा, तस्य भावो नैष्कर्म्यमिति व्युत्पत्तिं व्यनक्ति—सर्वेन्द्रियकर्मोपरतिरूपामिति॥

'सिद्धिं प्राप्तः' इत्यस्योक्तानुवादतां सप्रकारहेतुनिर्देशेनाह—आप्रयाणादिति। सिद्धिं प्राप्तस्य ब्रह्मप्राप्त्यभिधानात्तद्व्यतिरिक्तविषयत्वज्ञापनाय—ध्यानसिद्धिमित्युक्तम्।'यथा'इत्यस्यानन्तरग्रन्थानुसारेण

शं॥या कर्मजा सिद्धिः उक्ता ज्ञाननिष्ठायोग्यतालक्षणा तस्याः फलभूता नैष्कर्म्यसिद्धिः ज्ञाननिष्ठालक्षणा च वक्तव्येति श्लोकः आरभ्यते—असक्तबुद्धिः असक्ता सङ्गरहिता बुद्धिः अन्तःकरणं यस्य सः असक्तबुद्धिः सर्वत्र पुत्रदारादिषु सक्तिनिमित्तेषु, जितात्मा जितः वशीकृतः आत्मा अन्तःकरणं यस्य सः जितात्मा, विगतस्पृहः विगता स्पृहा तृष्णा देहजीवितभोगेषु यस्मात् सः विगतस्पृहः, यः एवम्भूतः आत्मज्ञः सः नैष्कर्म्यसिद्धिं निर्गतानि कर्माणि यस्मात् निष्क्रियब्रह्मात्मसम्बोधात् सः निष्कर्मा तस्य भावः नैष्कर्म्यं, नैष्कर्म्यं च तत् सिद्धिश्च सा नैष्कर्म्यसिद्धिः, निष्कर्मत्वस्य वा निष्क्रियात्मरूपावस्थानलक्षणस्य सिद्धिः निष्पत्तिः, तां नैष्कर्म्यसिद्धिं परमां प्रकृष्टां कर्मजसिद्धिविलक्षणां सद्यो मुक्त्यवस्थानरूपां संन्यासेन सम्यग्दर्शनेन, तत्पूर्वकेन वा सर्वकर्मसंन्यासेन, अधिगच्छति प्राप्नोति । तथा च उक्तं—'सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्ते' इति ॥ ४९ ॥

आ॥नैष्कर्म्यसिद्धिं नैष्कर्म्यफलां योगसिद्धिम् ॥ ४९ ॥

ज॥नैष्कर्म्यसिद्धिं मोक्षमिति केचित्; तदसत्, 'तदनन्तरं मां विशते' इति वाक्यशेषविरोधादिति भावेनान्यथा व्याचष्टे—नैष्कर्म्येति । नैष्कर्म्यार्था सिद्धिर्नैष्कर्म्यसिद्धिः । सा च योगस्येत्यर्थः ॥ ४९ ॥

रा॥येन प्रकारेण वर्तमानो ब्रह्म प्राप्नोति, तथा समासेन मे निबोध॥तदेव ब्रह्म विशेष्यते—

ता॥पुरुषव्यापारोपादेयप्रापकप्रकारपरतामाह—येन प्रकारेण वर्तमान इति।मे निबोध – मत्तो निश्चयेनावधारयेत्यर्थः । परमे फले ह्युपायो नितिष्ठति ; अतस्तदेवोपायपर्यवसानभूमितया निष्ठेत्युच्यत इत्यभिप्रायेणाह—तदेव ब्रह्म विशेष्यत इति । ज्ञानशब्दस्यात्रानन्तरोच्यमानध्यानविश्रान्तिमाह—

शं॥पूर्वोक्तेन स्वकर्मानुष्ठानेन ईश्वराभ्यर्चनरूपेण जनितां प्रागुक्तलक्षणां सिद्धिं प्राप्तस्य उत्पन्नात्मविवेकज्ञानस्य केवलात्मज्ञाननिष्ठारूपा नैष्कर्म्यलक्षणा सिद्धिः येन क्रमेण भवति तत् वक्तव्यमिति आह —सिद्धिं प्राप्तः स्वकर्मणा ईश्वरं समभ्यर्च्य तत्प्रसादजां कायेन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्तः—'सिद्धिं प्राप्तः' इति तदनुवादः उत्तरार्थः । किं तत् उत्तरं, यदर्थः अनुवादः इति ? उच्यते —यथा येन प्रकारेण ज्ञाननिष्ठारूपेण ब्रह्म परमात्मानम् आप्नोति, तथा तं प्रकारं ज्ञाननिष्ठाप्राप्तिक्रमं मे मवचनात् निबोध निश्चयेन अवधारय इत्येतत् । किं विस्तरेण ? न इति आह--समासेनैव संक्षेपेणैव हे कौन्तेय । यथा ब्रह्म प्राप्नोति तथा निबोधेति अनेन या प्रतिज्ञाता ब्रह्मप्राप्तिः ताम् इदंतया दर्शयितुम् आह—'निष्ठा ज्ञानस्य या परा'इति।निष्ठा पर्यवसानं परिसमाप्तिः इत्येतत् । कस्य? ब्रह्मज्ञानस्य या परा, कीदृशी सा ? यादृशम् आत्मज्ञानम् । कीदृक् तत् ? यादृशः आत्मा । कीदृशः सः ? यादृशो भगवता उक्तः, उपनिषद्वाक्यैश्च न्यायतश्च ॥

नतु विषयाकारं ज्ञानम् । न ज्ञानविषयः, नापि आकारवान् आत्मा इष्यते क्वचित् ।

ननु 'आदित्यवर्णं' 'भारूपः' 'स्वयं ज्योतिः'इति आकारवत्त्वम् आत्मनः श्रूयते । न; तमोरूपत्वप्रतिषेधार्थत्वात् तेषां वाक्यानाम्, द्रव्यगुणाद्याकारप्रतिषेधे आत्मनः तमोरूपत्वे प्राप्ते तत्प्रतिषेधार्थानि 'आदित्यवर्णम्'इत्यादीनि वाक्यानि। 'अरूपम्' इति च विशेषतः रूपप्रतिषेधात् । अविषयत्वाच्च 'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' 'अशब्दमस्पर्शम्' इत्यादेः । तस्मात् आत्माकारं ज्ञानम् इति अनुपपन्नम् ॥

कथं तर्हि आत्मनः ज्ञानम् ? सर्वं हि यद्विषयं यत् ज्ञानं, तत् तदाकारं भवति । निराकारश्च आत्मा इत्युक्तम् । ज्ञानात्मनोश्च उभयोः निराकारत्वे कथं तद्भावनानिष्ठा इति ? ।

न ; अत्यन्तनिर्मलत्वातिस्वच्छत्वातिसूक्ष्मत्वोपपत्तेः आत्मनः । बुद्धेश्च आत्मवत् नैर्मल्याद्युपपत्तेः आत्मचैतन्याकाराभासत्वोपपत्तिः । बुद्ध्याभासं मनः, तदाभासानि इ-

आ॥यथा येनोपायेन येन सिद्धिं प्राप्तो ब्रह्म प्राप्नोति, तथा निबोध । या सिद्धिर्ज्ञानस्य परा निष्ठा ॥ ५० ॥

ज॥'सिद्धिं प्राप्तः'इति योगसिद्धिप्राप्त्यनन्तरं ब्रह्मप्राप्तावुपायकथनं प्रतिज्ञायत इत्यन्यथाप्रतीतिनिरासार्थं व्याचष्टे—यथेति । ब्रह्माप्नोतीत्यनुवादमात्रम् । तथा तमुपायम् । प्रतीत एवार्थः किं न स्यादिति चेत्—न, सिद्धेर्ज्ञाननिष्ठात्मकत्वेनाभिधानात्, ज्ञानस्य च ब्रह्मप्राप्तावनपेक्षत्वादिति भावेन निष्ठेत्येतद्व्याचष्टे—येति ॥ ५० ॥

रा॥निष्ठा ज्ञानस्य या परेति । ज्ञानस्य ध्यानात्मकस्य या परा निष्ठा—परमप्राप्यमित्यर्थः ॥

ता॥ध्यानात्मकस्येति ॥ ५० ॥

शं॥न्द्रियाणि, इन्द्रियाभासश्च देहः। अतः लौकिकैः देहम् एव आत्मदृष्टिः क्रियते। देहचैतन्यवादिनश्च लोकायतिकाः 'चैतन्यविशिष्टः कायः पुरुषः' इत्याहुः । तथा च अन्ये इन्द्रियचैतन्यवादिनः,अन्ये मनश्चैतन्यवादिनः, अन्ये बुद्धिचैतन्यवादिनः।ततोऽपि आन्तरम् अव्यक्तम् अव्याकृताख्यम् अविद्यावस्थानम् आत्मत्वेन प्रतिपन्नाः केचित्।सर्वत्र बुद्ध्यादिदेहान्ते आत्मचैतन्याभासता आत्मभ्रान्तिकारणम् इत्यतश्च आत्मविषयं ज्ञानं न विधातव्यम्।किं तर्हि? नामरूपाद्यनात्माध्यारोपण निवृत्तिरेव कार्या, न आत्मचैतन्यविज्ञानं कार्यम्, अविद्याध्यारोपितसर्वपदार्थाकारैः अविशिष्टतया दृश्यमानत्वात् इति । अत एव हि विज्ञानवादिनो बौद्धाः विज्ञानव्यतिरेकेण वस्त्वेव नास्तीति प्रतिपन्नाः, प्रमाणान्तरनिरपेक्षतां च स्वसंविदितत्वाभ्युपगमेन । तस्मात् अविद्याध्यारोपितनिराकरणमात्रं ब्रह्मणि कर्तव्यं, न तु ब्रह्मविज्ञाने यत्नः, अत्यन्तप्रसिद्धत्वात् । अविद्याकल्पितनामरूपविशेषाकारापहृतबुद्धीनाम् अत्यन्तप्रसिद्धं सुविज्ञेयम् आसन्नतरम् आत्मभूतमपि,अप्रसिद्धं दुर्विज्ञेयम् अतिदूरम् अन्यदिव च प्रतिभाति। बाह्याकारनिवृत्तबुद्धीनां तु लब्धगुर्वात्मप्रसादानां न अतः परं सुखं सुप्रसिद्धं सुविज्ञेय स्वासन्नतरम् अस्ति । तथाचोक्तं 'प्रत्यक्षावगमं धर्म्यम्' इत्यादि ।

केचित्तु पण्डितंमन्याः 'निराकारत्वात् आत्मवस्तु न उपैति बुद्धिः । अतः दुस्साध्या सम्यग्ज्ञाननिष्ठा' इत्याहुः ।

सत्यम् एवं गुरुसम्प्रदायरहितानाम् अश्रुतवेदान्तानाम् अत्यन्तबहिर्विषयासक्तबुद्धीनां सम्यक्प्रमाणेषु अकृतश्रमाणाम् । तद्विपरीतानां तु लौकिकग्राह्यग्राहकद्वैतवस्तुनि बुद्धिः नितरां दुस्सम्पाद्या, आत्मचैतन्यव्यतिरेकेण वस्त्वन्तरस्य अनुपलब्धेः, यथा च 'एतत् एवमेव, न अन्यथा' इति अवोचाम । उक्तं च भगवता 'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इति । तस्मात् बाह्याकारभेदबुद्धिनिवृत्तिरेव आत्मस्वरूपावलम्बनकारणम् । न हि आत्मा नाम कस्यचित् कदाचित् अप्रसिद्धः प्राप्यः हेयः उपादेयो वा। अप्रसिद्धे हि तस्मिन् आत्मनि, स्वार्थाः सर्वाः प्रवृत्तयः व्यर्थाः प्रसज्येरन्। न च देहाद्यचेतनार्थत्वं शक्यं कल्पयितुम् । न च सुखार्थं सुखं, दुःखार्थं दुःखम् । आत्मावगत्यवसानार्थत्वाच्च सर्वव्यवहारस्य । तस्मात् यथा स्वदेहस्य परिच्छेदाय न प्रमाणान्तरापेक्षा, ततोऽपि आत्मनः अन्तरतमत्वात् तदवगतिं प्रति न प्रमाणान्तरापेक्षा। इति आत्मज्ञाननिष्ठा विवेकिनां सुप्रसिद्धा इति सिद्धम् ॥

येषामपि निराकारं ज्ञानम् अप्रत्यक्षं,तेषामपि ज्ञानवशेनैव ज्ञेयावगतिरिति ज्ञानम् अत्यन्तप्रसिद्धं सुखादिवदेव इति अभ्युपगन्तव्यम् ॥

जिज्ञासानुपपत्तेश्च—अप्रसिद्धं चेत् ज्ञानं, ज्ञेयवत् जिज्ञास्येत । यथा ज्ञेयं घटादिलक्षणं ज्ञानेन ज्ञातव्यम् आप्तुम् इच्छति, तथा ज्ञानमपि ज्ञानान्तरेण ज्ञातव्यम् आप्तुम् इच्छेत्। न च एतत् अस्ति । अतः अत्यन्तप्रसिद्धं ज्ञानं, ज्ञाताऽपि अत एव प्रसिद्धः इति ॥

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानन्नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममश्शान्तो ब्रह्मभूयाय कल्पते ॥ ५३

रा॥बुद्ध्या विशुद्धया—यथावस्थितात्मतत्त्वविषयया युक्तः, धृत्या आत्मानं नियम्य च विषयविमुखीकरणेन योगयोग्यं मनः कृत्वा,शब्दादीन् विषयांस्त्यक्त्वा—असन्निहितान् कृत्वा तन्निमित्तौ च रागद्वेषौ व्युदस्य, विविक्तसेवी—सर्वैर्ध्यानविरोधिभिर्विविक्ते देशे वर्तमानः, लघ्वाशी—अत्यशनानशनरहितः, यतवाक्कायमानसः—ध्यानाभिमुखीकृतकायवाङ्मनोवृत्तिः, ध्यानयोगपरो नित्यम् एवंभूतस्सन् आप्रयाणादहरहर्ध्यानयोगपरः,

ता॥बुद्धिशब्दोऽत्र प्रस्तुतब्रह्मशब्दाभिप्रेतविषयबुद्धिगोचरः, तस्याश्शुद्धिश्चासमग्रविषयत्वसंशयविपर्ययरूपदोषराहित्यमित्याह-यथावस्थितात्मतत्त्वविषयेति।'धृत्या'इतिपूर्वोक्तसप्रकारसात्त्विकधृतिपरामर्शमाह—विषयविमुखीकरणेनेति।अत्र धृत्या मनोनियमनं कर्मोक्तम्,अपि च पूर्वमेव त्यक्तविषयस्य कोऽसौ तदानींतनस्त्याग इत्यत्राह —असन्निहितान् कृत्वेति । विषयसन्निधिर्हि विजितेन्द्रियमपि क्षोभयेदिति भावः । 'रागद्वेषौ व्युदस्य' इति वैषयिकरागद्वेषयोर्व्युदासस्यापि तादात्विकविषयत्वाय 'वैराग्यं समुपाश्रितः' इत्यनेन पुनरुक्तिपरिहारायचाह—तन्निमित्ताविति । एतेन विषयासन्निधानफलप्रदर्शनम् । यद्वा विप्रकृष्टेष्वपि सूक्ष्मसङ्गो निरोद्धव्य इति भावः । विविक्तत्वं रहितत्वम् ; तत्प्रकृतोपयोगेन विशिनष्टि—सर्वैर्ध्यानविरोधिभिर्विविक्ते देश इति । 'लघ्वाशी' इत्यनेन पूर्वोक्तं 'नात्यश्नतः' इत्यादिकं स्मार्यत इत्याह—अत्यशनानशनरहितइति । 'धृत्यात्मानं नियम्यच' इत्यादिना 'यतवाक्कायमानसः' इत्यस्य पुनरुक्तिपरिहारायाह—ध्यानाभिमुखीकृतकायवाङ्मनोवृत्तिरिति । कायस्याभिमुखीकरणं स्थिरासनादिपरिग्रहः, वाचस्तु प्रणवादिव्यतिरिक्तवर्जनम्; मनसस्तु शुभाश्रयालम्बनम्। उक्तानां ध्यानयोगशेषत्वमाह—एवम्भूतस्सन्निति। नित्यशब्दविवक्षितमाह—आप्रयाणादहरहरिति । 'रागद्वेषौ व्युदस्य' इति वैषयिकरागद्वेषयोर्व्युदासोक्तेः 'वैराग्यं समुपाश्रितः'

प्र-पा ॥ १. गी. ६ १६ ॥

शं॥तस्मात् ज्ञाने यत्नो न कर्त्तव्यः, किंतु अनात्मनि आत्मबुद्धिनिवृत्तावेव । तस्मात् ज्ञाननिष्ठा सुसम्पाद्या ॥ ५० ॥

सा इयं ज्ञानस्य परा निष्ठा उच्यते, कथं कार्या इति—बुद्ध्या अध्यवसायलक्षणया विशुद्धया मायारहितया युक्तः सम्पन्नः, धृत्या धैर्येण आत्मानं कार्यकरणसंघातं नियम्य च नियमनं कृत्वा वशीकृत्य, शब्दादीन् शब्दः आदिः येषां तान् विषयान् त्यक्त्वा सामर्थ्यात् शरीरस्थितिमात्रहेतुभूतान् केवलान् मुक्त्वा ततः अधिकान् सुखार्थान् त्यक्त्वा इत्यर्थः। शरीरस्थित्यर्थत्वेन प्राप्तेषु रागद्वेषौ व्युदस्य परित्यज्य च॥ ५१ ॥

ततः—विविक्तसेवी अरण्यनदीपुलिनगिरिगुहादीन् विविक्तान् देशान् सेवितुं

रा॥वैराग्यं समुपाश्रितः—ध्येयतत्त्वव्यतिरिक्तविषयदोषावमर्शेन तत्रतत्र विरागतां वर्धयन्,अहंकारम्—अनात्मन्यात्माभिमानं,बलं-तद्वृद्धिहेतुभूतवासनाबलं,तन्निमित्तं दर्पं कामं क्रोधं परिग्रहं विमुच्य-निर्ममः,सर्वेष्वनात्मीयेष्वात्मीयबुद्धिरहितः,शान्तः—आत्मानुभवैकसुखः, एवंभूतो ध्यानयोगं कुर्वन् ब्रह्मभूयाय कल्पते—ब्रह्मभावाय कल्पते :सर्वबन्धनिर्मुक्तो यथावस्थितमात्मानमनुभवतीत्यर्थः ॥ ५१ ॥ ५३ ॥

---

ता॥इत्येतदाभिमानिकविषयम्,तत्र सम्यगुपाश्रयणं पूर्वसिद्धस्यापि सम्यगवस्थापनमित्यभिप्रायेण – विरागतां वर्धयन्नित्युक्तम्। एवमहंकारादिविमोचनेऽपि द्रष्टव्यम्। शरीरमनःप्राणादिबलानां योगविरोधित्वाभावात्-वासनाबलमिति विशेषितम्।दर्पोऽत्राहंकारबलहेतुकोऽङ्गीकर्तव्यानङ्गीकारः।योगित्वशान्तत्वादिनिमित्तोऽपि दर्पस्त्याज्यः 'हृष्टो दृप्यति दृप्तो धर्ममतिक्रामति' इति स्मरणात् । मनोवाक्कायव्यापारनिवृत्त्यादेरुक्तत्वाच्छान्तशब्दोऽत्र शमहेतुविशेषपर इत्याह – आत्मानुभवैकसुखइति । इन्द्रियव्यापारोपरतिः क्रोधादिनिवृत्तिश्च बाह्यसुखनिस्स्पृहत्वात्,तच्च प्रभूतात्मस्वसुखलाभादिति भावः। उक्तेषु सर्वेषु ध्यानयोगस्याङ्गित्वमाह -एवम्भूतो ध्यानयोगं कुर्वन्निति । ध्यानमेवात्र योगः ध्यानेनवा योगः । अनन्तरश्लोकार्थपरामर्शेन ब्रह्मशब्दस्यात्र शुद्धात्मविषयतामाह -सर्वबन्धेति ॥

---

प्र·पा ॥ १ ॥

---

शं॥शीलम् अस्य इति विविक्तसेवी, लघ्वाशी लघ्वशनशीलः विविक्तसेवालघ्वशनयोः निद्रादिदोषनिवर्तकत्वेन चित्तप्रसादहेतुत्वात् ग्रहणम्—यतवाक्कायमानसः वाक् च कायश्च मानसं च यतानि संयतानि यस्य ज्ञाननिष्ठस्य सः ज्ञाननिष्ठः यतिः यतवाक्कायमानसश्च स्यात्।एवम् उपरतसर्वकरणः सन् ध्यानयोगपरः ध्यानम् आत्मस्वरूपचिन्तनं योगः आत्मविषये एकाग्रीकरणं, तौ ध्यानयोगौ परत्वेन कर्तव्यौ यस्य सः ध्यानयोगपरः नित्यं नित्यग्रहणं मन्त्रजपाद्यन्यकर्तव्याभावप्रदर्शनार्थम् वैराग्यं विरागस्य भावः दृष्टादृष्टेषु विषयेषु वैतृष्ण्यं समुपाश्रितः सम्यक् उपाश्रितः नित्यमेव इत्यर्थः ॥ ५२ ॥

किंच—अहङ्करणम् अहङ्कारः देहादिषु तं, बलं सामर्थ्यं कामरागसंयुक्तं न इतरत् शरीरादिसामर्थ्यं, स्वाभाविकत्वेन तत्त्यागस्य अशक्यत्वात्—दर्पं, दर्पो नाम हर्षानन्तरभावी धर्मातिक्रमहेतुः 'हृष्टो दृप्यति दृप्तो धर्ममतिक्रामति' इति स्मरणात्: तं च, कामम् इच्छां क्रोधं द्वेषं परिग्रहम्,इन्द्रियमनोगतदोषपरित्यागेऽपि शरीरधारणप्रसङ्गेन धर्मानुष्ठाननिमित्तेन वा बाह्यः परिग्रहः प्राप्तः, तं च विमुच्य परित्यज्य, परमहंसपरिव्राजको भूत्वा, देहजीवनमात्रेऽपि निर्गतममभावः निर्ममः, अत एव शान्तः उपरतः, यः संहृतहर्षायासः यतिः ज्ञाननिष्ठः ब्रह्मभूयाय ब्रह्मभवनाय कल्पते समर्थो भवति ॥

---

आ॥ब्रह्मभूयाय कल्पते । ब्रह्मणि भावो ब्रह्मभूयम्, ब्रह्मणि स्थितिः सर्वदा तन्मनस्कतेत्यर्थः ॥ ५३ ॥

---

ज॥ब्रह्मभूयाय ब्रह्मत्वायेति प्रतीतिनिरासार्थं व्याचष्टे—ब्रह्मेति । इत्यर्थ इति शेषः । भावो न जन्मादीत्याशयेन विवृणोति ब्रह्मणीति । इयमपि न मुक्तिः, 'ब्रह्मभूतः' इति पुनर्भक्त्यादिलाभ ५ णादिति भावेनाह—सर्वदेति ॥ ५३ ॥

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥** ५४

रा॥ब्रह्मभूतः—आविर्भूतापरिच्छिन्नज्ञानैकाकारमच्छेषतैकस्वभावात्मस्वरूपः,'इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्' इति हि स्वशेषतोक्ताः प्रसन्नात्मा—क्लेशकर्मादिभिरकलुषस्वरूपो मद्यतिरिक्तं न कंचन भूतविशेषं प्रति शोचति न किंचन काङ्क्षति ; अपितु मद्यतिरिक्तेषु सर्वेषु भूतेषु अनादरणीयतायां समो निखिलं वस्तुजातं तृणवन्मन्यमानो मद्भक्तिं लभते परां—मयि सर्वेश्वरे निखिलजगदुद्भवस्थितिप्रलयलीले निरस्तसमस्तहेय-

ता॥एवं कर्मयोगादिसाध्यप्रत्यगात्मानुभवस्य परभक्त्यधिकारापादकत्वमुच्यते—'ब्रह्मभूतः' इति श्लोकेन । तदभिप्रायेण परशेषतैकस्वभावत्वस्याप्याविर्भाव उक्तः । योगसाध्यं ब्रह्माख्यमिह ब्रह्मत्वमित्यभिप्रायेणापरिच्छिन्नज्ञानाविर्भावोक्तिः । शेषत्वस्य स्वरूपानुबन्धित्वं प्रागेवोक्तमित्याह—**इतस्त्वन्यामिति** । 'रागादिदूषिते चित्ते नास्पदी मधुसूदनः' इत्याद्युक्तपरभक्त्यनर्हतानिवृत्तिः 'प्रसन्नात्मा' इत्युच्यत इत्याह—**क्लेशकर्मादिभिरकल्मषस्वरूप**इति। आदिशब्देन विपाकाशययोर्ग्रहणं, तयोरपि कालुष्यरूपत्वात्, 'क्लेशकर्मविपाकाशयैः' इति सन्नियोगशिष्टत्वाच्च । अविद्यास्मितादयः पञ्च—क्लेशाः; कर्म-पुण्यपापरूपं,जात्यायुर्भोगाः —विपाकाः,आशयाः संस्काराः। 'यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते' इति प्रागुक्तं 'न शोचति' इति परामृष्टम् । तथा 'यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः' इत्युक्तं न काङ्क्षति' इति स्मारितम्। अत्र न प्रहृष्यति' इति पाठान्तरमप्रसिद्धत्वादनङ्गीकृतम्। तत्रात्मानुभवसुखेन बाह्यवैतृष्ण्यं तावज्जायते परमात्मनस्तु प्रत्यगात्मनोऽप्यधिकसुखतया श्रुतत्वात्तदनुबुभूषा स्थायिनीत्यभिप्रायेण मद्यतिरिक्तशब्दः । शोककाङ्क्षानुदयहेतुः 'समः' इत्युच्यत इत्यभिप्रायेण—**अनादरणीयतायां सम**इत्युक्तम् । तुल्यानादर इत्यर्थः । परावरतत्त्वविवेकफलमन्यानादरसाम्यं व्यनक्ति—**निखिलमिति** । **वस्तुजात**मित्यनेन ब्रह्मादिस्तम्बपर्यन्तानामेव मेर्वपेक्षया माषसर्षपादीनामिवावान्तरोत्कर्षस्यानादरयोग्यत्वं सूचितम् । **तृणवदिति**—नहि रत्नपर्वतमारुरुक्षोः पलालकूटे सङ्गस्स्यादिति भावः । अत्र मच्छब्देन परभक्त्युत्पत्तिविवृद्ध्यर्थतया पूर्वत्र शास्त्रान्तरेषु च प्रपञ्चितानामुपासनदशायामनुसंधेयानां चाकाराणामभिप्रेतत्वमाह—**मयि सर्वेश्वर**इत्यादिभिः । **सर्वेश्वरइति**—ईशितव्यस्य बद्धस्य किं तथाभूतैः ईशितव्यान्तरैरिति भावः । **निखिलजगदुदयविभवलयलील**इति—'कारणं तु ध्येयः' इति हि श्रुतिरिति भावः । यद्वा करणकलेवरप्रदानादिभिर्महोपकारके चतुर्विधहेतुभूते तस्मिन् तिष्ठति सृष्टिसंहारकर्मतयैवावस्थितः कोऽन्यस्समाश्रयणीय इति भावः। **निरस्तसमस्तहेयगन्ध**इति — नह्यस्मिन्यथावत्प्रतीते वस्त्वन्तरेष्विवावज्ञावैमुख्यादिकारणमस्तीति

**प्र-पा॥**१. विष्णुधर्मे ९-१०. 'हिंसादिदूषित कायः केशवाराधनं क्षयम्। रागादिदूषिते मधुसूदन ॥ नव ध्नाति पदं हंसः कदाचित्कर्दमाम्भसि।नयोग्या केशवस्तुत्यै वाग्दुष्टाचानृतादिना ॥ ११ ॥ तमस्तनाशना यात्तेन्दोर्लेखा घनावृता । हिंसादिदूषितःकायः केशवाराधने कुतः॥१२॥ जनचित्तप्रसादाय जनभक्तिमिरावृतम् । तस्माच्छुद्धस्वभावेन सत्यवाक्येनच द्विज'॥ १३ ॥ इत्यादि ॥

२. गी. ६-२२ ॥

३. अथर्वशिखोपनिषदि ॥

शं॥अनेन क्रमेण—ब्रह्मभूतः ब्रह्म प्राप्तः प्रसन्नात्मा लब्धाध्यात्मप्रसादस्वभावः न शोचति, किंचित् अर्थवैकल्यम् आत्मनः वैगुण्यं वा उद्दिश्य न शोचति न सन्तप्यते, न काङ्क्षति । न हि अप्राप्तविषयाकाङ्क्षा ब्रह्मविदः उपपद्यते ; अतः ब्रह्मभूतस्य अयं स्वभावः

रा॥गन्धे ऽनवधिकातिशयासंख्येयकल्याणगुणगणैकताने लावण्यामृतसागरे श्रीमति पुण्डरीकनयने स्वस्वामिन्यत्यर्थप्रियानुभवरूपां परां भक्तिं लभते ॥ ५४ ॥

तत्फलमाह—

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५

ता॥भावः।**अनवधिके**त्यादि —एकैकगुणप्रकर्षोऽपि चित्ताकर्षकः : किमुतैवं संभूत इति भावः।यद्धि परं सुलभं च तदेव ह्याश्रयणीयमिति सौलभ्योपयुक्तगुणानामप्यत्र संग्रहः। **लावण्यामृतसागर**इति—शुभाश्रयविग्रहगुणोपलक्षणम् । **श्रीमती**ति—श्रीर्हि सर्वेषामाश्रयणीया, साप्येनं नित्यमाश्रितेति हृदयम्। श्रीयते श्रयते चेति श्रीशब्दो निरुक्तः।मतुम्नित्ययोगे। श्रुतिश्च—'[1]ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्यादिका। स्मर्यते च—'[2]नित्यैवैषा जगन्माता विष्णोश्श्रीरनपायिनी' इति। एतेनोपास्यत्वप्राप्यत्वादिकं सर्वं सपत्नीकस्येति ज्ञापितम् । आमनन्ति च रहस्याम्नायविद इममेवार्थं—'नित्यसन्निहितशक्तिः' इति । **पुण्डरीकनयन**इत्यवयवसौन्दर्योपलक्षणम् । '[4]तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति सर्वपापविमोक्षकामस्योपासनार्थतया पुण्डरीकाक्षत्वमप्युपदिष्टम् । '[5]चक्षुषा तव सौम्येन पूतास्मि' '[6]यं पश्येन्मधुसूधनः' इत्यादिषु च तद्वीक्षणस्य पावनतमत्वमुच्यत इति भावः । भक्त्युत्पत्त्यादौ सर्वमिदमेकतः, स्वामित्वं चैकतः, नचासावेकोनसर्वस्वामीत्यभिप्रायेणाह—**स्वस्वामिनी**ति ॥ ५४ ॥

**तत्फलमाहे**ति– अव्यवहितं व्यवहितं चेति शेषः । पूर्वग्रन्थोक्तजगत्कारणत्वलक्षितसर्वेश्वरा-

**प्र-पा** ॥ १. पुरुषसूक्ते ॥

२. वि-पु १-८-१७. 'नित्यैवैषा अनपायिनी।यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम'॥—श्रीविष्णुचित्तीये। अस्यार्थः—'नित्येति-जगत्पितुर्विष्णोरनपायिन्येषा जगन्मातृत्वेन तद्वन्नित्या. तस्याश्च विष्णोरिव आविर्भावतिरोभावौ स्तः । सा पूर्वम्भृगोस्सुतात्वेनाऽऽविर्भूता. पश्चादिन्द्रस्य दुर्वाससः शापात् तिरोभूत्वाऽमृतमथने प्रादुर्भूता, अतो न विरोधः।यथेति—सर्वगतो विष्णुर्यथा यत्स्वभावः, इयमपि तथा तत्स्वभावेति, विष्णोस्सर्वगतत्वसत्यज्ञानादिस्वरूपकल्याणगुणादीनामतिदेशः ; अथवा भगवान् विभुत्वेन सर्वगतः, अस्यास्तु शक्तिवशात् अणुत्वेऽपि तत्रतत्र सन्निधानात् सर्वगतत्वमुक्तम्'—इति ॥

३ ॥

४ छा. १-६-६ ॥

५. श्रीरामायणे-अरण्यकाण्डे. ७४. स. १३-श्लो. 'चक्षुषा तव सौम्येन पूतास्मि रघुनन्दन । गमिष्याम्यक्षयाल्लोकांस्त्वत्प्रसादादरिन्दम' ॥

६ ॥

शं॥**अनूद्यते** 'न शोचति न काङ्क्षति' इति।'न हृष्यति' इति वा पाठान्तरम्। **समः सर्वेषु भूतेषु**. आत्मौपम्येन सर्वभूतेषु सुखं दुःखं वा सममेव पश्यति इत्यर्थः । न आत्मसमदर्शनम् इह, तस्य वक्ष्यमाणत्वात्'भक्त्या मामभिजानाति' इति। यः एवंभूतः ज्ञाननिष्ठः, **मद्भक्तिं** मयि परमेश्वरे भक्तिं भजनं **पराम्** उत्तमां ज्ञानलक्षणां चतुर्थीं **लभते**.'चतुर्विधा भजन्ते माम्' इति हि उक्तम् ॥ ५४ ॥

ततः ज्ञानलक्षणया—**भक्त्या माम् अभिजानाति यावान्** अहम् उपाधिकृतविस्तरभेदैः,**यश्च** अहं **अस्मि** विध्वस्तसर्वोपाधिभेदः उत्तमः पुरुषः आकाशकल्पः,तं **माम्** अद्वैतं चैतन्यमत्रैकरसम् अजरम् अभयम् अनिधनं **तत्त्वतः अभिजानाति**।**ततः माम्** एवं तत्त्व-

रा॥स्वरूपतः स्वभावतश्च योऽहं,गुणतो विभूतितोऽपि यावांश्चाहं,तं माम् एवंरूपया भक्त्या तत्त्वतोऽभिजानाति;मां तत्त्वतो ज्ञात्वा तदनन्तरं-तत्त्वज्ञानानन्तरं ततो भक्तितो मां विशते—प्रविशति : तत्त्वतस्स्वरूपस्वभावगुणविभूतिदर्शनोत्तरकालभाविन्या अनवधिकातिशयभक्त्या मां प्राप्नोतीत्यर्थः ; अत्र तत इति प्राप्तिहेतुतया निर्दिष्टा भक्तिरेवा-

ता॥स्वयधर्म्यभिप्रायेण 'यः'इत्यस्यार्थमाह—**स्वरूपत** इति। विधिनिषेधरूपशोधकवाक्यावसितसर्वविद्यानुसंधेयस्वरूपनिरूपकधर्मयोगः—**स्वभावत** इति निर्दिष्टः । स्वरूपनिरूपकधर्माभावे अनिरूपितस्वरूपतया निःस्वभावमेव वस्तु स्यात् । स्वरूपशब्दस्स्वरूपनिरूपकधर्मपरः, स्वभावशब्दस्तु सौलभ्यपर इति केचित्।यावच्छब्दोहि प्रकर्षनिकर्षपरामर्शयोग्याकारविषयो युक्त इत्यभिप्रायेणाह —**गुणतो विभूतितोऽपी**ति। **यावांश्चाह**मिति-गुणशब्दोऽत्र निरूपितस्वरूपविशेषकज्ञानशक्त्यादिसमस्तधर्मविषयः। 'यावान्यश्च' इत्यनयोर्व्युत्क्रमेण व्याख्यानं बुद्ध्यारोहक्रमप्रदर्शनार्थम् । 'तत्त्वतः' इत्यस्य 'यावान्यश्च' इत्यत्रानपेक्षणात् ' अभिजानाति ' इत्यत्र संशयादिव्युदासाय तदपेक्षणाच्च —**तत्त्वतोऽभिजानाती**ति योजितम् ! 'मां तत्त्वतोऽभिजानाति' इत्युक्तस्यैव ' मां तत्त्वतो ज्ञात्वा ' इत्यनुभाषणमुपायभूतस्यापि स्वाद्दुतमतया सुदुर्लभत्वेनादरातिशयार्थम् । 'तत्त्वतो ज्ञात्वा' इत्यनेनैव आनन्तर्यसिद्ध्यर्थहेतुपौष्कल्यज्ञापकानुवादस्य सिद्धत्वात्,'तदनन्तरम्' इत्यनेनैव प्रवेशस्यानन्तर्यकण्ठोक्तेः,'भक्त्या त्वनन्यया' इत्यादौ प्रवेशेऽपि हेतुतया भक्तेरेव प्रागुक्तत्वाच्च—**ततो भक्तितो मां विशते** इत्येवान्वयो दर्शितः। प्रवेष्टुम्'इति प्रागुक्तैकार्थ्यज्ञापनाय पदसिद्धये च—**प्रविशती**त्युक्तम् । यथावज्ज्ञानमपि काष्ठाप्राप्तभक्तेः। अन्योन्याश्रयणं च भक्तेः पर्वभेदात्परिहृतम् । सैव तु तथाविधावस्था साक्षान्मोक्षसाधनमित्याह—**तत्त्वत**इत्यादिना । दर्शनशब्देनानुभाषणात् 'तत्त्वतोऽभिजानाति' इत्यस्य साक्षात्कारपरत्वं व्यञ्जितम्। परभक्त्यापि तत्त्वज्ञानमेव साध्यं, तदेव तु साक्षान्मोक्षसाधनमिति कुदृष्टिमतमपाकरोति —**अत्रे**ति । एवकारेण दर्शनव्यवच्छेदः । यद्यप्यत्र भक्तिशब्दो व्यवहितः, तत्त्वज्ञानं त्वव्यवहितं, तथापि व्यवहितपरामर्श एव युक्तः : अन्यथा 'तत्त्वतो ज्ञात्वा'इत्यादिना पुनरुक्तिप्रसङ्गात् । अत्र दर्शनजनकभ-

शं॥ततः ज्ञात्वा विशते तदनन्तरं मामेव ज्ञानानन्तरम्।नात्र ज्ञानप्रवशे क्रिये भिन्ने विवक्षिते 'ज्ञात्वा विशते तदनन्तरम्' इति । किं तर्हि !—फलान्तराभावात् ज्ञानमात्रमेव, ' क्षेत्रज्ञं चापि मां विद्धि' इति उक्तत्वात् ॥

ननु विरुद्धम् इदं उक्तम् 'ज्ञानस्य या परा निष्ठा तया माम् 'अभिजानाति' इति। कथं विरुद्धम् इति चेत्,उच्यते-यदैव यस्मिन् विषये ज्ञानम् उत्पद्यते ज्ञातुः,तदैव तं विषयम् अभिजानाति ज्ञाता इति न ज्ञाननिष्ठां ज्ञानावृत्तिलक्षणाम् अपेक्षते इति ; अतश्च ज्ञानेन न अभिजानाति, ज्ञानावृत्त्या तु ज्ञाननिष्ठया अभिजानातीति ॥

नैष दोषः ; ज्ञानस्य स्वात्मोत्पत्तिपरिपाकहेतुयुक्तस्य प्रतिपक्षविहीनस्य यत् आत्मानुभवनिश्चयावसानत्वं तस्य निष्ठाशब्दाभिलापात् । शास्त्राचार्योपदेशेन ज्ञानोत्पत्तिपरिपाकहेतुसहकारिकारणं बुद्धिविशुद्धत्वादि अमानित्वादिगुणं च अपेक्ष्य जनितस्य क्षेत्रज्ञपरमात्मैकत्वज्ञानस्य कर्तृत्वादिकारकभेदबुद्धिनिबन्धनसर्वकर्मसंन्याससहितस्य स्वात्मानुभवनिश्चयरूपेण यत् अवस्थानं, सा परा ज्ञाननिष्ठा इति उच्यते । सा इयं ज्ञाननिष्ठा आर्तादिभक्तित्रयापेक्षया परा चतुर्थी भक्तिरिति उक्ता। तया परया भक्त्या भगवन्तं तत्त्वतः अभिजानाति, यदनन्तरमेव ईश्वरक्षेत्रज्ञभेदबुद्धिः अशेषतः निवर्तते। अतः

रा॥अभिधीयते,*'भक्त्या त्वनन्यया शक्यः' इति तस्या एव तत्त्वतः प्रवेशहेतुत्वाभिधानात्॥

एवं वर्णाश्रमोचितनित्यनैमित्तिककर्मणां परित्यक्तफलादिकानां परमपुरुषाराधनरूपाणामनुष्ठितानां विपाक उक्तः; इदानीं काम्यानामपि कर्मणामुक्तेनैव प्रकारेणानुष्ठितानां स एव विपाक इत्याह—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥　　५६

न केवलं नित्यनैमित्तिकानि कर्माणि, अपितु सर्वाणि काम्यान्यपि कर्माणि. मद्व्यपाश्रयः—मयि संन्यस्तकर्तृत्वादिकः, कुर्वाणो मत्प्रसादाच्छाश्वतं पदमव्ययम्—अविकलं प्राप्नोति; पद्यत इति पदं—मां प्राप्नोतीत्यर्थः ॥५६॥

ता॥क्त्यनुवादे प्रयोजनाभावात्सैव तदुत्तरावस्था परामृश्यत इति भावः।प्रागुक्तं हेतुमाह—भक्त्यात्वनन्ययेति।अयमभिप्रायः—उपक्रमन्यायात्पूर्वं प्रबलं,स्पष्टास्पष्टयोश्च स्पष्टानुसारेणान्यद्गमयितव्यम्—इति॥

पूर्वत्र ज्ञाननिष्ठोक्ता, अनन्तरं कर्मनिष्ठोच्यत इति शङ्काव्युदासाय पूर्वत्रापि कर्मनिष्ठायामेवावान्तरविशेषविपक्तिमनुवदन् संगतिमाह—एवमिति न विपाकोऽत्र पूर्वश्लोकद्वयोक्तपरभक्तिपरज्ञानपरमभक्तिपर्यन्तः । विहितकर्मणां पूर्वमुक्तत्वात्सर्वकर्माण्यपीति निषिद्धानुष्ठानं भगवदनन्यतारतुल्यर्थमुपक्षिप्यत इति स्वैराभिलाषिशङ्करादिमतमपाकरोति—इदानीं काम्यानामपि कर्मणामिति । सर्वशब्दोऽत्र शास्त्रीयेष्वेवानुक्तसंग्रहणार्थ इति भावः । तदेव विवृणोति—नकेवलमित्यादिना । पूर्वश्लोकस्थप्राप्यमेवात्रापि सविशेषणपदशब्देन निर्दिष्टमित्यभिप्रायेण निर्वक्ति—पद्यतइति ॥ ५६ ॥

प्र-पा ॥ * गी. ११-५४ ॥

शां॥ज्ञाननिष्ठालक्षणया भक्त्या माम् अभिजानातीति वचनं न विरुध्यते।अत्र च सर्वं निवृत्तिविधायि शास्त्रं वेदान्तेतिहासपुराणस्मृतिलक्षणं न्यायप्रसिद्धम् अर्थवत् भवति—'विदित्वा—व्युत्थायाथ भिक्षाचर्यं चरन्ति' 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' 'न्यास एवात्यरेचयत्' इति । 'संन्यासः कर्मणां न्यासः' 'वेदानिमं च लोकममुं च परित्यज्य' 'त्यज धर्ममधर्मं च' इत्यादि । इह च प्रदर्शितानि वाक्यानि । न च तेषां वाक्यानाम् आनर्थक्यं युक्तम्; न च अर्थवादत्वं,स्वप्रकरणस्थत्वात्, प्रत्यगात्माविक्रियस्वरूपनिष्ठत्वाच्च मोक्षस्य। न हि पूर्वसमुद्रं जिगमिषोः प्रातिलोम्येन प्रत्यक्समुद्रंजिगमिषुणा समानमार्गत्वं संभवति । प्रत्यगात्मविषयप्रत्ययसन्तानकरणाभिनिवेशश्च ज्ञाननिष्ठा ; सा च प्रत्यक्समुद्रगमनवत् कर्मणा सहभावित्वेन विरुध्यते । पर्वतसर्षपयोरिव अन्तरवान् विरोधः प्रमाणविदां निश्चितः । तस्मात् सर्वकर्मसंन्यासेनैव ज्ञाननिष्ठा कार्या इति सिद्धम् ॥ ५५ ॥

स्वकर्मणा भगवतः अभ्यर्चनभक्तियोगस्य सिद्धिप्राप्तिः फलं ज्ञाननिष्ठायोग्यता, यन्निमित्ता ज्ञाननिष्ठा मोक्षफलावसाना । सः भगवद्भक्तियोगः अधुना स्तूयते शास्त्रार्थोपसंहारप्रकरणे शास्त्रार्थनिश्चयदार्ढ्याय—सर्वकर्माण्यपि प्रतिषिद्धान्यपि सदा कुर्वाणः अनुतिष्ठन् मद्व्यपाश्रयः अहं वासुदेवः ईश्वरः व्यपाश्रयो व्यपाश्रयणं यस्य सः मद्व्य-

आ॥पुनरन्तरङ्गसाधनान्युक्त्वोपसंहरति—सर्वकर्माणीत्यादिना ॥ ५६ ॥

ज॥उत्तरग्रन्थस्य संगतिं सूचयंस्तात्पर्यमाह—पुनरिति । उपसंहरति—शास्त्रमिति शेषः॥ ५६॥

रा॥यस्मादेवं, तस्मात्—

**चेतसा सर्वकर्माणि मयि सन्न्यस्य मत्परः ।**
**बुद्धियोगमुपाश्रित्य मच्चित्तस्सततं भव ॥** ५७

चेतसा—आत्मनो मदीयत्वमन्नियाम्यत्वबुद्ध्या, उक्तं हि *'मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा' इति; सर्वकर्माणि सकर्तृकाणि साराध्यानि मयि संन्यस्य मत्परः—अहमेव फलतया प्राप्य इत्यनुसंदधानः कर्माणि कुर्वन्निममेव बुद्धियोगमुपाश्रित्य सततं मच्चित्तो भव ॥ ५७ ॥

**मच्चित्तस्सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।**
**अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥** ५८

एवं मच्चित्तस्सर्वकर्माणि कुर्वन् सर्वाणि सांसारिकाणि दुर्गाणि मत्प्रसादादेव तरि-

---

ता॥उक्तं परमपुरुषार्थसाधनत्वमनन्तरोपायानुशासनहेतुरित्याह—यस्मादेवमिति । चेतश्शब्दसाफल्याय तदभिप्रेतं चेतसो भगवति कर्मसंन्यासकरणत्वं येन प्रकारेण,तमाह—आत्मनो मदीयत्वमन्नियाम्यत्वबुद्ध्येति । अत्र चेतश्शब्दस्यैव तात्पर्यं प्राचीनसविशेषणनिर्देशेन स्थापयति—उक्तंहीति। अध्यात्मचेतसा—परशेषत्वादिविशेषितयथावस्थितात्मगोचरबुद्ध्येत्यर्थः। सर्वशब्देन स्वरूपकात्स्न्र्यवदनुबन्धिकात्स्न्र्यमपि प्रागुक्तप्रकारेणाभिप्रेतमित्याह—सकर्तृकाणि साराध्यानीति । बुद्धियोगशब्देन मुमुक्षोरसाधारणं कर्तृत्वानुसंधानादिकं सर्वं प्रत्यभिज्ञाप्यत इत्याह—इममेव बुद्धियोगमिति॥५७॥

'मच्चित्तस्सर्वदुर्गाणि'इत्यत्र मच्चित्तशब्देन पूर्वश्लोकोक्तस्यैवानुवादात्तत्र च बुद्धिविशेषविशिष्टकर्मविधिपरत्वादुत्तरेष्वपि ग्रन्थेषु युद्धाख्यस्वधर्मप्रोत्साहनस्यैव स्फुटत्वादिहापि तद्विवक्षामाह—एवं मच्चित्तस्सर्वकर्माणि कुर्वन्निति । मच्चित्तत्वमात्रस्य विधेयत्वे अनन्तरं युद्धनिवृत्त्यध्यवसायप्रतिक्षेपो न संगच्छत इति भावः। दुर्गशब्दस्य गिरिवनजलादिदुर्गेषु प्रसिद्धिप्रकर्षात्क्षत्रियस्य चार्जुनस्य युयुत्सोस्तन्निस्तारापेक्षासंभवात्तद्विषयत्वशङ्कामप्यपाकर्तुं पूर्वापरानुरोधेन—सांसारिकाणीति विशेषितम् । 'मत्प्रसादात्' इत्यनेन व्युत्पत्त्यनुशासनश्रुतिस्मृत्यादिविरुद्धापूर्वादिकल्पनाव्युदासः, स्वस्य फलप्रदाने प्रतिबन्धनिवृत्त्यादिमात्रसाकाङ्क्षत्वं च सूच्यत इत्यभिप्रायेणाह—मत्प्रसादादेवेति । एवं नित्यनैमित्तिककाम्यरूपाणां कर्मणां बुद्धिविशेषनियमादियोगेन कर्मयोगशब्दितानां परम्परया परिपूर्णभगवत्प्राप्तिपर्यन्तं विपाकमुपपाद्य सर्वथा कर्मयोग एव ते कर्तव्य इति निगमितम् । अथ तदकरणे

---

प्र-पा ॥ * गी. ३ ३० ॥

---

शं॥पाश्रयः, मय्यर्पितसर्वभावः इत्यर्थः। सोऽपि मत्प्रसादात् मम ईश्वरस्य प्रसादात् अवाप्नोति शाश्वतं नित्यं वैष्णवं पदम् अव्ययम् ॥ ५६ ॥

यस्मात् एवम्—चेतसा विवेकबुद्ध्या सर्वकर्माणि दृष्टादृष्टार्थानि मयि ईश्वरे संन्यस्य 'यत् करोषि यदश्नासि' इति उक्तन्यायेन, मत्परः अहं वासुदेवः परो यस्य तव सः त्वं मत्परः सन् मय्यर्पितसर्वात्मभावः बुद्धियोगं समाहितबुद्धित्वं बुद्धियोगः तं बुद्धियोगम् अपाश्रित्य अपाश्रयः अनन्यशरणत्वं मच्चित्तः मय्येव चित्तं यस्य सः त्वं मच्चित्तः सततं सर्वदा भव ॥ ५७ ॥

मच्चित्तः सर्वदुर्गाणि सर्वाणि दुस्तराणि संसारहेतुजातानि मत्प्रसादात् तरिष्यसि

रा॥ष्यसि अथ त्वम्, अहंकारात्—अहमेव कृत्याकृत्यविषयं सर्वं जानामीति भावात्, मदुक्तं न श्रोष्यसि चेत्, विनङ्क्ष्यसि विनष्टो भविष्यसि; नहि कश्चिन्मद्व्यतिरिक्तः कृत्स्नस्य प्राणिजातस्य कृत्याकृत्ययोर्ज्ञाता प्रशासिता वास्ति ॥ ५८ ॥

यद्यहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९

यद्यहंकारम् आत्मनि हिताहितज्ञाने स्वातन्त्र्याभिमानम् आश्रित्य मन्नियोगमनादृत्य न योत्स्य इति मन्यसे, एष ते स्वातन्त्र्यव्यवसायो मिथ्या भविष्यति ; यतः प्रकृतिस्त्वां युद्धे नियोक्ष्यति—मत्स्वातन्त्र्योद्विग्नं त्वामज्ञं प्रकृतिर्नियोक्ष्यति ॥ ५९ ॥

तदुपपादयति—

ता॥प्रत्यवायमाह—'अथचेत्' इत्यर्धेन। हितवचनानादरस्य निमित्तभूतमहङ्कारविशेषमाह —**अहमेव कृत्याकृत्यविषयं सर्वं जानामीति** भावादिति । **न श्रोष्यसीति**—श्रूयमाणेऽपि श्रुतफलनिवृत्त्यभिप्रायम्। 'विनङ्क्ष्यसि' इत्यनेनानादिकालमनुवृत्तस्यात्मनाशस्योत्तरकालेऽप्यनुवृत्तिर्विवक्षितेत्यभिप्रायेणाह—**नष्टो भविष्यसीति**। 'बुद्धिनाशात्प्रणश्यति' इति प्रागुक्तप्रत्यभिज्ञापनमिति भावः। अश्रवणादिनिदानमाप्तान्तरादिसम्भवमपाकुर्वन् 'विनङ्क्ष्यसि' इत्यस्य शापवचनतुल्यताव्यावृत्त्यर्थं स्वस्यैवाप्ततमत्वकथनेन स्वोपदिष्टस्यार्थस्थितिरूपतायामभिप्रायमाह—**नहि कश्चिदिति**। अन्ये हि वक्तारो मया वाञ्चिताः परिमितविषयं किंचिद्वदन्ति; अहं तु सर्वस्याधिकारिणस्सर्वविधहिताहितवेदी; यानि च परोक्तानि शास्त्राण्यनुक्तानि च च्छन्दांसि, तान्यपि मदाज्ञारूपतयैव प्रमाणभूतानीति भावः ॥ ५८ ॥

एवमश्रवणफलभूतयुद्धनिवृत्तेर्विनाशहेतुत्वमुक्तम्; अथ युद्धनिवृत्तेरेवाशक्यत्वमुच्यते, किंच भवतु कर्मयोगो मया कर्तव्यः ;युद्धव्यतिरिक्त किमपि कर्मयोगान्तरमुपाददानस्य मे विनाशो न स्यादिति शङ्कामपाकरोति—' यद्यहङ्कारम् ' इति श्लोकेन। अहंकारं युद्धनिवृत्त्यानुगुण्येन विशिनष्टि—**आत्मनि हिताहितेति**। अहंकाराश्रयणफलमाह—**मन्नियोगमनादृत्येति**। 'न श्रोष्यसि' इत्यस्यैवायमर्थः। 'एषः' इत्यनेन परामृष्टमाह—**स्वातन्त्र्यव्यवसाय** इति। स्वातन्त्र्याभिमानगर्भस्तन्मूलो वा व्यवसायः स्वातन्त्र्यव्यवसायः। तदुभयं 'मन्यसे' इत्यनेन 'अहंकारमाश्रित्य' इत्यनेन च सूचितम्। प्रकृतिर्नियोक्ष्यतीत्ययुक्तम्, अचेतनत्वात्तस्याः, चेतनव्यापारत्वाच्च नियोगस्येति शङ्कामुपालम्भाभिप्रायेण परिहरति—**मत्स्वातन्त्र्योद्विग्नं त्वामिति**। मदुक्तकरणे सर्वज्ञस्य मे सर्वं भरस्स्यात्; मन्नियोगातिक्रमे तु मय्युदासीने प्रकृतिपरतन्त्रस्त्वमहितेष्वेव प्रवृत्स्यसीति भावः ॥ ५९ ॥

पुनरुक्तिपरिहारायाह —**तदुपपादयतीति**। प्रकृतेः प्रेरकत्वप्रकारमवान्तरव्यापारेण दर्शयतीत्यर्थः। 'प्रकृतिः' इति निर्दिष्ट एवायमर्थस्स्वभावशब्देनानूदितः। स्वभावशब्दश्च 'स्वभावप्रभवैर्गुणैः'

शां॥अतिक्रमिष्यसि। अथ चेत् यदि त्वं मदुक्तम् अहङ्कारात् 'पण्डितः अहम्' इति न श्रोष्यसि न ग्रहिष्यसि, ततः त्वं विनङ्क्ष्यसि विनाशं गमिष्यसि ॥ ५८ ॥

इदं च त्वया न मन्तव्यं ' स्वतन्त्रः अहं किमर्थं परोक्तं करिष्यामि? ' इति—यदि चेत् त्वम् अहङ्कारम् आश्रित्य न योत्स्ये इति न युद्धं करिष्यामि इति मन्यसे चिन्तयसि निश्चयं करोषि, मिथ्या एषः व्यवसायः निश्चयः ते तव, यस्मात् प्रकृतिः क्षत्रियस्वभावः त्वां नियोक्ष्यति ॥ ५९ ॥

**स्वभावजेन कौन्तेय निबद्धस्स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥** ६०

रा॥स्वभावजं हि क्षत्रियस्य कर्म शौर्यम्, स्वभावजेन शौर्याख्येन स्वेन कर्मणा निबद्धः तत एवावशः परैर्धर्षणमसहमानस्त्वमेव तद्युद्धं करिष्यसि, यदिदानीं मोहात्—अज्ञानात् कर्तुं नेच्छसि ॥ ६० ॥

सर्वं हि भूतजातं सर्वेश्वरेण मया पूर्वकर्मानुगुण्येन प्रकृत्यनुवर्तने नियमितं, तच्छृणु;

**ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥** ६१

ईश्वरः—सर्वनियमनशीलो वासुदेवः सर्वभूतानां हृद्देशे—सकलप्रवृत्तिनिवृत्तिमूलज्ञानोदयप्रदेशे तिष्ठति, कथं किं कुर्वंस्तिष्ठति? यन्त्रारूढानि सर्वभूतानि मायया

---

ता॥इत्यत्र व्याख्यातः।प्रकृतिशब्दस्यात्र देहाद्याकारपरिणतप्रकृतिविषयत्वेऽपि स्वभावशब्दः पूर्वोक्तार्थ एव।'शौर्यं तेजः' इत्यादिकं स्मारयति—**स्वभावजं** हीति। **स्वेन**—क्षत्रियासाधारणेनेत्यर्थः। शौर्यं—निर्भयप्रवेशसामर्थ्यं; तेन तन्मूलं कर्मात्र वासनावशाद्रुचिविषयतया बन्धकत्वेनोक्तम् । मदुक्तानादरे प्रकारान्तरेणापि करिष्यस्येवेत्यपिशब्दार्थः । तदभिप्रायेणाह—**त्वमेवे**ति । **परैर्धर्षणमसहमान**इति विशेषणम्—अवशस्य कथं कर्मकर्तृत्वमिति शङ्कापरिहारार्थम् । अमर्षचिकीर्षादिस्पर्धकगुणपारवश्यं कर्तृत्वस्योपयुक्तमेवेति भावः । 'कर्तुं नेच्छसि यन्मोहात्' इति वाक्यान्तर्वाक्यनिवेशो हास्यकरुणरसावेशेन । तद्विविनक्ति—**यदिदानी**मिति । प्राप्तावसरे धर्मयुद्धानुष्ठानं परित्यज्यातिक्रान्तावसरे परपरिभवव्रीडितो गतजलसेतुबन्धं करिष्यसीति वर्तमानभविष्यद्व्यपदेशयोस्तात्पर्यमिति भावः । 'न श्रोष्यसि' इतिवदुपदिष्टस्य चित्तानारोह इह मोहशब्देन विवक्षित इत्याह—**अज्ञाना**दिति ॥ ६० ॥

उक्तार्थस्थापनाय त्वय्युदासीने कथमहं प्रवर्तेय; तथात्वे वा कथं तव सर्वहेतुत्वमिति चोद्यम् 'ईश्वरः' इति श्लोकेन परिह्रियत इत्याह—**सर्वं ही**ति। उक्तं स्वभावपारतन्त्र्यमपि मत्प्रयुक्तम्; मम च साधारणकारणत्वान्न कश्चिद्विरोध इति भावः । ईश्वरशब्दस्यात्रेन्द्रादिशब्दवदर्वाचीनेश्वरविषयरूढिशङ्कापरिहाराय यौगिकमर्थमन्वर्थसमाख्यया स्थापयति—**सर्वनियमनशीलो वासुदेव**इति।'सापेक्षनिरपेक्षयोर्निरपेक्षसंप्रत्ययः'इति न्यायादीश्वरत्वस्य सर्वविषयत्वं सिद्धम्। तस्य च व्याप्तिमूलत्वं वासुदेवशब्देन दर्शितम्। वक्तृविषयत्वज्ञापनाय वासुदेवशब्दः। सर्वेश्वरेण 'मया'इति ह्यधस्ताद्दर्शितम्। सर्वव्याप्तस्य हृद्देशे विशेषस्थितिवचनं किमर्थमित्यत आह—**सकलप्रवृत्तिनिवृत्तिमूलज्ञानोदयप्रदेश**इति । एतेन हृदयस्थितेः'भ्रामयन्'इत्यत्रोपयोगो दर्शितः । **कथ**मित्युपकरणाभिप्रायम्; 'मायया' इति हि तदुत्तरम्।**किं कुर्व**न्निति—ईश्वरशब्देन नियन्तृत्वैकनिरूपणीयतया प्रतिपन्नोऽसौ कीदृशं निय-

---

शं॥यस्माच्च—स्वभावजेन शौर्यादिना यथोक्तेन कौन्तेय निबद्धः निश्चयेन बद्धः स्वेन आत्मीयेन कर्मणा कर्तुं न इच्छसि यत् कर्म मोहात् अविवेकतः करिष्यसि अवशोऽपि परवश एव तत् कर्म ॥ ६० ॥

यस्मात्—ईश्वरः ईशनशीलः सर्वभूतानां सर्वप्राणिनां हृद्देशे हृदयदेशे अर्जुन शु-

ता॥नित्यत्वेनाहेतुकत्वाद्धेतुर्न निर्दिष्ट इत्युक्तमिति चेत्सत्यमुक्तं,दुरुक्तं तु तत्, 'महाभूतान्यहंकारः'इत्यादिना वक्ष्यमाणस्य क्षेत्रस्याव्यक्तव्यतिरिक्तस्य समस्तस्यानित्यत्वसंप्रतिपत्तेः, 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम । अव्यक्तं पुरुषे ब्रह्मन्निष्कले सम्प्रलीयते' इत्यादिभिर्नित्यस्याप्यव्यक्तस्य परब्रह्मण्येकीभावपृथग्भाववचनाच्च । यच्च 'ब्रह्मसूत्रपदैश्चैव' इत्यत्रोक्तं—'क्षेत्रादितत्त्वव्यवस्थापनपराणि पञ्चशिखादिप्रणीतानि सूत्रपदानि' इति, तदप्यनादेशिकं,पञ्चशिखादिग्रन्थे ब्रह्मसूत्रप्रसिद्ध्यभावात् । यत्तु 'मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते' इति निगमनाद्भगवानेव 'ज्ञेयं यत्तत् प्रवक्ष्यामि' इत्यत्र ज्ञेयत्वेनोक्त इति; 'इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः'इति निगमितानां त्रयाणामेतच्छब्देनानुवादात् , तत्र क्षेत्रज्ञानवत्कर्मवश्यक्षेत्रज्ञज्ञानस्यापि मोक्षोपयोगित्वोपपत्तेः, क्षेत्रादिज्ञानरूपस्यापि शास्त्रार्थस्य सर्वप्रशासितुर्भगवतस्समाराधनरूपत्वेन 'मद्भक्त एतद्विज्ञाय' इत्यनेन विरोधाभावाच्च । यदपि चतुर्दशे 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इत्यत्र परावरप्रकृत्योर्जीवाव्यक्तसंज्ञयोरंशो मिलितो गर्भ इत्युक्तं, तत्र ब्रह्मशब्देनाव्यक्तस्य निर्दिष्टत्वात्तत्र तदंशाधानवचनस्य प्रयोजनाभावात्, 'क्षेत्रक्षेत्रज्ञसंयोगात्'इत्युक्तस्य चात्र प्रत्यभिज्ञानात्, गर्भशब्देन चेतनविवक्षैव युक्ता । 'सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते । ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत' इति श्लोके प्रकाशज्ञानशब्दयोः बाह्यान्तरेन्द्रियवृत्तिविषयतया व्यवस्थापनमशक्यं, विपरिवर्तेऽपि विरोधाभावाद्वक्ष्यमाणराजसतामसज्ञानव्यवच्छेदार्थं प्रकाशशब्दप्रयोगोपपत्तेश्च। रजःकार्यश्लोके लोभप्रवृत्तिर्लोभोद्भव इति समस्ततया व्याख्यानमयुक्तं,तथानध्ययनात्,'अप्रकाशोऽप्रवृत्तिश्च'इति तमःकार्यश्लोके सत्त्वकार्यप्रकाशनिषेधवद्रजःकार्यप्रवृत्तिनिषेधस्यापि पृथगुपन्यासात्तत्प्रतियोगितया प्रवृत्तेरिह पृथङ्निर्देशोपपत्तेः, 'आरम्भः कर्मणाम्' इत्यस्य तु गोबलीवर्दन्यायेन निर्वाहात् । पञ्चदशेऽपि 'प्रपद्येयतः प्रवृत्तिः' इति पाठोऽप्रसिद्धः । यदपि 'ममैवांशो जीवलोके जीवभूतस्सनातनः' इत्यत्र संसारिव्यतिरिक्तस्सर्वेश्वरस्यैव कश्चिदंशो जीवशब्दार्थतया प्रथमं व्याख्यायि ; तत्र यद्यपि अर्थविरोधो नास्ति, तथापि विभूतिप्रकरणमध्यपाठादन्तर्यामिणस्तु 'सर्वस्य चाहं हृदि सन्निविष्टः' इत्यनन्तरमेव वक्ष्यमाणत्वात्, परमात्मांशविशेषे च जीवशब्दस्य प्रसिद्धिप्रकर्षाभावान्मानवादिशास्त्रान्तरप्रसिद्धेरपि 'जीवभूतां महाबाहो' इति स्वशास्त्रप्रसिद्धेर्बलवत्त्वेन स्वीकर्तुमुचितत्वात् 'विषयानुपसेवते' इत्यत्र च प्रतिकूलोदासीनभोगेभ्यस्संकोचस्य क्लिष्टत्वादुत्क्रमणाद्युक्तेः, हृदयव्याप्तेरन्तर्यामिणः स्वारस्यादिन्द्रियाधिष्ठानेश्वरशब्दादेश्च तत्तन्नियन्तरि संसारिण्यप्युपपत्तेः, 'आत्मन्यवस्थितम्' इत्यत्र चात्मशब्दस्य नानार्थस्य प्रकरणोचितार्थपरिग्रहोपपत्तेः, भवदुक्ता द्वितीयैव योजना भाष्यकृदभिमता समीचीति मन्यामहे। 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादौ वेदवेदान्तशब्दयोर्वक्तव्यं प्रागेवोक्तम् । 'कूटस्थोऽक्षरः' इत्यस्य जीवभूतपरप्रकृतिव्यतिरिक्ते मुक्ते वृत्तिश्च साधुतरा । यत्तु षोडशे प्रोक्तं—प्रकारान्तरेणार्जुनस्य शोकमपनेतुं देवप्रकृतीनां रूपं ; तेषां परमक-

प्र-पा ॥ १. गी. १३-५ ॥
२ ॥
३. गी. १३-४ ॥
४. गी. १३-१८ ॥
५. गी. १३-१२ ॥
६. गी. १४-३ ॥
७. गी. १३-२६॥
८. गी. १४-११॥
९. गी. १५-४॥
१०. गी. १५-७॥
११. गी. १५-१५॥
१२. गी. ७-५ ॥
१३. गी. १५-९॥
१४. गी. १५-११ ॥
१५. गी. १५-१६॥

शं॥किम् अस्मिन् गीताशास्त्रे परं निश्श्रेयससाधनं निश्चितम्? किं ज्ञानं, कर्म वा?

**इदं ते नातपस्काय नाभक्ताय कदाचन ।**
**नचाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥** ६७

**रा॥इदं ते परमं गुह्यं शास्त्रं मयाख्यातम्; अतपस्काय—अतप्ततपसे त्वया न वाच्यं;**

---

**ता॥**ल्याणप्रत्यासत्तेरर्जुनस्य दैवप्रकृतित्वमासुरप्रकृतीनां रूपं, तन्निमित्तता च सकलस्यानर्थजातस्योक्तम्। इति; तदयुक्तं शास्त्रारम्भेऽर्जुनस्य स्वप्रकृत्यनिर्धारणमूलशोकप्रसङ्गाभावात्, अत्र तत्प्रसङ्गे तदपनोदनस्यापि प्रासङ्गिकस्य युक्तत्वात्; अतः 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' इति निगमनानुसारेण भगवद्यामुनेयोक्तप्रक्रियया शास्त्रवश्यतैवाध्यायप्रधानार्थः । सप्तदशे श्रद्धात्रैविध्यं शास्त्रीयेतरविषयमित्ययुक्तम् ; अनन्तरम् 'अशास्त्रविहितम्' इति पृथगभिधानात्। नच तत्र श्रद्धात्रैविध्यमपि समुच्चेतुं शक्यं, तदनुक्तेस्तत्कृत्यनुपपत्तेश्च । 'ॐ तत्सदिति निर्देशः' इत्यत्र मुमुक्षूणां यज्ञादिषु किंचिदङ्गं तेषां वीर्यातिशयार्थमुपदिश्यत इत्ययुक्तम्, अमुमुक्षूणामपि तदविरोधाद्विशेषकाभावाच्च । अतो 'लक्षणं शास्त्रसिद्धस्य त्रिधा' इत्ययमेवार्थ उचितः । अष्टादशे त्यागस्वरूपादिविवेके नातीव विरोधः, चरमश्लोके वक्तव्यं तु सर्वं सूक्तमस्माभिः । एवमन्येष्वपि भूतेषु भविष्यत्सु च श्रीमद्गीताभाष्येषु भगवद्यामुनाचार्यभाष्यकारमतानुसारेण दिङ्मोहः प्रशमयितव्यः । क्षुद्रस्खलितेष्वदूरविप्रकृष्टयोजनाभेदेषु चोदासितव्यमित्यलमतिप्रसङ्गेन । पिशाचरन्तिदेवगुप्तशङ्करयादवप्रकाशभास्करनारायणार्ययज्ञस्वामिप्रभृतिभिः स्वंस्वं मतमास्थितैः परश्शतैर्भाष्यकृद्भिः अस्मत्सिद्धान्ततीर्थकरैश्च भगवद्यामुनाचार्यभाष्यकारादिभिरविगीतपरिगृहीतोऽयमत्र सारार्थः —भगवानेव परं तत्त्वम्, अनन्यशरणैर्यथाधिकारं तदेकाश्रयणं परमधर्मः —इति ॥ ६६ ॥

एवं स्वोपदेशेन प्रतिष्ठिततत्त्वहितज्ञानस्य अर्जुनस्य कर्तव्यविशेषोपदेशव्याजेन संप्रदायविधिसिद्ध्यर्थमस्मिन् शास्त्रेऽनधिकारिणस्तावद्व्यनक्ति —'इदं ते' इति श्लोकेन । 'इदम्' इति सामान्येन निर्दिष्टं पूर्वापरग्रन्थस्थैः पदैर्विवृणोति—**इदं ते परमं गुह्यं शास्त्रं मयाख्यात**मिति । अत्र तेशब्दः 'इति ते ज्ञानमाख्यातम्' इति श्लोकादाकृष्टः ; श्लोकस्थस्य तु तेशब्दस्य **त्वये**ति व्याक्रिया । अतपस्कशब्देन तपःप्रारम्भमात्रे कृतेऽपि श्रवणानधिकारित्वं विवक्षितमित्याह—**अतप्तपस**इति । 'येस्य

---

**प्र-पा ॥** १. गी १६-२४ ॥
२. गी. १७-५ ॥
३. गी. १७-२३॥
४ गा- सं।
५ श्वेता. ६-२३. योगशिखोप च. २. अ. 'तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति शेषः॥

---

**शं॥आहोस्वित् उभयमिति ? ।**

**कुतः संशयः—'यत् ज्ञात्वामृतमश्नुते' 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इत्यादीनि वाक्यानि केवलज्ञानात् निश्श्रेयसप्राप्तिं दर्शयन्ति । 'कर्मण्येवाधिकारस्ते' 'कुरु कर्मैव' इत्येवमादीनि कर्मणाम् अवश्यकर्तव्यतां दर्शयन्ति । एवं ज्ञानकर्मणोः कर्तव्यत्वोपदेशात् समुच्चितयोरपि निश्श्रेयसहेतुत्वं स्यादिति भवेत् संशयः ।**

**किं पुनः अत्र मीमांसाफलम् ? । ननु एतदेव एषाम् अन्यतमस्य परमनिश्श्रेयससाधनत्वावधारणम् ; अतः विस्तीर्णतरं मीमांस्यम् एतत् ॥**

रा॥त्वयि वक्तरि,मयि चाभक्ताय कदाचन न वाच्यं,तथातपसे चाभक्ताय न वाच्यमित्यर्थः;

ता॥देवे परा भक्तिर्यथा देवे तथा गुरौ' इति श्रुत्यनुसारेणाह-त्वयि वक्तरि मयिचाभक्तायेति।अभक्तत्वे विशेषसंकोचकाभावात् । 'मद्भक्तेष्वभिधास्यति' इत्यनन्तरं भक्तावादरदर्शनाच्च 'कदाचन' इत्यनेन तपसि सम्यगनुष्ठितेऽपीति विवक्षितमित्याह—तथातपसेचाभक्तायेति । प्रत्येकपरिहरणीयत्वाय च नञ्प्रयोगावृत्तिः । उत्तरोत्तरतीव्रत्वतात्पर्येण क्रमविशेष इत्यभिप्रायेणाह—भक्तायाप्य-

शं॥आत्मज्ञानस्य तु केवलस्य निश्श्रेयसहेतुत्वं, भेदप्रत्ययनिवर्तकत्वेन कैवल्यफलावसायित्वात् । क्रियाकारकफलभेदबुद्धिः अविद्या आत्मनि नित्यप्रतता—' मम कर्म, अहं कर्ता अमुष्मै फलाय इदं कर्म करिष्यामि' इति इयम् अविद्या अनादिकालप्रवृत्ता । अस्याः अविद्यायाः निवर्तकम्'अयम् अहम् अस्मि केवलः अकर्ता अक्रियः अफलः;न मत्तः अन्यः अस्ति कश्चित्' इत्येवंरूपम् आत्मविषयं ज्ञानम् उत्पद्यमानं,कर्मप्रवृत्तिहेतुभूतायाः भेदबुद्धेः निवर्तकत्वात् । तुशब्दः पक्षव्यावृत्त्यर्थः । न केवलेभ्य कर्मभ्यः, न च ज्ञानकर्मभ्यां समुच्चिताभ्यां निश्श्रेयसप्राप्तिः इति पक्षद्वयं निवर्तयति । अकार्यत्वाच्च निःश्रेयसस्य कर्मसाधनत्वानुपपत्तिः । न हि नित्यं वस्तु कर्मणा ज्ञानेन वा क्रियते ।

केवलज्ञानमपि अनर्थकं तर्हि ? ।

न, अविद्यानिवर्तकत्वे सति दृष्टकैवल्यफलावसानत्वात् । अविद्यातमोनिवर्तकस्य ज्ञानस्य दृष्टं कैवल्यफलावसानत्वं, रज्ज्वादिविषये सर्पाद्यज्ञानतमोनिवर्तकप्रदीपप्रकाशवत् । विनिवृत्तसर्पादिविकल्परज्जुकैवल्यावसानं हि प्रकाशफलम् ; तथा दृष्टार्थानां च छिंदिक्रियाग्निमन्थनादीनां व्यापृतकर्त्रादिकारकाणां द्वैधीभावाग्निदर्शनादिफलात् अन्यफले कर्मान्तरे वा व्यापारानुपपत्तिः यथा, तथा दृष्टार्थायां ज्ञाननिष्ठाक्रियायां व्यापृतस्य ज्ञात्रादिकारकस्य आत्मकैवल्यफलात् कर्मान्तरे प्रवृत्तिः अनुपपन्ना इति न ज्ञाननिष्ठा कर्मसहिता उपपद्यते ।

भुज्यग्निहोत्रादिक्रियावत् स्यात् इति चेत्—न , कैवल्यफले ज्ञाने क्रियाफलार्थित्वानुपपत्तेः । कैवल्यफले हि ज्ञाने प्राप्ते सर्वतः संप्लुतोदकफले, कूपतटाकादिक्रियाफलार्थित्वाभाववत् ,फलान्तरे तत्साधनभूतायां वा क्रियायाम् अर्थित्वानुपपत्तिः। न हि राज्यप्राप्तिफले कर्मणि व्यापृतस्य क्षेत्रमात्रप्राप्तिफले व्यापारः उपपद्यते, तद्विषयं वा अर्थित्वम् । तस्मात् न निश्श्रेयससाधनं कर्म । न च ज्ञानकर्मणोः समुच्चयः । नापि ज्ञानस्य कैवल्यफलस्य कर्मसाहाय्यापेक्षा, अविद्यानिवर्तकत्वेन विरोधात् । न हि तमः तमसः निवर्तकम् । अतः केवलमेव ज्ञानं निश्श्रेयससाधनम् इति ।

न ; नित्याकरणे प्रत्यवायप्राप्तेः, कैवल्यस्य च नित्यत्वात् । यत् तावत् केवलज्ञानात् कैवल्यप्राप्तिः इत्येतत् , तत् असत् ; यतः नित्यानां कर्मणां श्रुत्युक्तानाम् अकरणे प्रत्यवायः नरकादिप्राप्तिलक्षणः स्यात्—ननु एवं तर्हि कर्मभ्यो मोक्षो नास्ति इति अनिर्मोक्ष एव ।

नैष दोषः ; नित्यत्वात् मोक्षस्य । नित्यानां कर्मणाम् अनुष्ठानात् प्रत्यवायस्य अप्राप्तिः, प्रतिषिद्धस्य च अकरणात् अनिष्टशरीरानुत्पत्तिः, काम्यानां च वर्जनात् इष्ट

रा॥न चाशुश्रूषवे-भक्तायाप्यशुश्रूषवे न वाच्यं;नच मां योऽभ्यसूयति—मत्स्वरूपे मदैश्वर्ये

ता॥शुश्रूषवइति । अत्रापि संकोचहेत्वभावात् पूर्ववत्। 'प्रब्रूहि तं श्रद्दधानाय मह्यम्' इति श्रुत्या च शुश्रूषाप्राधान्यमवगतम् । मामभ्यसूयति-मह्यमभ्यसूयतीत्यर्थः। 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति कर्मत्वस्यापि सिद्धत्वात् द्वितीयात्रानपोदिता । मां प्रत्यसूयतीत्युक्तं भवति । विषयतो लक्षणतश्च असूयां व्यनक्ति—मत्स्वरूपइत्यादिना।'माम्' इति सप्रकारपरामर्श इति भावः।प्रक्रमानुरोधेन 'नचा'

प्र-पा॥१.कठोप.१-१-१३. 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्।स्वर्गलोका अमृतत्वम्भजन्त एतद् द्वितीयेन वृणे वरेण,॥—नचिकेता वरं द्वितीयम्प्रार्थयते -सत्वम्-पुराणादिप्रसिद्धसार्वज्ञ्यस्त्वम्, स्वर्गप्रयोजनमग्निं जानासि,'स्वर्गादिभ्यो यद्वक्तव्यः'इति प्रयोजनमित्यर्थे यत् । स्थण्डिलरूपाग्नेस्स्वर्गप्रयोजनकत्वञ्च-उपासनद्वारा । श्रद्दधानाय-मोक्षश्रद्धावते । स्वर्गलोकेन तव किं सिद्धयतीत्यत्राह—स्वर्गलोकाइति। स्वर्गो लोको येषान्ते-परमपदम्प्राप्ता इत्यर्थः।शेषं स्पष्टम्॥
२. अष्टा. १-४-३७ ॥

शं॥शरीरानुपपत्तिः, वर्तमानशरीरारम्भकस्य च कर्मणः फलोपभोगक्षये पतिते अस्मिन् शरीरे देहान्तरोत्पत्तौ च कारणाभावात् आत्मनः रागादीनां च अकरणे स्वरूपावस्थानम् अयत्नसिद्धं कैवल्यम् इति ।

अतिक्रान्तानेकजन्मान्तरकृतस्य स्वर्गनरकादिप्राप्तिफलस्य अनारब्धकार्यस्य उपभोगानुपपत्तेः क्षयाभावः इति चेत्—न; नित्यकर्मानुष्ठानायासदुःखोपभोगस्य तत्फलोपभोगत्वोपपत्तेः । प्रायश्चित्तवद्वा पूर्वोपचितदुरितक्षयार्थं नित्यं कर्म। आरब्धानां च कर्मणाम् उपभोगेनैव क्षीणत्वात् अपूर्वाणां च कर्मणाम् अनारम्भे अयत्नसिद्धं कैवल्यमिति ।

न; 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति अन्यः पन्थाः मोक्षाय न विद्यते इति श्रुतेः, चर्मवदाकाशवेष्टनासम्भववत् अविदुषः मोक्षासम्भवश्रुतेः, 'ज्ञानात् कैवल्यमाप्नोति' इति च पुराणस्मृतेः अनारब्धफलानां पुण्यानां कर्मणां क्षयानुपपत्तेश्च । यथा पूर्वोपात्तानां दुरितानाम् अनारब्धफलानां स्यात् सम्भवः। तथा पुण्यानामनारब्धफलानां स्यात्संभवः । तेषां च देहान्तरम् अकृत्वा क्षयानुपपत्तौ मोक्षानुपपत्तिः । धर्माधर्महेतूनां च रागद्वेषमोहानाम् अन्यत्र आत्मज्ञानात् उच्छेदानुपपत्तेः धर्माधर्मोच्छेदानुपपत्तिः नित्यानां च कर्मणां पुण्यफलत्वश्रुतेः, 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः' इत्यादिस्मृतेश्च कर्मक्षयानुपपत्तिः ।

ये तु आहुः—नित्यानि कर्माणि दुःखरूपत्वात् पूर्वकृतदुरितकर्मणां फलमेव, न तु तेषां स्वरूपव्यतिरेकेण अन्यत् फलम् अस्ति, अश्रुतत्वात्, जीवनादिनिमित्ते च विधानात् इति ।

न, अप्रवृत्तानां कर्मणां फलदानासम्भवात्; दुःखफलविशेषानुपपत्तिश्च स्यात् । यत् उक्तम्—पूर्वजन्मकृतदुरितानां कर्मणां फलं नित्यकर्मानुष्ठानायासदुःखं भुज्यत इति, तत् असत्। न हि मरणकाले फलदानाय अनङ्कुरीभूतस्य कर्मणः फलम् अन्यकर्मारब्धे जन्मनि उपभुज्यते इति उपपत्तिः । अन्यथा स्वर्गफलोपभोगाय अग्निहोत्रादिकर्मारब्धे जन्मनि नरकफलोपभोगानुपपत्तिः न स्यात् । तस्य दुरितदुःखविशेषफल-

रा॥मद्गुणेषु च कथितेषु यो दोषमाविष्करोति, न तस्मै वाच्यम् ; असमानविभक्तिनिर्देशस्तस्यात्यन्तपरिहरणीयताज्ञापनाय ॥ ६७ ॥

ता॥भ्यसूयवे' इति वक्तव्ये प्रक्रमभङ्गेन विरूपवाक्यकरणं केनाभिप्रायेणेत्यत्राह—असमानेति। 'असूयकायानृजवे' 'असूयकाय मम्मादाः' इत्यादिभिरसूयामात्रवते प्रवचनं निषिद्धम्। भगवत्यभ्यसूयावते तु प्रवचनमत्यन्तपरिहरणीयमिति भावः। 'नच...वाच्यम्' इत्यनेनानधिकारिषु प्रवचने प्रत्यवायस्सूचितः। अत्र '[३]मेधाविने तपस्विने वा' इत्यनयोर्विकल्पोऽन्यत्र दृष्टः;भक्तादेस्तु न तथा;अतो भक्त्यादिरहिताय न मेधाविने नापि तपस्विने वाच्यम्; सर्वगुणयोगेऽपि भगवत्यभ्यसूयावते न वाच्यमित्युक्तं भवति ॥

प्र-पा ॥ १ ॥ | २ ॥ | ३ ॥

शं॥त्वानुपपत्तेश्च ; अनेकेषु हि दुरितेषु सम्भवत्सु भिन्नदुःखसाधनफलेषु नित्यकर्मानुष्ठानायासदुःखमात्रफलेषु कल्प्यमानेषु द्वन्द्वरोगादिबाधनं निर्निमित्तं। न हि शक्यते कल्पयितुं,नित्यकर्मानुष्ठानायासदुःखमेव पूर्वोपात्तदुरितफलं न शिरसा पाषाणवहनादिदुःखमिति। अप्रकृतं च इदम् उच्यते—नित्यकर्मानुष्ठानायासदुःखं पूर्वकृतदुरितकर्मफलम् इति। कथम्?—अप्रसूतफलस्य हि पूर्वकृतदुरितस्य क्षयः न उपपद्यत इति प्रकृतम्। तत्र अप्रसूतफलस्य कर्मणः फलं नित्यकर्मानुष्ठानायासदुःखम् आह भवान्, न प्रसूतफलस्येति। अथ सर्वमेव पूर्वमेव पूर्वकृतं दुरितं प्रसूतफलमेव इति मन्यते भवान्? ततः नित्यकर्मानुष्ठानायासदुःखमेव फलम् इति विशेषणम् अयुक्तम्। नित्यकर्मविध्यानर्थक्यप्रसङ्गश्च, उपभोगेनैव प्रसूतफलस्य दुरितकर्मणः क्षयोपपत्तेः। किञ्च—श्रुतस्य नित्यस्य दुःखं चेत् फलं, नित्यकर्मानुष्ठानायासादेव तत् दृश्यते व्यायामादिवत्; न तत् अन्यस्य इति कल्पनानुपपत्तिः। जीवनादिनिमित्ते च विधानात्, नित्यानां कर्मणां प्रायश्चित्तवत् पूर्वकृतदुरितफलत्वानुपपत्तिः। यस्मिन् पापकर्मणि निमित्ते यत् विहितं प्रायश्चित्तं, न तु तस्य पापस्य तत् फलम्। अथ तस्यैव पापस्य निमित्तस्य प्रायश्चित्तदुःखं फलं, जीवनादिनिमित्तेऽपि नित्यकर्मानुष्ठानायासदुःखं जीवनादिनिमित्तस्यैव फलं प्रसज्येत, नित्यप्रायश्चित्तयोः नैमित्तिकत्वाविशेषात्। किञ्च अन्यत्—नित्यस्य काम्यस्य च अग्निहोत्रादेः अनुष्ठानायासदुःखस्य तुल्यत्वात् नित्यानुष्ठानायासदुःखमेव पूर्वकृतदुरितस्य फलम्, न तु काम्यानुष्ठानायासदुःखम् इति विशेषो नास्तीति तदपि पूर्वकृतदुरितफलं प्रसज्येत। तथा च सति नित्यानां फलाश्रवणात् तद्विधानान्यथानुपपत्तेश्च नित्यानुष्ठानायासदुःखं पूर्वकृतदुरितफलम् इति अर्थापत्तिकल्पना च अनुपपन्ना। एवं विधानान्यथानुपपत्तेः अनुष्ठानायासदुःखव्यतिरिक्तफलत्वानुमानाच्च नित्यानाम्। विरोधाच्च; विरुद्धं च इदम् उच्यते नित्यकर्मणा अनुष्ठीयमानेन अस्य कर्मणः फलं भुज्यते इति अभ्युपगम्यमाने स एव उपभोगः नित्यस्य कर्मणः फलम् इति, नित्यस्य कर्मणः फलाभाव इति विरुद्धम् उच्यते। किञ्च काम्याग्निहोत्रादौ अनुष्ठीयमाने नित्यमपि अग्निहोत्रादि तन्त्रेणैव अनुष्ठितं भवतीति तदायासदुःखेनैव काम्याग्निहोत्रादिफलम् उपक्षीणं स्यात्, तत्तन्त्रत्वात्। अथ काम्याग्निहोत्रात् अन्यदेव स्वर्गादि, तदनुष्ठानायासदुःखमपि भिन्नं प्रसज्येत। न च तत् अस्ति, दृष्टविरोधात् न हि काम्यानुष्ठानायासदुःखात् नित्यानुष्ठानायासदुःखं

शं॥ भिन्नं दृश्यते । किञ्च अन्यत् अविहितम् अप्रतिषिद्धं च कर्म तत्कालफलं, न तु शास्त्रचोदितं प्रतिषिद्धं वा तत्कालफलं भवेत् । तदा स्वर्गादिष्वपि अदृष्टफलाशासनेन उद्यमो न स्यात् अग्निहोत्रादीनामेव कर्मस्वरूपाविशेषे अनुष्ठानायासदुःखमात्रेण उपक्षयः नित्यानां; स्वर्गादिमहाफलत्वं काम्यानाम् अङ्गेतिकर्तव्यताद्याधिक्ये तु असति—फलकामित्वमात्रेणेति; तस्माच्च न नित्यानां कर्मणाम् अदृष्टफलाभावः कदाचिदपि उपपद्यते । अतश्च अविद्यापूर्वकस्य कर्मणः विद्यैव शुभस्य अशुभस्य वा क्षयकारणम् अशेषतः, न नित्यकर्मानुष्ठानम् । अविद्याकामबीजं हि सर्वमेव कर्म।तथा उपपादितम्—अविद्वद्विषयं कर्म, विद्वद्विषया सर्वकर्मसंन्यासपूर्विका ज्ञाननिष्ठा 'उभौ तौ न विजानीतः' 'वेदाविनाशिनं नित्यं' 'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्' 'अज्ञानां कर्मसङ्गिनां' 'तत्त्ववित्तु महाबाहो...गुणा गुणेषु वर्तन्ते इति मत्वा न सज्जते' 'सर्वकर्माणि मनसा संन्यस्यास्ते' 'नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्' 'अज्ञः करोमि' इति; आरुरुक्षोः कर्म कारणम्, आरूढस्य योगस्थस्य शम एव कारणम्; उदाराः त्रयोऽपि अज्ञाः, 'ज्ञानीत्वात्मैव मे मतम्' 'अज्ञाः कर्मिणः गतागतं कामकामाः लभन्ते'; 'अनन्याश्चिन्तयन्तो मां यथोक्तम् आत्मानम् आकाशकल्पम् उपासते'; 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' अर्थात् न कर्मिणः अज्ञाः उपयान्तीति । भगवत्कर्मकारिणो ये युक्ततमा अपि कर्मिणः अज्ञाः ते उत्तरोत्तरहीनफलत्यागावसानसाधनाः; अनिर्देश्याक्षरोपासकास्तु 'अद्वेष्टा सर्वभूतानाम्' इति आध्यायपरिसमाप्ति उक्तसाधनाः क्षेत्राध्यायाद्यध्यायत्रयोक्तज्ञानसाधनाश्च । अधिष्ठानादिपञ्चकहेतुकसर्वकर्मसंन्यासिनाम् आत्मैकत्वाकर्तृत्वज्ञानवतां परस्यां ज्ञाननिष्ठायां वर्तमानानां भगवत्तत्त्वविदाम् अनिष्टादिकर्मफलत्रयं परमहंसपरिव्राजकानां लब्धभगवत्स्वरूपात्मैकत्वशरणानां न भवति; भवत्येव अन्येषाम् अज्ञानां कर्मिणाम् असंन्यासिनाम्—इत्येषः गीताशास्त्रोक्तकर्तव्यार्थस्य विभागः ॥

अविद्यापूर्वकत्वं सर्वस्य कर्मणः असिद्धमिति चेत्—न; ब्रह्महत्यादिवत् । यद्यपि शास्त्रावगतं नित्यं कर्म; तथाऽपि अविद्यावत एव भवति । यथा प्रतिषेधशास्त्रावगतमपि ब्रह्महत्यादिलक्षणं कर्म अनर्थकारणम् अविद्याकामादिदोषवतः भवति अन्यथा प्रवृत्त्यनुपपत्तेः । तथा नित्यनैमित्तिककाम्यान्यपीति ॥

देहव्यतिरिक्तात्मनि अज्ञाते प्रवृत्तिः नित्यादिकर्मसु अनुपपन्ना इति चेत्, न; चलनात्मकस्य कर्मणः अनात्मकर्तृकस्य 'अहं करोमि' इति प्रवृत्तिदर्शनात् ॥

देहादिसङ्घाते अहंप्रत्ययः गौणः, न मिथ्या इति चेत्, न; तत्कार्येष्वपि गौणत्वोपपत्तेः । आत्मीये देहादिसङ्घाते अहंप्रत्ययः गौणः, यथा आत्मीये पुत्रे 'आत्मा वै पुत्रनामाऽसि' इति, लोके च 'मम प्राण एव अयं गौः' इति, तद्वत् । नैवं मिथ्याप्रत्ययः । मिथ्याप्रत्ययस्तु स्थाणुपुरुषयोः अगृह्यमाणविशेषयोः । न गौणप्रत्ययस्य मुख्यकार्यार्थता, अधिकरणस्तुत्यर्थत्वात् लुप्तोपमाशब्देन । यथा 'सिंहो देवदत्तः' 'अग्निः माणवकः' इति सिंह इव अग्निरिव क्रौर्यपैङ्गल्यादिसामान्यात् देवदत्तमाणवकाधिकरणस्तुत्यर्थमेव, न तु सिंहकार्यम् अग्निकार्यं वा गौणशब्दप्रत्ययनिमित्तं किञ्चित् साध्यते, मिथ्याप्रत्ययकार्यं तु अनर्थम् अनुभवति इति । गौणप्रत्ययविषयं जानाति

शौ॥'नैष सिंहः' 'नायम् अग्निः' इति । तथा गौणेन देहादिसङ्घातेन आत्मना कृतं कर्म न मुख्येन अहंप्रत्ययविषयेण आत्मना कृतं स्यात् । न हि गौणसिंहाग्निभ्यां कृतं कर्म मुख्य-सिंहाग्निभ्यां कृतं स्यात् । न च क्रौर्येण पैङ्गल्येन वा मुख्यसिंहाग्न्योः कार्यं किञ्चित् क्रियते, स्तुत्यर्थत्वेन उपक्षीणत्वात् । स्तूयमानौ च जानीतः 'न अहं सिंहः' 'न अहम् अग्निः' इति ; न हि 'सिंहस्य कर्म मम, अग्नेश्च' इति । तथा 'न सङ्घातस्य कर्म मम मुख्यस्य आत्मनः' इति प्रत्ययः युक्ततरः स्यात्, न पुनः 'अहं कर्ता मम कर्म' इति । यच्च आहुः 'आत्मीयैः स्मृतीच्छाप्रयत्नैः कर्महेतुभिः आत्मा कर्म करोति' इति ; न, तेषां मिथ्याप्रत्ययपूर्वकत्वात् । मिथ्याप्रत्ययनिमित्तेष्टानिष्टानुभूतक्रियाफलजनितसंस्कारपूर्वका हि स्मृतीच्छाप्रयत्नादयः।यथा अस्मिन् जन्मनि देहादिसङ्घाताभिमानरागद्वेषादिकृतौ धर्माधर्मौ तत्फलानुभवश्च, तथा अतीते अतीततरेऽपि जन्मनि इति अनादिः अविद्याकृतः संसारः अतीतः अनागतश्च अनुमेयः। ततश्च सर्वकर्मसंन्याससहितज्ञाननिष्ठया आत्यन्तिकः संसारोपरम इति सिद्धम् । अविद्यात्मकत्वाच्च देहाभिमानस्य, तन्निवृत्तौ देहानुपपत्तेः संसारानुपपत्तिः । देहादिसङ्घाते अभिमानः अविद्यात्मकः । न हि लोके 'गवादिभ्यः अन्यः अहं, मत्तश्च अन्ये गवादयः' इति जानन् तान् 'अहम्' इति मन्यते कश्चित् । अजानंस्तु स्थाणौ पुरुषविज्ञानवत् अविवेकतः देहादिसङ्घाते कुर्यात् 'अहम्' इति प्रत्ययं, न विवेकतः जानन् । यस्तु 'आत्मा वै पुत्रनामाऽसि' इति पुत्रे अहंप्रत्ययः, स तु जन्यजनकसम्बन्धनिमित्तः गौणः । गौणेन च आत्मना भोजनादिवत् परमार्थात्मकार्यं न शक्यते कर्तुम्, गौणसिंहाग्निभ्यां मुख्यसिंहाग्निकार्यवत्॥

अदृष्टविषयचोदनाप्रामाण्यात् आत्मकर्तव्यं गौणैः देहेन्द्रियादिभिः क्रियत एव इति चेत्—न ; अविद्याकृतात्मत्वात् तेषाम् । न गौणाः आत्मानः देहेन्द्रियादयः; किं तर्हि?—मिथ्याप्रत्ययेनैव अनात्मनां सताम् आत्मत्वम् आपाद्यते,तद्भावे भावात्, तदभावे च अभावात् । अविवेकिनां हि अज्ञानकाले बालाना दृश्यते 'दीर्घः अहं' 'गौरः अहम्' इति देहादिसङ्घाते अहंप्रत्ययः । न तु विवेकिनाम् 'अन्यः अहं देहादिसङ्घातात्' इति जानतां तत्काले देहादिसङ्घाते अहंप्रत्ययः भवति । तस्मात् मिथ्याप्रत्ययाभावे अभावात् तत्कृत एव, न गौणः । पृथग्गृह्यमाणविशेषसामान्ययोर्हि सिंहदेवदत्तयोः अग्निमाणवकयोर्वा गौणः प्रत्ययः शब्दप्रयोगो वा स्यात्, न अगृह्यमाणविशेषसामान्ययोः । यत्तु उक्तं 'श्रुतिप्रामाण्यात्' इति तत् न, तत्प्रामाण्यस्य अदृष्टविषयत्वात् । प्रत्यक्षादिप्रमाणानुपलब्धे हि विषये अग्निहोत्रादिसाध्यसाधनसम्बन्धे श्रुतेः प्रामाण्यं, न प्रत्यक्षादिविषये, अदृष्टदर्शनार्थविषयत्वात् प्रामाण्यस्य । तस्मात् न दृष्टमिथ्याज्ञाननिमित्तस्य अहंप्रत्ययस्य देहादिसङ्घाते गौणत्वं कल्पयितुं शक्यम् । न हि श्रुतिशतमपि 'शीतः अग्निः अप्रकाशो वा' इति ब्रुवत् प्रामाण्यम् उपैति । यदि ब्रूयात् 'शीतः अग्निः अप्रकाशो वा' इति, तथापि अर्थान्तरं श्रुतेः विवक्षितं कल्प्यम्, प्रामाण्यान्यथानुपपत्तेः, न तु प्रमाणान्तरविरुद्धं स्ववचनविरुद्धं वा कल्प्यम् ॥

कर्मणः मिथ्याप्रत्ययवत्कर्तृकत्वात् कर्तुः अभावे श्रुतेः अप्रामाण्यमिति चेत्—न ; ब्रह्मविद्यायाम् अर्थवत्त्वोपपत्तेः ॥

शं॥कर्मविधिश्रुतिवत् ब्रह्मविद्याविधिश्रुतेरपि अप्रामाण्यप्रसङ्ग इति चेत्—न ; बाधकप्रत्ययानुपपत्तेः । यथा ब्रह्मविद्याविधिश्रुत्या आत्मनि अवगते देहादिसङ्घाते अहंप्रत्ययः बाध्यते, तथा आत्मन्येव आत्मावगतिः न कदाचित् केनचित् कथंचिदपि बाधितुं शक्या, फलाव्यतिरेकात् अवगतेः, यथा अग्निः उष्णः प्रकाशश्च इति । न च एवं कर्मविधिश्रुतेः अप्रामाण्यं, पूर्वपूर्वप्रवृत्तिनिरोधेन उत्तरोत्तरापूर्वप्रवृत्तिजननस्य प्रत्यगात्माभिमुख्येन प्रवृत्त्युत्पादनार्थत्वात् । मिथ्यात्वेऽपि उपायस्य उपेयसत्यतया सत्यत्वमेव स्यात् ; यथा अर्थवादानां विधिशेषाणाम्, लोकेऽपि बालोन्मत्तादीनां पयआदौ पाययितव्ये चूडावर्धनादिवचनम् । प्रकारान्तरस्थानां च साक्षादेव वा प्रामाण्यं सिद्धं, प्राक् आत्मज्ञानात् देहाभिमाननिमित्तप्रत्यक्षादिप्रामाण्यवत् ॥

यत्तु मन्यते—स्वयम् अव्याप्रियमाणोऽपि आत्मा सन्निधिमात्रेण करोति, तदेव मुख्यं कर्तृत्वम् आत्मनः, यथा राजा युध्यमानेषु योधेषु युध्यत इति प्रसिद्धं स्वयम् अयुध्यमानोऽपि सन्निधानदेव जितः पराजितश्चेति, तथा सेनापतिः वाचैव करोति क्रियाफलसम्बन्धश्च राज्ञः सेनापतेश्च दृष्टः । यथा च ऋत्विक्कर्म यजमानस्य, तथा देहादीनां कर्म आत्मकृतं स्यात्, फलस्य आत्मगामित्वात् । यथा वा भ्रामकस्य लोहभ्रामयितृत्वात् अव्यापृतस्यैव मुख्यमेव कर्तृत्वम्, तथा च आत्मनः इति ।

तत् असत् ; अकुर्वतः कारकत्वप्रसङ्गात् ।

कारकम् अनेकप्रकारमिति चेत्—न ; राजप्रभृतीनां मुख्यस्यापि कर्तृत्वस्य दर्शनात् । राजा तावत् स्वव्यापारेणापि युध्यते ; योधानां च योधयितृत्वे धनदाने च मुख्यमेव कर्तृत्वं, तथा जयपराजयफलोपभोगे च । यजमानस्यापि प्रधानत्यागे दक्षिणादाने च मुख्यमेव कर्तृत्वम् । तस्मात् अव्यापृतस्य कर्तृत्वोपचारो यः सः गौणः इति अवगम्यते । यदि मुख्यम् अन्यत् कर्तृत्वं स्वव्यापारलक्षणं न उपलभ्येत राजयजमानप्रभृतीनां, तदा सन्निधिमात्रेणापि कर्तृत्वं मुख्यं परिकल्प्येत यथा भ्रामकस्य लोहभ्रमणेन, न तथा राजयजमानादीनां स्वव्यापारो नोपलभ्यते । तस्मात् सन्निधिमात्रेण कर्तृत्वं गौणमेव । तथा च सति तत्फलसम्बन्धोऽपि गौण एव स्यात् । न गौणेन मुख्यं कार्यं निर्वर्त्यते । तस्मात् असदेव एतत् गीयते 'देहादीनां व्यापारेण अव्यापृतः आत्मा कर्ता भोक्ता च स्यात्' इति । भ्रान्तिनिमित्तं तु सर्वम् उपपद्यते, यथा स्वप्ने ; मायायां च एवम् । न च देहाद्यात्मप्रत्ययभ्रान्तिसन्तानविच्छेदेषु सुषुप्तिसमाधानादिषु कर्तृत्वभोक्तृत्वाद्यनर्थः उपलभ्यते । तस्मात् भ्रान्तिप्रत्ययनिमित्तः एव अयं संसारभ्रमः, न तु परमार्थः, इति सम्यग्दर्शनात् अत्यन्त एव उपरमः इति सिद्धम् ॥

सर्वं गीताशास्त्रार्थम् उपसंहृत्य अस्मिन् अध्याये, विशेषतश्च अन्ते इह शास्त्रार्थदार्ढ्याय सङ्क्षेपतः उपसंहारं कृत्वा, अथ इदानीं शास्त्रसंप्रदायविधिमाह—इदं शास्त्रं ते तव हिताय मया उक्तं संसारविच्छित्तये अतपस्काय तपोरहिताय न वाच्यम् इति व्यवहितेन सम्बध्यते । तपस्विनेऽपि अभक्ताय गुरौ देवे च भक्तिरहिताय कदाचन कस्यांचिदपि अवस्थायां न वाच्यम् । भक्तः तपस्वी अपि सन् अशुश्रूषुः यो भवति तस्मै अपि न वाच्यम् । न च यो मां वासुदेवं प्राकृतं मनुष्यं मत्वा अभ्यसूयति आ-

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८

रा॥इदं परमं गुह्यं मद्भक्तेषु योऽभिधास्यति—व्याख्यास्यति, सः मयि परमां भक्तिं कृत्वा मामेवैष्यति, न तत्र संशयः ॥ ६८ ॥

नच तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता नच मे तस्मादन्यः प्रियतरो भुवि ॥ ६९

सर्वेषु मनुष्येष्वितःपूर्वं तस्मादन्यो मनुष्यो मे न कश्चित्प्रियकृत्तमोऽभूत्; इत उ-

ता॥अथाधिकारिविशेषेष्ववश्यवक्तव्यत्वं तेषु वचनस्यापवर्गाख्यफलपर्यवसानं चोच्यते—'यइदम्' इति श्लोकेन । 'मद्भक्तेषु' इत्यनेनैवातपस्कत्वादिदोषा दूरोत्सारिताः, सितमनसां तेषां तदसंभवात्। 'श्रावयेच्चतुरो वर्णान्' इत्येतावता सर्वेषु वक्तव्यम्, तेष्वेव मद्भक्ता एव श्रवणाधिकारिण इत्युक्तं भवति।अत्राभिधास्यतीत्यर्थश्रावणपर्यन्तमित्याह—व्याख्यास्यतीति। यद्वृत्तवशात्'सः'इत्यध्याहृतम्। योग्येषु व्याख्यानमपि कर्मयोगादिकोटौ, भक्तियोगाङ्कुरे वा निविष्टं परभक्तिं जनयतीति 'भक्तिं मयि परांकृत्वा' इत्युच्यते । 'मामेव' इत्यवधारणेन मद्गीताव्याख्यायिनो न क्षुद्रफलेषु सङ्गं जनयामीत्यभिप्रेतम् । फलितमाह—न तत्र संशयइति । 'असंशयः' इति संशय एव वा निषिध्यते ॥ ६८ ॥

स्वशास्त्रव्याख्यानस्य स्वप्राप्तिसाधनत्वे द्वारमुच्यते—'नच तस्मात्' इति श्लोकेन। प्रियकृत्तमत्वप्रियतरत्वयोर्हेतुकार्यभावेन'भविता'इत्युपात्तक्रिययैवान्वये संभवत्यपि कालत्रयवर्तिनिषेधेऽर्थगौरवेण तात्पर्यसिद्ध्यर्थं—मनुष्येष्वितः पूर्वमित्याद्युक्तम्।ननु शास्त्रस्याधिकारी अपेक्षितः, अतस्स तावद्वक्तव्यः;

प्र·पा ॥ १. भारते-शा-मो. ३३५-४८ ॥

शं॥त्मप्रशंसादिदोषाध्यारोपणेन ईश्वरत्वं मम अजानन् न सहते,असावपि अयोग्यः, तस्मै अपि न वाच्यम् । भगवति अनसूयायुक्ताय तपस्विने भक्ताय शुश्रूषवे वाच्यं शास्त्रम् इति सामर्थ्यात् गम्यते । तत्र 'मेधाविने तपस्विने वा' इति अनयोः विकल्पदर्शनात् शुश्रूषाभक्तियुक्ताय तपस्विने तद्युक्ताय मेधाविने वा वाच्यम् । शुश्रूषाभक्तिवियुक्ताय न तपस्विने नापि मेधाविने वाच्यम् । भगवति असूयायुक्ताय समस्तगुणवतेऽपि न वाच्यम् । गुरुशुश्रूषाभक्तिमते च वाच्यम् इत्येषः शास्त्रसंप्रदायविधिः ॥ ६७ ॥

सम्प्रदायस्य कर्तुः फलम् इदानीम् आह—यः इमं यथोक्तं परमं परमनिश्श्रेयसार्थं केशवार्जुनयोः संवादरूपं ग्रन्थं गुह्यं गोप्यतमं मद्भक्तेषु मयि भक्तिमत्सु अभिधास्यति वक्ष्यति, ग्रन्थतः अर्थतश्च स्थापयिष्यतीत्यर्थः, यथा त्वयि मया । भक्तेः पुनर्ग्रहणात् भक्तिमात्रेण केवलेन शास्त्रसम्प्रदाने पात्रं भवतीति गम्यते । कथम् अभिधास्यति इति? उच्यते—भक्तिं मयि परां कृत्वा 'भगवतः परमगुरोः अच्युतस्य शुश्रूषा मया क्रियते' इत्येवं कृत्वेत्यर्थः । तस्य इदं फलम्—मामेव एष्यति मुच्यते एव । असंशयः अत्र संशयः न कर्तव्यः ॥ ६८ ॥

किञ्च—न च तस्मात् शास्त्रसम्प्रदायकृतः मनुष्येषु मनुष्याणां मध्ये कश्चित् मे मम प्रियकृत्तमः अतिशयेन प्रियकरः, अन्यः प्रियकृत्तमः नास्त्येव

रा॥त्तरंच न भविता, अयोग्यानां प्रथममुपादानं योग्यानामकथनादपि तत्कथनस्यानिष्ट-तमत्वात् ॥ ६९ ॥

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टस्स्यामिति मे मतिः ॥ ७०

य इममावयोर्धर्म्यं संवादमध्येष्यते, तेन ज्ञानयज्ञेनाहमिष्टस्स्यामिति मे मतिः— अस्मिन् यो ज्ञानयज्ञोऽभिधीयते, तेनाहमेतदध्ययनमात्रेणेष्टस्स्यामित्यर्थः ॥ ७० ॥

ता॥अनधिकारी तु तत एवार्थाद्व्युदस्यते;प्रधानतमादधिकारिणोऽनन्तरं वा व्यवच्छेद्यतयानधिकारी वक्तव्यः ; इह तु तद्वैपरीत्ये किं निबन्धनमित्यत्राह—अयोग्यानामिति । तत्कथनस्य-अयोग्यान्प्रति कथनस्येत्यर्थः । अनिष्टतमत्वात्-अनिष्टतमत्वज्ञापनार्थमित्यर्थः। योग्यानामकथनस्यानिष्टत्वं 'प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इति ब्रह्मविद्याप्रवचनस्य वैधत्वात् । प्रोवाच—प्रब्रूयादित्यर्थः,'छन्दसि लुङ्-लङ् लिटः' इति विधानात् । अन्यथा 'स गुरुमेवाभिगच्छेत्' इति प्रथमेन वाक्येनानन्वयात् ॥६९॥

एवमुपदेष्टुः फलमुक्तम; अथ शब्दतोऽर्थतश्च गुरुसकाशादध्येतुः फलमुच्यते—'अध्येष्यते' इत्यादिना श्लोकद्वयेन । 'शृणुयात्' इति परैरधीयमानपाठश्रवणमात्रं वा । 'अध्येष्यते' इति—नहि सर्वज्ञस्य भगवतो भविष्यद्भारतनिबन्धावेक्षणेन स्वसंवादाध्ययनभावित्वोक्तिः ; अपितु भूतावेक्षणेन। महाभारतं हि धृतराष्ट्राद्युत्पत्तेः प्रागेव भगवत्प्रसादलब्धदिव्यचक्षुषा भगवता व्यासेन निबद्धम् । अनु-ज्ञातं च शिष्येभ्यः ; तैश्च 'नारदोऽश्रावयद्देवानसितो देवलः पितॄन् । गन्धर्वयक्षरक्षांसि श्रावयामास वै शुकः' इति मानुषव्यतिरिक्तेषु लोकेषु प्रकाशितम् । मानुषे तु लोके जनमेजयपुरस्कारेण प्रकाशि-ष्यते । तदपेक्षयोक्तम्—'अध्येष्यते' इति । उपनिषत्सारत्वादध्ययनोक्तिः । कथितं चाश्रमवर्णने क-विभिः 'अनवरताधीतभगवद्गीतिम्' इति । 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप' इति यः प्रथम-षट्के ज्ञानयज्ञोऽभिहितः, नासावत्र विवक्षितः ; अपितु भक्तियोगप्रकरणे 'ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते' इति यो भगवदनुसंधानविशेषरूपो ज्ञानयज्ञ उक्तः, स एवात्र शास्त्रसारभूतो विवक्षित इत्यभिप्रायेणाह—अस्मिन् यो ज्ञानयज्ञइति । विधिजपोपांशुमानसानां ज्ञानयज्ञो मानसत्वाद्वि-शिष्टः । एतदध्ययनमात्रेणेति—अयमभिप्रायः—'योऽश्वमेधेन यजते । य उ चैनमेवं वेद' 'यंयं क्रतुमधीते तेनतेनास्येष्टं भवति' इत्यादिषु यथा तत्तत्क्रत्वध्ययनस्य तत्तुल्यफलता, तथात्रापि ज्ञानयज्ञ-वद्भगवत्प्रीतिजनकत्वं तद्गीताध्ययनस्य—इति ॥ ७० ॥

प्र-पा ॥ १. मुण्डको. १-२-१३ ॥
२. अष्टा. ३-४-६ ॥
३. महाभारते ॥
४. गी. ४ ३३ ॥ ५. गी. ९-१५ ॥
६. अश्वमेधे. २. प्रश्ने ॥
७. आरण्यके. २. प्रश्ने ॥

शं ॥ इत्यर्थः वर्तमानेषु । न च भविता भविष्यत्यपि काले तस्मात् द्वितीयः अन्यः प्रियतरः प्रियकृत्तरः भुवि लोकेऽस्मिन् न भविता ॥ ६९ ॥

योऽपि—अध्येष्यते च पठिष्यति यः इमं धर्म्यं संवादरूपं ग्रन्थम् आवयोः,तेन इदं कृतं स्यात् । ज्ञानयज्ञेन—विधिजपोपांशुमानसानां यज्ञानां ज्ञानयज्ञः मानसत्वात् विशि-ष्टतमः इत्यतः तेन ज्ञानयज्ञेन गीताशास्त्रस्य अध्ययनं स्तूयते ; फलविधिरेव वा, देव-तादिविषयज्ञानयज्ञफलतुल्यम् अस्य भवतीति—तेन अध्ययनेन अहम् इष्टः पूजितः स्यां भवेयम् इति मे मम मतिः निश्चयः ॥ ७० ॥

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।**
**सोऽपि मुक्तश्शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१**

रा॥**श्रद्धावाननसूयुश्च यो नरश्शृणुयादपि, तेन श्रवणमात्रेण सोऽपि भक्तिविरोधिपापेभ्यो मुक्तः पुण्यकर्मणां मद्भक्तानां लोकान् समूहान् प्राप्नुयात् ॥ ७१ ॥**

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसम्मोहः प्रणष्टस्ते धनञ्जय ॥ ७२**

**मया कथितमेतत्पार्थ त्वयावहितेन चेतसा कच्चिच्छ्रुतं, तवाज्ञानसम्मोहः कच्चित्प्रणष्टः, येनाज्ञानेन मूढो न योत्स्यामीत्युक्तवान् ॥ ७२ ॥**

---

**ता॥**'श्रद्धावाननसूयुश्च'इति चकारादत्रानुषक्तानामपि प्रागुक्तानां प्रणिपातपरिप्रश्नसेवानां ग्रहणम् । 'शृणुयात्' इत्यनेन आचार्यसकाशादिति गम्यते । श्रूयते हि—'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति । 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' इति । एतेन स्वयं ग्रन्थनिरीक्षणमन्यायेनान्यस्माद्ग्रहणं च व्यवच्छिद्यते । सोऽपीति विलम्बस्सूच्यते । तेन **भक्तिविरोधिभ्यो मुक्तइत्युक्तम्** । अन्यथा विध्यन्तरवैयर्थ्यादिप्रसङ्ग इति भावः । अर्थज्ञानादिमतश्च कैमुत्यमपिशब्देन व्यञ्जितम् । प्रवचनपठनयोर्मोक्षैकान्तफलस्य पूर्वमुक्तत्वात्सहभावेनाग्र्यप्रायन्यायाच्छ्रवणेऽपि तादृशफलं भगवदभिप्रेतं स्वीकर्तुमुचितम् । नरककल्पस्वर्गादिप्राप्तेरनभिमतत्वान्मद्भक्तानां—**लोकान्समूहानित्युक्तम्** । अत्र पाठश्रवणादिप्रीतो भगवान् स्वभक्तान् प्रापयति । भगवद्भक्तानां प्राप्तिर्हि योगोपदेशादिद्वारा मोक्षाय स्यात् ॥ ७१ ॥

अथार्जुनस्य विदिताशयोऽपि भगवानादरेणाविस्मरणायोपदेशसाफल्यं जिज्ञासमान इव पृच्छति—**कच्चिदि**ति । एतदिति अर्थपर्यन्तत्वाच्छ्रुतमित्यर्थः । धीपर्यन्तं मत्कथितमेतत्किं निरर्थकमित्यभिप्रायेणैतच्छब्द इत्याह—**मया कथितमेतदि**ति।अज्ञानसंमोहः कच्चित्प्रणष्ट इति श्रुतफलानुयोगः। अज्ञानहेतुकं भ्रान्तिज्ञानमिहाज्ञानसंमोहः । येनाज्ञानेन मूढ इत्यस्याज्ञानसंमोह इति प्रतिनिर्देशे तेनाज्ञानेन जनितसंमोह इत्यन्वयो भाव्यः ॥ ७२ ॥

---

**प्र-पा** ॥ १. मु. १-२-१२ ॥ | २. छा-उप. ४-९ ३ ॥

---

शं॥**अथ श्रोतुः इदं फलम्—श्रद्धावान् श्रद्धानः अनसूयश्च असूयावर्जितः सन् इमं ग्रन्थं शृणुयादपि यो नरः—अपिशब्दात् किमुत अर्थज्ञानवान्—सोऽपि पापात् मुक्तः शुभान् प्रशस्तान् लोकान् प्राप्नुयात् पुण्यकर्मणाम् अग्निहोत्रादिकर्मवताम् ॥ ७१ ॥**

**शिष्यस्य शास्त्रार्थग्रहणाग्रहणविवेकबुभुत्सया पृच्छति । तदग्रहणे ज्ञाते पुनः ग्राहयिष्यामि उपायान्तरेणापि इति प्रष्टुः अभिप्रायः । यत्नान्तरं च आस्थाय शिष्यस्य कृतार्थता कर्तव्या इति आचार्यधर्मः प्रदर्शितो भवति—कच्चित् किम् एतत् मया उक्तं श्रुतं श्रवणेन अवधारितं पार्थ त्वया एकाग्रेण चेतसा चित्तेन? किं वा अप्रमादतः? कच्चित् अज्ञानसम्मोहः अज्ञाननिमित्तः सम्मोहः अविविक्तभावः अविवेकः स्वाभाविकः किं प्रणष्टः—यदर्थः अयं शास्त्रश्रवणायासः तव, मम च उपदेष्टृत्वायासः प्रवृत्तः—ते तुभ्यं हे धनञ्जय ॥ ७२ ॥**

अर्जुन उवाच—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३

रा॥मोहः—विपरीतज्ञानं, त्वत्प्रसादान्मम तद्विनष्टं, स्मृतिः—यथावस्थिततत्त्वज्ञानं, त्वत्प्रसादादेव तच्च लब्धम्; अनात्मनि प्रकृतावात्माभिमानरूपो मोहः, परमपुरुषशरीरतया तदात्मकस्य कृत्स्नस्य चिदचिद्वस्तुनः अतदात्माभिमानरूपश्च, नित्यनैमित्तिकरूपस्य कर्मणः परमपुरुषाराधनतया तत्प्राप्त्युपायभूतस्य बन्धकत्वबुद्धिरूपश्च सर्वो विनष्टः ; आत्मनः प्रकृतिविलक्षणत्वतत्स्वभावरहिततताज्ञातृत्वैकस्वभावतापरमपुरुषशेषतातन्नियाम्यत्वैकस्वरूपताज्ञानं,निखिलजगदुद्भवस्थितिप्रलयलीलाशेषदोषप्रत्यनीककल्याणैकस्वरूपस्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजः प्रभृतिसमस्तकल्याणगुणगणमहार्णवपरब्रह्मशब्दाभिधेयपरमपुरुषयाथात्म्यज्ञानंच, एवंरूपपरावरतत्त्वयाथात्म्यविज्ञानतदभ्यासपूर्वकाहरहरुपचीयमानपरमपुरुषप्रीत्येकफलनित्यनैमित्तिककर्मनिषिद्धपरिहारशमदमाद्यात्मगुणनिर्वर्त्यभक्तिरूपतापन्नपरमपुरुषोपासनैकलभ्यो वेदान्तवेद्यः परमपुरुषो वासुदेवस्त्वमिति ज्ञानं च लब्धं, ततश्च बन्धुस्नेहकारुण्यप्रवृद्धविपरीतज्ञानमूलात्सर्वस्मादवसादाद्विमुक्तो गतसंदेहः स्वस्थः स्थितोऽस्मि ; इदानीमेव युद्धादिकर्तव्यताविषयं तव वचनं करिष्ये; यथोक्तं युद्धादिकं करिष्य इत्यर्थः ॥ ७३ ॥

ता॥अथ कृतज्ञतांशं व्यञ्जयन्नर्जुनश्श्रुतफलसिद्ध्या प्रतिवक्ति 'नष्टो मोहः' इति । अर्जुनेनास्यार्थस्येतःपूर्वमनवगमाद्वाक्येन प्रथमं स्मृतेरनुदयात्तन्मूलभूतशब्दजन्योऽनुभव इह स्मृतिशब्देन लक्ष्यत इत्याह—स्मृतिर्यथावस्थिततत्त्वज्ञानमिति । '[1]सं नो देवश्शुभया स्मृत्या संयुनक्तु' इत्यस्य मन्त्रस्य '[2]सं नो बुद्ध्या शुभया संयुनक्ति' इति शाखान्तरे पाठदर्शनात्स्मृतिबुद्धिशब्दावदूरविप्रकर्षेणैकार्थौ युक्ताविति भावः । निवर्त्यमोहस्वरूपं चोपदेशस्यामूलचूडपरामर्शेन व्यनक्ति—अनात्मनीत्यादिना। प्रकृतिविलक्षणत्वं स्वप्रकाशत्वादिभिः विकाराद्यभावात्तत्स्वभावरहितता । स्वस्थः प्रकृतिस्थ इत्यर्थः । उपदेशवचनस्य स्वरूपेणाननुष्ठेयत्वात्तेन तत्प्रतिपाद्यं लक्ष्यत इत्याह—यथोक्तं युद्धादिकमिति । एवं चाभिप्रायः। आदिशब्देन भक्तियोगपर्यन्तग्रहणम् । अननुष्ठानं तु स्मृतिभ्रंशादिति हि वक्ष्यति—'[3]यत्तु तद्भवता प्रोक्तं पुरा केशव सौहृदात् । तत्सर्वं पुरुषव्याघ्र भ्रष्टं मे नष्टचेतसः' इति । प्रतिवक्ष्यति च भगवान्—'[4]श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम् । धर्मस्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान् । अबुद्ध्या माग्रहीर्यस्त्वं तन्मे सुमहदप्रियम्...सहि धर्मस्सुपर्याप्तो ब्रह्मणः परिवेदने'इति ॥

| | |
|---|---|
| प्र-पा ॥ १. तै. २. प्रश्न. १०. अनु॥ | ३. भार-आश्व. अनुगी. १७-६ ॥ |
| २. श्वे-३-४ ॥ | ४. भार-आश्व. अनुगी. १७ ॥ |

शां॥अर्जुन उवाच—नष्टः मोहः अज्ञानजः समस्तसंसारानर्थहेतुः, सागर इव दुरुत्तारः । स्मृतिश्च आत्मतत्त्वविषया लब्धा—यस्याः लाभात् सर्वहृदयग्रन्थीनां विप्रमोक्ष—त्वत्प्रसादात् तव प्रसादात् मया त्वत्प्रसादम् आश्रितेन अच्युत । अनेन मोहनाशप्रश्नप्रतिवचनेन सर्वशास्त्रार्थज्ञानफलम् एतावदेवेति निश्चितं दर्शितं भवति,यतः ज्ञानात् मोहनाशः आत्मस्मृतिलाभश्चेति । तथा च श्रुतौ 'अनात्मविच्छोचामि' इति उपन्यस्य

रा॥धृतराष्ट्राय स्वपुत्राः पाण्डवाश्च युद्धे किं करिष्यन्तीति पृच्छते—
संजय उवाच—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४

इति - एवं वासुदेवस्य वसुदेवसूनोः पार्थस्यच तत्पितृष्वसुः पुत्रस्यच महात्मनो महाबुद्धेस्तत्पदद्वन्द्वमाश्रितस्येमं रोमहर्षणमद्भुतं संवादमहं यथोक्तमश्रौषं श्रुतवानहम्॥

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम्।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतस्स्वयम् ॥ ७५

व्यासप्रसादाद्व्यासानुग्रहेण दिव्यचक्षुश्श्रोत्रलाभात् एतत्परं योगाख्यं गुह्यं योगेश्वरात् ज्ञानबलैश्वर्यवीर्यशक्तितेजसां निधेर्भगवतः कृष्णात् स्वयमेव कथयतः साक्षा-

ता॥'मामकाः पाण्डवाश्चैव किमकुर्वत संजय' इति प्रश्ने कृत्स्नं संगमयतीत्याह—धृतराष्ट्रायेति। 'महात्मनः' इत्युक्तं व्यनक्ति—तत्पदद्वन्द्वमाश्रितस्येति। 'कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः' इति ह्यन्यत्रोक्तम्। अत्रच 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्' इति। अद्भुतत्वातिशयाद्रोमहर्षणत्वम्। यथोक्तमश्रौषमिति—यथा ताभ्यामुक्तं, तत्र ममाश्रुतांशो नास्तीत्यर्थः। एतेन यथार्थदर्शित्वं व्यञ्जितम्। यद्वा-यथा तव मयोक्तम्, एवमेव श्रुतवानसि, ततश्च यथादृष्टार्थवादित्वं व्यञ्जितं भवति ॥ ७४ ॥

मन्दस्य मोहनकालुष्यनिवृत्तिलक्षणप्रसादस्यात्राभावात्—व्यासानुग्रहेणेत्युक्तम्। देवैरप्यदृश्यस्य श्रीविश्वरूपस्य दर्शनार्थं दूरस्थवाक्यश्रवणार्थंच अनुग्रहावान्तरव्यापारमाह—दिव्यचक्षुश्श्रोत्रलाभादिति। अतीन्द्रियादिग्रहणसामर्थ्यादिमात्रेणात्र दिव्यत्वम्। एतदिति नपुंसकनिष्पत्त्येयोगशब्दं विशेषणीकरोति—योगाख्यमिति। परं गुह्यमित्यकर्मणि योग्यताभिप्रायम्। तथाभूतमपि हि मया श्रुतमिति व्यासमाहात्म्यव्यञ्जनम्। 'योगेश्वरात्' इत्यत्र योगशब्दः कल्याणगुणयोगपरः। 'एतां विभूतिं योगंच' इति प्रागुक्तवदित्याह—ज्ञानेति। स्वयमेव कथयतः, नतु परैर्वाचयत इत्यर्थः। तेन वक्तृवैलक्षण्योक्तिः। यथा 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयम्' इति। साक्षाच्छ्रुत-

प्र-पा॥ १. गी. १-१॥ २. महाभारते॥ ३. गी. २-७॥ ४. भार-शा-मो. ३५९-६८॥

शां॥आत्मज्ञानेन सर्वग्रन्थीनां विप्रमोक्षः उक्तः'भिद्यते हृदयग्रन्थिः'इति'तत्र को मोहः कः शोकः एकत्वमनुपश्यतः'इति च मन्त्रवर्णः। अथ इदानीं त्वच्छासने स्थितः अस्मि गतसन्देहः मुक्तसंशयः। करिष्ये वचनं तव। अहं त्वत्प्रसादात् कृतार्थः, न मे कर्तव्यम् अस्ति इत्यभिप्रायः ॥ ७३ ॥

परिसमाप्तः शास्त्रार्थः। अथ इदानीं कथासम्बन्धप्रदर्शनार्थं संजयः उवाच—इति एवम् अहं वासुदेवस्य पार्थस्यच महात्मनः संवादम् इमं यथोक्तम् अश्रौषं श्रुतवान् अस्मि अद्भुतम् अत्यन्तविस्मयकरं रोमहर्षणं रोमाञ्चकरम् ॥ ७४ ॥

तं च इमम्—व्यासप्रसादात् ततः दिव्यचक्षुर्लाभात् श्रुतवान् इमं संवादं गुह्यतमं परं योगं—योगार्थत्वात् ग्रन्थोऽपि योगः—संवादम् इमं योगमेव वा योगेश्वरात्

या॥च्छ्रुतवानहम् ॥ ७५ ॥

राजन् संस्मृत्यसंस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामिच मुहुर्मुहुः ॥ ७६

केशवार्जुनयोरिमं पुण्यमद्भुतं संवादं साक्षाच्छ्रुतं स्मृत्वा मुहुर्मुहुर्हृष्यामि ॥ ७६ ॥

तच्च संस्मृत्यसंस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान् राजन् हृष्यामिच पुनःपुनः ॥ ७७

तच्चार्जुनाय प्रकाशितमैश्वरं हरेरत्यद्भुतं रूपं मया साक्षात्कृतं संस्मृत्यसंस्मृत्य हृष्यतो मे महान् विस्मयो जायते; पुनःपुनश्च हृष्यामि ॥ ७७ ॥

किमत्र बहुनोक्तेन—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८

ॐ तत्सदिति.

इति श्रीमद्भगवद्गीतासूपनिषत्सु परब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम अष्टादशोऽध्यायः ॥ १८ ॥

श्रीकृष्णाय परब्रह्मणे नमः ॥

**तृतीयषट्कं संपूर्णम्.**

---

ता॥**वानहमिति**—न तु विवस्वदर्जुनादितच्छिष्यद्वारेत्यर्थः। यद्वा दूरस्थोऽपि प्रत्यक्षं श्रुतवानिति॥७५॥

अद्भुततरत्वमाह—'राजन्' इत्यादिना श्लोकद्वयेन । पुण्यं श्रवणमात्रेणापि ज्ञानयज्ञादिवत्पावनम् । अद्भुतं शब्दताऽर्थतश्च आश्चर्यावहम् ॥ ७६ ॥

तच्च रूपमित्येतत्सर्वजनप्रत्यक्षवसुदेवतनयरूपाद्व्यवच्छेदार्थमित्याह—**अर्जुनाय प्रकाशितमैश्वरं रूपमिति** । 'संस्मृत्य' इत्यस्य समानकर्तृकत्वाय हृष्यामीति समभिव्याहारानुसारेण — **हृष्यत** इत्युपात्तम् । दृष्टंच फलं महत्तरमित्यस्य श्लोकस्य भावः। ॥ ७७ ॥

सुयोधनविजयबुभुत्सया कृतस्य प्रश्नस्य सहसा साक्षादुत्तरं वक्तुमशक्नुवन् 'अर्धोक्ताः कुरुपाञ्चालाः' इति मत्वा गूढाभिसंधिस्संवादाद्भुतत्वादिकमुक्तवान् । तावताप्यजानतस्सर्वात्मनान्धस्य साक्षादुत्तरमाहेत्याह—**किमत्र बहुनेति** । अनभिप्रायज्ञस्य ते भगवतार्जुनायाध्यात्मोपदेशवैश्वरूप्यप्रकाशनादिभिः पाण्डवविजयसूचकैरलम्; सूचितमेव स्पष्टं वदामीत्युच्यत इति भाव ।

---

**प्र-पा ॥ १ ॥**

---

शं॥**कृष्णात् साक्षात् कथयतः स्वयं न परम्परया ॥ ७५ ॥**

**हे राजन् धृतराष्ट्र संस्मृत्यसंस्मृत्य प्रतिक्षणं संवादम् इमम् अद्भुतं केशवार्जुनयोः पुण्यम् इमं श्रवणेनापि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणम् ॥ ७६ ॥**

**तच्च संस्मृत्यसंस्मृत्य रूपम् अत्यद्भुतं हरेः विश्वरूपं विस्मयो मे महान् राजन् हृष्यामि च पुनःपुनः ॥ ७७ ॥**

रा॥यत्र योगेश्वरः कृत्स्नस्योच्चावचरूपेणावस्थितस्य चेतनस्याचेतनस्य च वस्तुनो येये स्वभावयोगाः, तेषां सर्वेषां योगानामीश्वरः स्वसंकल्पायत्तस्वेतरसमस्तवस्तुस्वरूपस्थितिप्रवृत्तिभेदः कृष्णः वसुदेवसूनुः, यत्र च पार्थो धनुर्धरः तत्पितृष्वसुः पुत्रः तत्पदद्वन्द्वैकाश्रयः ; तत्र श्रीर्विजयो भूतिर्नीतिश्च ध्रुवा निश्चला ; इति मतिर्ममेति ॥ ७८ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये अष्टादशोऽध्यायः ॥ १८ ॥

श्रीमते रामानुजायनमः ॥

तृतीयषट्कं संपूर्णम्.

---

ता॥यत्र यस्मिन् पक्ष इत्यर्थः । योगेश्वरशब्दस्य 'कथयतस्स्वयम्' इत्यत्राततमत्वाय प्रागुक्तादर्थादर्थान्तरकथनम्, अनेकार्थसंभवात्प्रकरणानुगुण्येन तत्ताद्विशेषपरिग्रहोपपत्तेश्च । ईश्वरशब्दस्य नियन्तव्यसाकाङ्क्षतया योगशब्देन नियन्तव्यविशेषसमर्पणंच युक्ततमम्: अतो विवक्षितविजयाद्यनुगुणमर्थमाह—कृत्स्नस्येत्यादिना । तत्र फलितमाह—स्वसंकल्पेति । अवस्थान्तरेऽपि श्यामभूतः ; अतः कृष्णशब्दोऽत्रावतारदशायामपि योगेश्वरत्वेनाजहत्स्वस्वभावत्वसूचनार्थं इत्यभिप्रायेणाह—वसुदेवसूनुरिति। पार्थसंबन्धविशेषोऽप्यनेन सूचितः । अत एवहि पार्थशब्द एवं व्याख्यायते—तत्पितृष्वसुः पुत्र इति । 'विसृज्य सशरं चापम्' इति प्रागुक्तावस्थाव्यतिरेकपरोऽत्र धनुर्धरशब्दः भगवदनुशिष्टयथोक्तकरणार्थतया गाण्डीवाख्यधनुर्ग्रहणद्योतनार्थः । तत्र विशिष्टोपकरणविशेषवीर्यादिविशेषोऽप्यन्तर्नीतः । 'पार्थस्य च महात्मनः' इति प्रागुक्तमहामतित्वं पार्थशब्देन सूचितमित्याह—तत्पदद्वन्द्वैकाश्रयइति । नह्यसौ त्वत्पुत्रवत्कृष्णमभ्यर्थ्य निस्सारान्परिकरत्वेन परिजग्राहेति भावः। 'तत्र' इति सामान्यनिर्देशः प्रत्यक्षपारुष्यपरिहारार्थः । श्रीः - राज्यादिभोग्यसमृद्धिरूपा । विजयः—शत्रुनिरासः। 'तत्र ध्रुवः' इति विपरिणामः । भूतिः - ऐश्वर्यम्, 'विभूतिर्भूतिरैश्वर्यम्' इति पर्यायपाठात् । तेनास्य पुरुषस्य प्रभुत्वादिशक्तियोगो विवक्षितः । उत्पन्नायास्समृद्धेरुत्तरोत्तराभिवृद्धिरूपभवनं-भूतिः, नीतिः- अर्थशास्त्रजन्यकर्तव्यनिश्चयः ; तच्चोदिता धर्माविरुद्धा वा वृत्तिः; पड्प्रश्नैरवहितैरपि युष्माभिश्चतुर्भिरप्युपायैरकम्पनीयो नयो ध्रुवशब्दाभिप्रेत इत्याह—निश्चलेति । 'मतिर्मम' इत्यस्यान्वयार्थमितिशब्दोऽध्याहृतः । ममैव मतिः—'विद्याराजन्न ते विद्या मम विद्या न हीयते । विद्याहीनस्तमोध्वस्तो नाभिजानासि केशवम् । मायां न सेवे भद्रं ते न वृथा धर्ममाचरे । शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्' इति । अतस्ते ध्रुवा नैव मतिः, ममत्वेवं समीचीना मतिस्संजातेति भावः॥ ७८ ॥

कृष्णस्तत्त्वं परं तत्परमपिच हितं तत्पदैकाश्रयत्वं
शास्त्रार्थोऽयं च षट्कैस्त्रिभिरिह कथितस्तत्र पूर्वत्र षट्के ।

---

प्र-पा ॥ १. गी. १-४७ ॥
२. गी. १८-७४॥
३. नामलिङ्गानुशासने. १. काण्डे. स्वर्गवर्गे ॥
४. भारते-उद्यो. ६८-२-५॥

---

शं॥किं बहुना—यत्र यस्मिन् पक्षे योगेश्वरः सर्वयोगानाम् ईश्वरः—तत्प्रभवत्वात् सर्वयोगबीजस्य—कृष्णः, यत्र पार्थः यस्मिन् पक्षे धनुर्धरः गाण्डीवधन्वा, तत्र श्रीः तस्मिन् पाण्डवानां पक्षे श्रीः विजयः, तत्रैव भूतिः श्रियो विशेषः विस्तरः भूतिः

ता ॥ भक्त्यर्थस्वात्मदृष्टेः करयुगलदशा मध्यमे भक्त्युपाय
स्स्वोक्तानुष्ठानवृत्तिं द्रढयितुमखिलं प्रोक्तमन्तेऽप्यशोधि ॥
अध्यायैश्शिष्यमोहस्तदुपशमविधिः कर्मयोगोऽस्य भेदा-
स्तत्सौकर्यादियोगस्तदुचितमहिमा भूतिकामादिभेदः ।
भक्तिस्तन्मूलभूमा भजनसुलभता भक्तिशैघ्र्यादि जीव-
त्रैगुण्यं शासिताज्ञा तदधिगमपरस्सारवर्गश्च गीताः ॥
* इत्यादिस्सर्वयोगो भगवति परमैकान्त्यसंप्रीतियुक्तं
येषामन्योन्ययोगो भवति च कलया नित्यनैमित्तिकानां
त्रिष्वप्येतेषु योगं परममितफलं वक्तुमन्यत्प्रसक्तम् ॥
शुद्धादेशवशंवदीकृतयतिक्षोणीशवाणीशता
प्रज्ञातल्पपरिष्कृतश्रुतिशिरःप्रासादमासेदुषी ।
नित्यानन्दविभूतिसन्निधिसदासामोददामोदर-
द्वित्रालिङ्गनदौर्ललित्यललितोन्मेषा मनीषास्तु मे ॥
तत्त्वं यत्प्रणवे धनञ्जयरथेऽप्यग्रे दरीदृश्यते
तच्चित्तो भुवि वेंकटेश्वरकविर्भक्तोऽनुकम्प्यस्सताम् ।
तत्तादृग्गुरुदृष्टिपातमहिमग्रस्तेन यच्चेतसा
गीताविष्णुपदी यतीश्वरवचस्तीर्थैरवागाह्यत ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु
श्रीभगवद्रामानुजविरचितश्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥
श्रीमते निगमान्तमहादेशिकाय नमः.
तृतीयषट्कं संपूर्णम्.
शास्त्रं च समाप्तम् ॥

---

प्र-पा ॥ * अत्र ग्रन्थपातः । तालपत्रकोशेष्वप्येवमेव ॥

---

शं॥ध्रुवा अव्यभिचारिणी नीतिः नयः, इत्येवं मतिः मम इति ॥ ७८ ॥

इति श्रीपरमहंस परिव्राजकाचार्य गोविन्दभगवत्पूज्यपादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ
श्रीभगवद्गीताभाष्ये अष्टादशोऽध्यायः ॥ १८ ॥
तृतीयषट्कं संपूर्णम्.



श्रीः

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः.

ईश्वरे कर्तृताबुद्धिस्सत्त्वोपादेयतान्तिमे ।
स्वकर्मपरिणामश्च शास्त्रसारार्थ उच्यते ॥ २२ ॥

---

## श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा.

तदेतत्पूर्वाध्यायसंगतिप्रदर्शनपूर्वकं व्याचष्टे—'अतीतेनाध्यायद्वयेनाभ्युदयनिश्श्रेयससाधनभूतं वैदिकमेव यज्ञतपोदानादिकं कर्म; नान्यत्; वैदिकस्य कर्मणस्सामान्यलक्षणं प्रणवान्वयः; तत्र मोक्षाभ्युदयसाधनयोर्भेदस्तत्सच्छब्दनिर्देश्यत्वेन; मोक्षसाधनं च कर्मफलाभिसन्धिरहितं यज्ञादिकं, तदारम्भस्सत्त्वोद्रेकाद्भवति; सत्त्वोद्रेकश्च सात्त्विकाहारसेवयेत्युक्तम्; अनन्तरं मोक्षसाधनतया निर्दिष्टयोस्त्यागसंन्यासयोरैक्यं, त्यागस्य स्वरूपं भगवति सर्वेश्वरे सर्वकर्मणां कर्तृत्वानुसंधानं सत्त्वरजस्तमसां कार्यवर्णनेन सत्त्वगुणस्योपादेयत्वं स्ववर्णोचितानां कर्मणां परमपुरुषाराधनभूतानां परमपुरुषप्राप्तिनिर्वर्तनप्रकारः, कृत्स्नस्यच गीताशास्त्रस्य सारार्थो भक्तियोग इत्येते प्रतिपाद्यन्ते'—इति । अत्र त्यागसंन्यासशब्दावेकार्थाविति भगवदुक्तेनोत्तरेण ख्यापितं भाष्ये । सर्वेश्वरे कर्तृत्वानुसंधानंच 'दैवं चैवात्र पञ्चमम्' इत्यत्रैव दर्शितम्—'अत्र कर्महेतुकलापे दैवं पञ्चमम् । परमात्मान्तर्यामी कर्मनिष्पत्तौ प्रधानहेतुरित्यर्थः । उक्तं हि 'सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनंच' इति । वक्ष्यति च—'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' इति । परमात्मायत्तंच जीवात्मनः कर्तृत्वं 'परात्तु तच्छ्रुतेः' इति प्रतिपादितम् । नन्वेवं परमात्मायत्ते जीवात्मनः कर्तृत्वे जीवात्मा कर्मण्यनियोज्यो भवतीति विधिनिषेधशास्त्राण्यनर्थकानि स्युः । इदमपि चोद्यं सूत्रकारेण परिहृतं—'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' इति । एतदुक्तं भवति—परमात्मना दत्तैस्तदाधारैश्च करणकलेबरादिभिस्तदाहितशक्तिभिस्स्वयं च जीवात्मा तदाधारस्तदाहितशक्तिस्सन् कर्मनिष्पत्तये स्वेच्छया करणाद्यधिष्ठानाकारं प्रयत्नं चारभते । तदन्तरवस्थितः परमात्मा स्वानुमतिदानेन तं प्रवर्तयतीति जीवस्यापि स्वबुद्ध्यैव प्रवृत्तिहेतुत्वमस्ति ; यथा गुरुतरशिलामहीरुहादिचलनादिफलप्रवृत्तिषु बहुपुरुषसाध्यासु बहूनां हेतुत्वं विधिनिषेधभाक्त्वं च'—इति। तत्र शास्त्रसारार्थः 'सर्वगुह्यतमम्' इत्यादिना सादरं संमुखीकृत्य 'मन्मना भव मद्भक्तः' 'सर्वधर्मान्परित्यज्य' इति श्लोकद्वयेन शिष्टः । चरमश्लोकार्थश्च तात्पर्यचन्द्रिकायां निक्षेपरक्षायां चास्माभिः यथाभाष्यं यथासंप्रदायंच समस्तपरपक्षप्रतिक्षेपपूर्वकमुपपादितः । तत्रायमस्मदीयसङ्ग्रहः—'सुदुष्करेण शोचेद्यो येनयेनेष्टहेतुना । सस तस्याहमेवेति चरमश्लोकसंग्रहः' इति । सारार्थो भक्तियोग इति भाष्ये त्वङ्गाधिकारे प्रपत्तिं प्रत्यपि भक्तेरङ्गित्वेन प्राधान्यात् ॥ २२ ॥

---

प्र-पा ॥ १- शारी. २-३-४१ ॥

कर्मयोगस्तपस्तीर्थदानयज्ञादिसेवनम् ।
ज्ञानयोगो जितस्वान्तैः परिशुद्धात्मनि स्थितिः ॥ २३ ॥
भक्तियोगः परैकान्तप्रीत्या ध्यानादिषु स्थितिः ।
त्रयाणामपि योगानां त्रिभिरन्योन्यसङ्गमः ॥ २४ ॥
नित्यनैमित्तिकानां च पराराधनरूपिणाम् ।
आत्मदृष्टेस्त्रयोऽप्येते योगद्वारेण साधकाः ॥ २५ ॥

अथ दशभिः श्लोकैस्सुखग्रहणाय कर्मयोगज्ञानयोगभक्तियोगादीनां स्वरूपादिकं विविनक्ति। तत्र कर्मयोगस्य लक्षणं पूर्वमेव दर्शितमिति कृत्वा तत्तदधिकारिणां ज्ञानशक्तियोग्यतानुगुण्येन यथाधिकारं परिग्रहार्थंच चतुर्थोक्तानवान्तरभेदाननुक्तानपि सर्वानादिशब्देन संगृह्णन्नुदाहरति । आफलोदयं सादरं निरन्तरपरिग्रहोऽत्र सेवनम् । अथ तत्साध्यस्य ज्ञानयोगस्याधिकारिप्रदर्शनपूर्वकं लक्षणमाह—निरन्तरचिन्तनरूपेणेति शेषः । तेन तत्फलतदुपायज्ञानाभ्यां व्यवच्छेदः ॥ २३ ॥

अथान्तरङ्गैस्सह भक्तियोगं लक्षयति—परस्मिन् ब्रह्मण्येकान्तेन प्रीतिः परैकान्तप्रीतिः; तेन 'महनीयविषये प्रीतिर्भक्तिः' इति लक्षणं सूचितं 'स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इत्याद्यनुसारेण । लक्ष्यस्वरूपं ध्यानशब्देनोक्तम् । आदिशब्देनार्चनप्रणामाद्यन्तरङ्गवर्गसंग्रहः । उक्तंच वेदार्थसंग्रहे 'अशेषजगद्धितानुशासनश्रुतिनिकरशिरसि समधिगतोऽयमर्थः—जीवपरयाथात्म्यज्ञानपूर्वकवर्णाश्रमधर्मेतिकर्तव्यताकपरमपुरुषचरणयुगलध्यानार्चनप्रणामादिरत्यर्थप्रियस्तत्प्राप्तिफलः' इति[1] ननु कर्मयोगेऽप्यात्मज्ञानमाराध्यप्रीतिश्चानुवर्तते, ज्ञानयोगेऽप्यन्तःकरणशुद्ध्यर्थं नियतं कर्म न त्याज्यं तदाराध्येश्वरभक्तिश्च। एवं भक्तियोगेऽपि तदितरानुवृत्तिस्सिद्धा । अतो विभागानुपपत्तिरित्यत्राह—प्रधानभूते कस्मिंश्चित्क्षीरशर्करादिन्यायेन गुणतया इतरानुप्रवेशो न विभागभञ्जक इति भावः॥२४॥

नन्वेवं परैकान्तप्रीतिस्त्रिष्वपि समाना । ऐकान्त्यंचानन्यदेवताकत्वपर्यन्तम्।यथोक्तं मोक्षधर्मे—'ब्रह्माणं शितिकण्ठं च याश्चान्या देवतास्स्मृताः।प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम्'इति।आश्वमेधिकेच'अनन्यदेवताभक्ता ये मद्भक्तजनप्रियाः।मामेव शरणं प्राप्तास्ते मद्भक्ताः प्रकीर्तिताः' इति । तपश्चाग्नीन्द्रादिनानादेवतासंकीर्णानां वर्णाश्रमधर्माणामैकान्त्यविरोधात्त्रिष्वपि योगेषु तत्परित्यागः प्राप्त इत्यत्राह—अत्र त्रिभिस्सङ्गम इत्यर्थतो बुद्ध्या विभज्यान्वेतव्यम्।अयमभिप्रायः'"नियतस्य""यतः प्रवृत्तिः' 'आचारप्रभवः' 'वर्णाश्रमाचारवता' इत्यादिभिर्वर्णाश्रमधर्मेतिकर्तव्यताकत्वसिद्धेः.अग्नीन्द्रादिशब्दानामपि प्रतर्दनविद्यान्यायेन तच्छरीरकपरमात्मपर्यन्तत्वानुसंधानात्, 'साक्षादप्यविरोधं जैमिनिः' इति न्यायेन यज्ञाग्रहराध्यायोक्तप्रक्रियया च साक्षात्प्रतिपादकत्वेन वा तत्तत्कर्मणामपि परमपुरुषाराधनत्व संभवात्, तदनुष्ठातुरनन्याराधकत्वसिद्धेरैकान्त्यं प्रतिष्ठितम्—इति । एतेन कर्मयोगेऽपि नित्यनैमित्तिकानामिति कर्तव्यतात्वं सूचितम्। तथा 'सर्वेऽप्येते यज्ञविदः' इति श्लोके भाष्यं 'द्रव्ययज्ञप्रभृतिप्राणायामपर्यन्तेषु कर्मयोगभेदेषु स्वसमीहितेषु प्रवृत्ता एते सर्वे'सह यज्ञैः प्रजास्सृष्ट्वा'इत्यभिहितमहायज्ञपूर्वकनित्यनैमित्तिककर्मरूपयज्ञविदस्तन्निष्ठाः तत एव क्षपितकल्मषा यज्ञशिष्टामृतेन शरिरधारणं कुर्वन्तः

**प्र-पा** ॥ १. लैङ्गे. उत्तर॥
२. भार-मो. ३५०-३६ ॥
३. भार. आश्व. १०४-९१ ॥
४. गी. १७-७ ॥
५. गी. १७-४६ ॥
६. भार. अनु. २५४-१३९॥
७. वि. पु. ३-७-९॥
८ शारी १॥
९. भार-शान्ति-मो. ३४९-अध्या ॥
१०. गी. ४-३०॥

**निरस्तनिखिलाज्ञानो दृष्ट्वात्मानं परानुगम् ।**
**प्रतिलभ्य परां भक्तिं तयैवाप्नोति तत्पदम् ॥ २६ ॥**

एते कर्मयोगे व्याप्टतास्सनातनं ब्रह्म यान्ति' इति । 'एवं बहुविधा यज्ञाः' इत्यत्र चोक्तम्—'एवं हि बहुप्रकाराः कर्मयोगा ब्रह्मणो मुखे वितताः, आत्मयाथात्म्यावाप्तिसाधनतया स्थिताः, तानुक्तलक्षणानुक्तभेदान्कर्मयोगान्त्सर्वान् कर्मजान् विद्धि—अहरहरनुष्ठीयमाननित्यनैमित्तिककर्मजान् विद्धि' इति । 'भोक्तारं यज्ञतपसाम्' इति श्लोकमवतारयंश्चैवमाह --'उक्तस्य नित्यनैमित्तिककर्मेतिकर्तव्यताकस्य कर्मयोगस्य योगशिरस्कस्य सुशकत्वमाह' इति ॥

अथ त्रयाणां योगानां परमभक्तिजनने प्रत्यगात्मदर्शनरूपमवान्तरव्यापारं सहेतुकमाह— आत्मेति। योगोऽत्र समाधिरूपमन्तःकरणैकाग्र्यं, तत्साध्यसाक्षात्कारो दृष्टिः। ननु यद्यपि कर्मयोगस्य ज्ञानयोगव्यवधानमन्तरेणापि आत्मावलोकनसाधनत्वं पूर्वमेवोक्तं, तथापि भक्तियोगस्य तत्साधकत्वमयुक्तं, तस्यात्मावलोकनपूर्वकत्वादिति ; मैवं, भक्तिनिष्ठाया एव पर्वभेदेन सर्वोपपत्तेः ज्ञानदर्शनप्राप्तीनामविशेषेण भक्तिसाध्यत्वमुच्यते; तच्च पर्वभेदमन्तरेण नोपपद्यते। अतएव ह्यात्मावलोकनानन्तरं—'मद्भक्तिं लभते पराम्' इति परशब्देन विशेष्यते । अत आत्मावलोकनरहितस्याऽद्यतनभक्तानामिव स्तुतिनमस्कारकीर्तनादिनिष्ठया सेवारूपत्वादभिव्यक्तया भक्तिशब्दाभिलप्यया आत्मावलोकनमुपपद्यते । दर्शितश्च परावरभक्तिविभागो वेदार्थसंग्रहे-'सोऽयं परब्रह्मभूतः पुरुषोत्तमः निरतिशयपुण्यसंचयक्षीणाशेषजन्मोपचितपापराशेः परमपुरुषचरणारविन्दशरणागतिजनिततदाभिमुख्यस्य सदाचार्योपदेशोपबृंहितशास्त्राधिगततत्त्वयाथात्म्यावबोधपूर्वकाहरहरुपचीयमानशमदमशौचक्षमार्जवभयाभयस्थानविवेकदयाहिंसाद्यात्मगुणोपेतवर्णाश्रमोचितपरमपुरुषाराधनरूपनित्यनैमित्तिककर्मोपसंभूतनिषिद्धपरिहारनिष्ठस्य परमपुरुषचरणयुगलन्यस्तात्मात्मीयस्य तद्भक्तिकारितानवरतस्तुतिस्मृतिनमस्कृतियतनकीर्तनगुणश्रवणवचनध्यानार्चनप्रणामादिभिः प्रीतः परमकारुणिकः पुरुषोत्तमप्रसादविध्वस्तस्वान्तध्वान्तस्यानन्यप्रयोजनानवरतनिरतिशयप्रियविशदतमप्रत्यक्षतापन्नानुध्यानरूपभक्त्येकलभ्यः' इति । तदुक्तं परमगुरुभिर्भगवद्यामुनाचार्यपादैः 'उभयपरिकर्मितस्वान्तस्यैकान्तिकात्यन्तिकभक्तियोगलभ्यः' इति ॥ २५ ॥

एवं यथाधिकारं परिगृहीतैस्त्रिभिरात्मावलोकनसिद्धिद्वारा परमभक्त्युत्पादनप्रकारं परमभक्तेरेव प्रकृष्टायाः परमप्राप्तिसाधनत्वंच दर्शयति-निरस्तेति। उपायविरोधिसर्वाज्ञाननिवृत्तिरिह'निरस्तनिखिलाज्ञानः'इत्यनेनविवक्षिता।परानुगं-परानुचरं-परशेषतैकरसमित्यर्थः।यथोच्यते-'नायं देवो न मर्त्यो वा न तिर्यक् स्थावरोऽपि वा। ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मनः'इति। आह च सर्वज्ञो मन्त्रराजपदस्तोत्रे-'दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः । अतोऽहमपि ते दास इति मत्वा नमाम्यहम्' इति । प्रतिलभ्य-परमात्मसकाशात्प्राप्येत्यर्थः। तयैव परमभक्तिरूपविपाकापन्नयेति शेषः । अत एवकारेण नैरपेक्ष्यमव्यहितत्वंच व्यज्यते। तत्पदं तच्चरणं, पद्यत इति व्युत्पत्त्या पदं मुक्तप्राप्यतया सिद्धं परमपुरुषस्याप्राकृतं स्थानं स्वरूपं वा । तदेतच्छ्लोकद्वयेन गीयते—'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम्।।भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इति ॥ २६ ॥

प्र-पा ॥ १. गी. ४-३२ ॥
२. गी. ५-२१ ॥
३. गी. १८-५४ ॥
४. वेदार्थसंग्रहे ॥
५. सिद्धित्रये. आत्मसिद्धौ ॥
६ ॥
७ ॥
८. गी. १८-५४-५५ ॥

